## ॥ ऋग्वेदीब्रह्मकर्माचे विषय १३३ ची अनुक्रमणिका प्रारंभः ॥

## ॥ १ ॥ ॥ प्रातःस्मरण प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ यस्यमाताउमादेवीपितायस्यतुशंकरः ॥ मूषकोवाहनंयस्यसमांपातुविनायकः ॥
॥ १ ॥ महर्षिर्भगवान्व्यासःकृत्वेमांसंहितांपुरा ॥ श्लोकैश्चतुर्भिर्धर्मात्मापुत्रमध्यापयच्छुकम् ॥ २ ॥ मा
तृपितृसहस्राणिपुत्रदारशतानिच ॥ संसारेष्वनुभूतानियांतियास्यंतिचापरे ॥ ३ ॥ हर्षस्थानसहस्राणिभ
यस्थानशतानिच ॥ दिवसेदिवसेमूढमाविशंतिनपंडितम् ॥ ४ ॥ ऊर्ध्वबाहुर्विरौत्येषनचकश्चिच्छृणोतु
मे ॥ धर्मादर्थश्चकामश्चसकिमर्थंनसेव्यते ॥ ५ ॥ नजातुकामान्नभयान्नलोभाद्धर्मंत्यजेज्जीवितस्यापिहे
तोः ॥ धर्मोनित्यःसुखदुःखेत्वनित्योजीवोनित्योहेतुरस्यत्वनित्यः ॥ ६ ॥ इमांभारतसावित्रींप्रातरुत्थाययः
पठेत् ॥ सभारतफलंप्राप्यपरंब्रह्माधिगच्छति ॥ ७ ॥ प्रातःस्मरामिखलुतत्सवितुर्वरेण्यंरूपंहिमंडलमृ
चोत्थतनुर्यजूंषि ॥ सामानियस्यकिरणाःप्रभवादिहेतुंब्रह्माहरात्मकमलक्ष्यमचिंत्यरूपम् ॥ १ ॥ प्रातर्न
मामितरणिंतनुवाङ्मनोभिर्ब्रह्मेंद्रपूर्वकसुरैर्नुतमर्चितंच ॥ वृष्टिप्रमोचनविनिग्रहहेतुभूतंत्रैलोक्यपालनपरं
त्रिगुणात्मकंच ॥ २ ॥ प्रातर्भजामिसवितारमनंतशक्तिंपापौघशत्रुभयरोगहरंपरंच ॥ तंसर्वलोककलना
त्मककालमूर्तिंगोकंठबंधनविमोचनमादिदेवम् ॥ ३ ॥ श्लोकत्रयमिदंभानोःप्रातःप्रातःपठेत्तुयः ॥ सस
र्वव्याधिनिर्मुक्तःपरंसुखमवाप्नुयात् ॥ ४ ॥ प्रातःस्मरामिगणनाथमनाथबंधुंसिंदूरपूरपरिशोभितगंडयुग्म

मू ॥ उद्दंडविघ्नपरिखंडणचंडदंडमाखंडलादिसुरनायकवृंदवंद्यम् ॥ १ ॥ प्रातर्नमामिचतुराननवंद्यमान
मिष्टानुकूलमखिलंचवरंददानम् ॥ तंतुंदिलंद्विरसनप्रिययज्ञसूत्रंपुत्रंविलासचतुरंशिवयोःशिवाय ॥ २ ॥
प्रातर्भजाम्यभयदंखलुभक्तशोकदावानलंगणविभुंवरकुंजरास्यम् ॥ अज्ञानकाननविनाशनहव्यवाहमुत्सा
हवर्धनमहंसुतमीश्वरस्य ॥ ३ ॥ श्लोकत्रयमिदंपुण्यंसदासाम्राज्यदायकम् ॥ प्रातरुत्थायसततंयःपठेत्प्र
यतःपुमान् ॥ ४ ॥ प्रातःस्मरामिशरदिंदुकरोज्ज्वलाभांसद्रत्नवत्सकलकुंडलहारशोभाम् ॥ दिव्यायुधो
र्ज्झितसुनीलसहस्रहस्तांरक्तोत्पलाभचरणांभवतींपरेशाम् ॥ १ ॥ प्रातर्नमामिमहिषासुरचंडमुंडशुंभासुर
प्रमुखदैत्यविनाशदक्षाम् ॥ ब्रह्मेंद्ररुद्रमुनिमोहनशीललोलांचंडींसमस्तसुरमूर्तिमनेकरूपाम् ॥ २ ॥ प्रा
तर्भजामिभजतामखिलार्थदात्रींधात्रींसमस्तजगतांदुरितापहंत्रीम् ॥ संसारबंधनविमोचनहेतुभूतांमायांप
रांसमधिगम्यपरस्यविष्णोः ॥ ३ ॥ श्लोकत्रयमिदंदेव्याश्चंडिकायाःपठेन्नरः ॥ सर्वान्कामानवाप्नोतिवि
ष्णुलोकेमहीयते ॥ ४ ॥ प्रातःस्मरामिभवभीतिहरंसुरेशंगंगाधरंवृषभवाहनमंबिकेशम् ॥ खट्वांगशूलवर
दाभयहस्तमीशंसंसाररोगहरमोषधमद्वितीयम् ॥ १ ॥ प्रातर्नमामिगिरिशंगिरिजार्धदेहंसर्गस्थितिप्रलयका
रणमादिदेवम् ॥ विश्वेश्वरंविजितविश्वमनोभिरामंसंसाररोगहरमौषधमद्वितीयम् ॥ २ ॥ प्रातर्भजामिशि
वमेकमनंतमाद्यंवेदांतवेद्यमनघंपुरुषंमहांतम् ॥ नामादिभेदरहितंषड्भावशून्यंसंसाररोगहरमौषधमद्विती
यम् ॥ ३ ॥ प्रातःसमुत्थायशिवंविचिंत्यश्लोकत्रयंचानुदिनंपठंति ॥ तेदुःखजालंबहुजन्मसंचितंहित्वाप



दंयांतितदेवशंभोः ॥ ४ ॥ प्रातःस्मरामिभवभीतिमहार्तिशांत्यैनारायणंगरुडवाहनमब्जनाभम् ॥ ग्राहा
भिभूतवरवारणमुक्तिहेतुंचक्रायुधंतरुणवारिजपत्रनेत्रम् ॥ १ ॥ प्रातर्नमामिमनसावचसाचमूर्ध्नापादारविं
दयुगलंपरमस्यपुंसः ॥ नारायणस्यनरकार्णवतारणस्यपारायणप्रवणविप्रपरायणस्य ॥ २ ॥ प्रातर्भजामि
भजतामभयंकरंतंप्राक्सर्वजन्मकृतपापभयापहत्यै ॥ योग्राहवक्त्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशमकरो
द्धृतशंखचक्रः ॥ ३ ॥ श्लोकत्रयमिदंपुण्यंप्रातःप्रातःपठेत्तुयः ॥ लोकत्रयगुरुस्तस्मैदद्यादात्मपदंहरिः ॥
॥ ४ ॥ प्रातःस्मरामिरघुनाथमुखारविंदंमंदस्मितंमधुरभाषिविशालभालम् ॥ कर्णावलंबिचलकुंडलशो
भिगंडंकर्णांतदीर्घनयनंनयनाभिरामम् ॥ १ ॥ प्रातर्भजामिरघुनाथकरारविंदंरक्षोगणायभयदंवरदंद्विजेभ्यः ॥
यद्राजसंसदिविभज्यमहेशचापंसीताकरग्रहणमंगलमापसद्यः ॥ २ ॥ प्रातर्नमामिरघुनाथपदारविंदंवज्रां
कुशादिशुभरेखिशुभावहंमे ॥ योगींद्रमानसमधुव्रतसेव्यमानंशापापहंसपदिगौतमधर्मपत्न्याः ॥ ३ ॥
प्रातर्वदामिवचसारघुनाथनामवाग्दोषहारिसकलंशमलंनिहंति ॥ यत्पार्वतीस्वपतिनासहमोक्षकामाप्रीत्या
सहस्रहरिनामसमंजजाप ॥ ४ ॥ प्रातःश्रयेश्रुतिनुतांरघुनाथमूर्तिंनीलांबुदोत्पलसितेतररत्ननीलाम् ॥
आमुक्तमौक्तिकविशेषविभूषणाढ्यांध्येयांसमस्तमुनिभिर्जनमुक्तिहेतुम् ॥ ५ ॥ यःश्लोकपंचकमिदंप्रयतः
पठेतनित्यंप्रभातसमयेपुरुषःप्रबुद्धः ॥ श्रीरामकिंकरजनेषुसएवमुख्योभूत्वाप्रयातिहरिलोकमनन्यलभ्यम्
॥ ६ ॥ ब्रह्मामुरारिस्त्रिपुरांतकारिर्भानुःशशीभूमिसुतोबुधश्च ॥ गुरुश्चशुक्रःशनिराहुकेतवःकुर्वंतुसर्वेममसु

प्रभावम् ॥ ७ ॥ भृगुर्वसिष्ठःक्रतुरंगिराश्चमनुःपुलस्त्यःपुलहश्चगौतमः ॥ रैभ्योमरीचिश्च्यवनश्चदक्षःकुर्वंतुसर्वेममसुप्रभातम् ॥ ८ ॥ सनत्कुमारःसनकःसनंदनःसनातनोप्यासुरिपिंगलौच ॥ सप्तस्वराःसप्तरसातलानिकुर्वंतुसर्वेममसुप्रभातम् ॥ ९ ॥ सप्तार्णवाःसप्तकुलाचलाश्चसप्तर्षयोद्वीपवनानिसप्त ॥ भूरादिकृत्वाभुवनानिसप्तकुर्वंतुसर्वेममसुप्रभातम् ॥ १० ॥ पृथ्वीसगंधासरसास्तथाऽपःस्पर्शीचवायुर्ज्वलितंचतेजः ॥ नभःसशब्दंमहतासहैवकुर्वंतुसर्वेममसुप्रभातम् ॥ ११ ॥ पुंण्यश्लोकोनलोराजापुण्यश्लोकोयुधिष्ठिरः ॥ पुण्यश्लोकश्चवैदेहीपुण्यश्लोकोजनार्दनः ॥ १२ ॥ अहल्याद्रौपदीसीतातारामंदोदरीतथा ॥ पंचकन्यास्मरेन्नित्यंमहापातकनाशनम् ॥ १३ ॥ अश्वत्थामाबलिर्व्यासोहनूमांश्चबिभीषणः ॥ कृपःपरशुरामश्चसप्तैतेचिरजीविनः ॥ १४ ॥ सप्तैतान्संस्मरेन्नित्यंमार्कंडेयंतथाष्टमम् ॥ जीवेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥ १५ ॥ प्रऱ्हादनारदपराशरपुंडरीकव्यासांबरीषशुकशौनकभीष्मदाल्भ्यान् ॥ रुक्मांगदार्जुनवसिष्ठविभीषणादीन्पुण्यानिमान्परमभागवतान्नमामि ॥ १६ ॥ कर्कोटकस्यनागस्यदमयंत्यानलस्यच ॥ ऋतुपर्णस्यराजर्षेःकीर्तनंकलिनाशनम् ॥ १७ ॥ धर्मोविवर्धतियुधिष्ठिरकीर्तनेनपापंप्रणश्यतिवृकोदरकीर्तनेन ॥ शत्रुर्विनश्यतिधनंजयकीर्तनेनमाद्रीसुतौकथयतांनभवंतिरोगाः ॥ १८ ॥ अहोभाग्यमहोभाग्यंनंदगोपव्रजौकसाम् ॥ यन्मित्रंपरमानंदंपूर्णंब्रह्मसनातनम् ॥ १९ ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिका ॥ पुरीद्वारावतीचैवसप्तैतामोक्षदायिकाः ॥ २० ॥ अर्जुनःफाल्गुनोजिष्णुःकिरीटीश्वेतवाहनः ॥



बीभत्सुर्विजयीकृष्णःसव्यसाचीधनंजयः ॥ २१ ॥ उत्तिष्ठोत्तिष्ठगोविंदउत्तिष्ठगरुडध्वज ॥ उत्तिष्ठकमलाकांतत्रैलोक्यंमंगलंकुरु ॥ २२ ॥ समुद्रवसनेदेविपर्वतस्तनमंडले ॥ विष्णुपत्निनमस्तुभ्यंपादस्पर्शंक्षमस्वमे ॥ २३ ॥ पलायध्वंपलायध्वंरेरेदानवराक्षसाः ॥ धर्मसंस्थापनार्थायरथारूढःस्वयंहरिः ॥ २४ ॥ वाराणस्यांभैरवोदेवोसंसारभयनाशनः ॥ नैकजन्मकृतंपापंस्मरणेनविनश्यति ॥ २५ ॥ वाराणस्यांदक्षिणेभागेकुक्कुटोनामवैद्विजः ॥ तस्यस्मरणमात्रेणदुःस्वप्नःसुखदोभवेत् ॥ २६ ॥ वाराणस्यामुत्तरेभागेसुमंतुर्नामवैद्विजः ॥ तस्यस्मरणमात्रेणनिर्धनोधनवान्भवेत् ॥ २७ ॥ काशिकाशीतिकाशीतित्रिवारंयःपठेन्नरः ॥ सोपिदेशांतरेवासीकाशीवासफलंलभेत् ॥ २८ ॥ अशीवरुणयोर्मध्येपंचक्रोशीमहत्फलम् ॥ देवामरणमिच्छंतिकाकथाइतरेजनाः ॥ २९ ॥ नंदिनीनलिनीसीतामालतीचमलापहा ॥ विष्णुपादाब्जसंभूतागंगात्रिपथगामिनी ॥ ३० ॥ भागीरथीभोगवतीजान्हवीत्रिजटेश्वरी ॥ द्वादशैतानिनामानित्रिप्रातःकालेसदापठेत् ॥ ३१ ॥ विश्वेशंमाधवंधुंडिंदंडपाणिंचभैरवम् ॥ वंदेकाशींगुहांगंगांभवानींमणिकर्णिकाम् ॥ ॥ ३२ ॥ वाराणसीपुरपतेभजविश्वनाथा ॥ माझाप्रणामतुझियाचरणासिआतां ॥ मीमागतोंपरमपावनपुंण्यभिक्षा ॥ द्यावीमलात्वरितशांभाविवेददीक्षा ॥ १ ॥ श्रीधुंडिराजगणनायकदंडपाणी ॥ माझेउदंडअपराधमनातनाणीं ॥ श्रीभैरवाचुकविंरौरवयातनारे ॥ वाराणसींतमजठेविंसनातनारे ॥ २ ॥ इत्थंप्रभातेपरमंपवित्रंपठेत्स्मरेद्वाशृणुयाच्चनित्यम् ॥ दुःस्वप्ननाशस्त्विहसुप्रभातंभवेच्चनित्यंभगवत्प्रसादात् ॥ ३ ॥

कराग्रेवसतेलक्ष्मीःकरमूलेसरस्वती ॥ करमध्येतुगोविंदःप्रभातेकरदर्शनम् ॥४॥ इति प्रातःस्मरणं समाप्तं ॥





## ॥ २ ॥ ॥ अथ स्नानविधि प्रारंभः ॥

श्रीगणेशायनमः ॥ नमामिगंगेतवपादपंकजंसुरासुरैर्वंदितदिव्यरूपं ॥ भक्तिंचमुक्तिंचददासिनित्यंभावा नुसारेणसदानराणां ॥१॥ दर्शनात्सर्वपातघ्नींस्पर्शनान्मोक्षदायिनीम् ॥ स्नानेनमुक्तिदांपुण्यांभागीरथींनमाम्य हम् ॥२॥ अथसंकल्पः ॥ श्रीमन्महागणाधिपतये० ॥ इष्टदेवताभ्यो० ॥ कुलदेवताभ्यो० ॥ग्रामदेवताभ्यो० वास्तुदेवताभ्यो० ॥ शचीपुरंदराभ्यांनमः ॥ उमामहेश्वराभ्यां० ॥ कालकामपरशुरामे० ॥ सर्वेभ्योदेवेभ्यो नमः ॥ सर्वेभ्योब्राह्मणेभ्योनमः ॥ अविघ्नमस्तु ॥ सुमुखश्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदर श्चविकटोविघ्ननाशोगणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगजाननः ॥ द्वादशैतानिनामानियःपठेच्छृ णुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥ शुक्लांबरधरंदेवं शशिवर्णंचतुर्भुजं ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शर ण्येत्र्यंबकेगौरीनारायणिनमोस्तुते ॥ सर्वदासर्वकार्येषुनास्तितेषाममंगलं ॥ येषांहृदिस्थोभगवान्मंगलायतनं हरिः ॥ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव ॥ विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि ॥

लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषामिंदीवरश्यामोहृदयस्थोजनार्दनः ॥ विनायकंगुरुंभानुंब्र ह्मविष्णुमहेश्वरान् ॥ सरस्वतींप्रणम्यादौसर्वकार्यार्थसिद्धये ॥ अभीप्सितार्थसिद्ध्यर्थंपूजितोयःसुरासुरैः ॥ सर्वविघ्नहरस्तस्मैगणाधिपतयेनमः ॥ सर्वेष्वारंभकार्येषुत्रयस्त्रिभुवनेश्वराः ॥ देवादिशंतुनःसिद्धिंब्रह्मेशान जनार्दनाः ॥ श्रीमद्भगवतोमहापुरुषस्याविष्णोराज्ञयाप्रवर्तमानस्यअद्यब्रह्मणोद्वितीयेपरार्धेविष्णुपदेश्रीश्वेत वाराहकल्पेवैवस्वतमन्वंतरेभरतवर्षेभरतखंडेजंबुद्वीपेदंडकारण्येदेशेगोदावर्याः दक्षिणेतीरेकृष्णावेण्ययोः उत्तरेशालिवाहनशकेबौद्धावतारेरामक्षेत्रेरामरामाश्रमेआस्मिन्वर्तमानेअमुकनामसंवत्सरे अमुकअयने अ मुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अद्यदिवस नक्षत्रं विष्णुदिवसनक्षत्रे विष्णु महानक्षत्रे विष्णुस्थेवर्तमाने चंद्रे विष्णुस्थे सूर्ये विष्णुस्थेदेवगुरौ शेषेषुग्रहेषु सत्सु एवं गुण विशेषण विशिष्टायांशुभपुण्यतिथौ मम आत्मनः श्रुति स्मृति पुराणोक्त फलप्राप्त्यर्थं कायिक वाचिक मा नसिक सांसर्गिक ज्ञाताज्ञात स्पृष्टास्पृष्ट भुक्ताभुक्त पीतापीत सकलपाप क्षयार्थंगंगाभागीरथीतीर्थेस्ना नमहंकरिष्ये॥ॐआपोहिष्ठामयोभुवःस्तानंऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाज यतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ आपोवा इद ँ सर्वंविश्वाभूतान्यापःप्राणावाआपःपशवआपोन्नमापोमृतमापःसम्राडापोविराडापः स्वराडापःश्छं

दां ँ स्यापोज्योती ँ ष्यापोयजू ँ ष्यापःसत्यमापः सर्वादेवताआपोभूर्भुवःसुवरापओम् ॥ स्नानंकृत्वा
इमंमेगंगेयमुनेसरस्वतिशुतुद्रिःस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोम
या ॥ अघमर्षणं ॥ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोराभ्यजायततततः समुद्रोऽअर्णवः ॥ समु
द्रादर्णवादधिसंवत्सरोऽअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्व
मकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोस्वः ॥ इतित्रिरावृत्याअघमर्षणंकुर्यात् ॥ अथअर्घ्यमंत्राः ॥ न
मःकमलनाभायनमस्तेजलशायिने ॥ नमस्तेकेशवानंतगृहाणार्घ्यंनमोस्तुते ॥१॥ एहिसूर्यसहस्रांशोतेजोरा
शिजगत्पते ॥ अनुकंपयमांभक्त्यागृहाणार्घ्यंनमोस्तुते ॥२॥ धातुःकमंडलोद्भूतेगंगेत्रिपथगामिनि ॥ त्रैलोक्य
वंदितेदेविगृहाणार्घ्यंनमोस्तुते ॥ ३ ॥ गंगागंगेतियोब्रूयाद्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णु
लोकंसगच्छति ॥४॥ योसौसर्वगतोविष्णुश्चित्स्वरूपीजनार्दनः॥सएवद्रवरूपेणगंगांभोनात्रसंशयः॥५॥शरी
रेजर्जरेभूतेव्याधिग्रस्तेकलेवरे ॥ औषधंजान्हवीतोयंवैद्योनारायणोहरिः ॥६॥पापोहंपापकर्माहंपापात्मापाप
संभवः ॥ त्राहिमांकृपयागंगेसर्वपापहराभव ॥७॥ स्नानांगतर्पणंकुर्यात् ॥ ब्रह्मादयोयेदेवाः तांदेवांस्तर्पया
मि ॥ भूर्देवांस्तर्पयामि ॥ भुवर्देवांस्तर्पयामि ॥ स्वर्देवांस्तर्पयामि ॥ भूर्भुवःस्वर्देवांस्तर्पयामि ॥ निवी
ती॥कृष्णद्वैपाय०॥तान्नृषींस्तर्पयामि॥भूर्ऋषींस्तर्पयामि॥भुवर्ऋषींस्तर्पयामि॥स्वर्ऋषींस्तर्पयामि॥भूर्भुवःस्व



र्ऋषींस्तर्पयामि॥ अग्निःकव्यवा०॥ स[illegible]वाअपसव्येन ॥ तान्पितॄंस्तर्पयामि ॥ भूःपितॄंस्तर्पयामि ॥ भुवः
पितॄंस्तर्पयामि ॥ स्वःपितॄंस्तर्पयामि ॥ भूर्भुवःस्वःपितॄंस्तर्पयामि ॥ इतिस्नानविधिः समाप्तः ॥ ७ ॥

॥ ३ ॥ ॥ अथ उष्णोदकस्नानविधिप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ पात्रेकिंचित्शीतोदकंप्रक्षिप्यतदुपरिउष्णोदकेनपात्रमापूर्य ॥ ॐशन्नोदेवीरभिष्टय
आपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ आपःपुनंतुपृथिवींपृथिवीपूतापुनातुमाम् ॥ पुनंतुब्रह्मणस्पति
र्ब्रह्मपूतापुनातुमाम् ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नस्नात्वीमलादिव ॥ पूतंपवित्रेणैवाज्यं ॥ आपःशुंधं
तुमैनसः ॥ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोराभ्यजायततततःसमुद्रोअर्णवः ॥ आपोहिष्ठामयो
भुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ इतिपचमंत्रैःउदकमभिमंत्र्यगंगादितीर्थानिस्मरन्स्नात्वा आ
चम्य आपोहिष्ठेतितिसृभिःमार्जनंकुर्यात् ॥ इतिउष्णोदकस्नानविधिः ॥ उष्णोदकस्नानेसंकल्प।घमर्षण
तर्पणानिनकुर्यात् ॥ ॥ उष्णोदकस्नानविधिः समाप्तः ॥ ॥ ७ ॥ ॥ ॥७ ॥

॥ ४ ॥ ॥ अथ गंगाष्टक प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ मातःशैलसुतासपत्नवसुधाशृंगारहारावलिः स्वर्गारोहणवैजयंतिभवतींभागीरथीं

प्रार्थये ॥ त्वत्तीरेवसतस्त्वदंबुपिबतस्त्वद्वीचिषुप्रेंखत, स्त्वन्नामस्मरतस्त्वदर्पितदृशः स्यान्मेशरीरव्ययः ॥१॥
त्वत्तीरेतरुकोटरांतरगतोगंगेविहंगोवरं, त्वन्नीरेनरकांतकारिणिवरंमत्स्योथवाकच्छपः ॥ नैवान्यत्रमदांध
सिंधुरघटासंघट्टघंटारण, त्कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥ २ ॥ उक्षापक्षीतुरगउरगःको
पिवावारणोवा, वाराणस्यांजननमरणक्लेशदुःखासहिष्णुः ॥ नत्वन्यत्रप्रविरलरणत्किंकिणिक्काणमिश्रं, वार
स्त्रीभिश्चमरमरुतावीजितोभूमिपालः ॥ ३ ॥ काकैर्निष्कुषितंश्वभिःकवलितंगोमायुभिर्लुंठितं, स्रोतोभि
श्चलितंतटांबुलुलितंवीचीभिरांदोलितम् ॥ दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानःकदा, द्रक्ष्येऽहंपरमे
श्वरित्रिपथगेभागीरथिस्वंवपुः ॥ ४ ॥ अभिनवबिसवल्लीपादपद्मस्यविष्णो, र्मदनमथनमौलेर्मालतीपुष्प
माला ॥ जयतिजयपताकाकाप्यसौमोक्षलक्ष्म्या, क्षपितकलिकलंकाजान्हवीनःपुनातु ॥५॥ एतत्तालतमा
लसालसरलव्यालोलवल्लीलता, च्छन्नंसूर्यकरप्रतापरहितंशंखेंदुकुंदोज्ज्वम् ॥ गंधर्वामरसिद्धकिन्नरवधूत्तुं
गस्तनास्फालितं, स्नानायप्रतिवासरंभवतुमेगागंजलंनिर्मलम् ॥ ६ ॥ गांगंवारिमनोहारि, मुरारिचरण
च्युतम् ॥ त्रिपुरारिशिरश्चारि, पापहारिपुनातुमाम् ॥ ७ ॥ पापापहारिदुरितारितरंगधारि, शैलप्रचारिगि
रिराजगुहाविदारि ॥ झंकारकारिहरिपादरजोपहारि, गांगंपुनातुसततंशुभकारिवारि ॥ ८ ॥ गंगाष्टकं
पठतियःप्रयतःप्रभाते, वाल्मीकिनाविरचितंशुभदंमनुष्यः ॥ प्रक्षाल्यगात्रकलिकल्मषपंकमाशु मोक्षंलभे
त्पततिनैवनरोभवाब्धौ ॥ ९ ॥ ॥ इतिश्रीवाल्मीकिनाविरचितंगंगाष्टकस्तोत्रंसंपूर्णम् ॥ ॥७॥



॥ ५ ॥ ॥ अथ भस्मधारण प्रारंभः ॥

श्रीगणेशायनमः ॥ केशवादिनामभिः आचमनं ॥ ॐकारःसर्वत्रकेशवायनमः ॥ नारायणायनमः ॥ माध
वायनमः ॥ गोविंदायनमः ॥ विष्णवेनमः ॥ मधुसूदनायनमः ॥ त्रिविक्रमायनमः ॥ वामनायनमः ॥
श्रीधरायनमः ॥ ऋषीकेशायनमः ॥ पद्मनाभायनमः ॥ दामोदरायनमः ॥ संकर्षणायनमः ॥ वासुदेवा
यनमः ॥ प्रद्युम्नायनमः ॥ अनिरुद्धायनमः ॥ पुरुषोत्तमायनमः ॥ अधोक्षजायनमः ॥ नारसिंहायनमः॥
अच्युतायनमः ॥ जनार्दनायनमः ॥ उपेंद्रायनमः ॥ हरयेनमः ॥ श्रीकृष्णायनमः ॥ २४ ॥ प्रणवस्य॥
परब्रह्मऋषिः ॥ परमात्मादेवता ॥ देवीगायत्रीछंदः ॥ सप्त॰ प्राणायामेविनियोगः ॥ॐ भूःॐभुवःॐ स्वः
ॐमहःॐजनःॐतपःॐसत्यं ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥
ॐ आपोज्योतिरसोमृतंब्रह्मभूर्भुवः स्वरोम् ॥ एवंत्रिः अद्येत्यादिपूर्वोच्चरितएवंगुणविशेषणविशिष्टायांशु
भफलप्राप्त्यर्थं ॥ श्रीपरमेश्वरप्रीत्यर्थंभस्मधारणं करिष्ये ॥ इतिसंकल्प्य ॥ भस्मआदाय ॥ ॐ अग्निरि
तिभस्म ॥ ॐ वायुरितिभस्म ॥ ॐ जलमितिभस्म ॥ ॐ स्थलमितिभस्म ॥ ॐ व्योमेतिभस्म ॥ ॐस
र्वं॑ हवाइदंभस्म ॥ मनएतानिचक्षुषीतिभस्मांनि ॥ ॐ नमःशिवायइतित्रिपुंड्रान्कुर्यात् ॥ ॐ मानस्तो
केतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे ॥

ॐभवेभंवेनातिंभवेभवस्वमांभवोद्भवायनमः ॥ वामदेवायनमोंज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालाय
नमः कलंविकरणायनमोबलंविकरणायनमोबलायनमोबलप्रमथनायनमः सर्वभूतदमनायनमोमनोन्मनाय
नमः ॥ अघोरेभ्योथघोरेभ्योघोरघोरंतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ तत्पुरुषाय
विद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्र
ह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवों ॥ इतिभस्मधारणविधिःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ ६ ॥ ॥ अथ आसनविधिप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ आचम्य प्राणानायम्य देशकालौसंकीर्त्यअमुककर्मकरिष्ये तदंगत्वेनक
र्माधिकारार्थं आसनविधिंकरिष्ये ॥ इतिसंकल्प्य ॥ उत्पतंत्विहभूतानिपृथिव्यंतरवासिना ॥ आ
सनादौनमस्कृत्यजपकर्मसमारभे ॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेन
श्यंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभे ॥ ती
दंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ इतिवामपादेनभूमिंत्रिस्ताडयेत् ॥
समुद्रवसनेदेविपर्वतस्तनमंडले ॥ विष्णुपत्निनमस्तुभ्यंपादस्पर्शंक्षमस्वमे ॥ पृथ्वीतिमंत्रस्य ॥ मेरुपृष्ठऋषिः ॥
कूर्मोदेवता ॥ सुतलंछंदः ॥ आसनेविनियोगः ॥ पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदे



तागायत्री ॥ अग्निमीळइत्यादीनांछंदसांवैश्वामित्रोमधुच्छंदादयोयेऋषयः ॥ अग्न्यादयोदेवताः ॥ गायत्र्यादी
निच्छंदांसि ॥ ब्रह्मयज्ञेविनियोगः ॥ ॐ भूर्भुवस्वः ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्र
चोदयात् ॥ पच्छोर्धर्चशःसर्वाएवंत्रिः ॥ ॐअग्निमीळेपुरोहितं ॥ यज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥
अग्निःपूर्वेभिर्ऋषिभिः ॥ ईड्योनूतनैरुत ॥ सदेवांएहवक्षति ॥ अग्निनारयिमश्नवत् ॥ पोषमेवदिवेदिवे ॥
यशसंवीरवत्तमं ॥ अग्नेयंयज्ञमध्वरं ॥ विश्वतःपरिभूरसि ॥ सइद्देवेषुगच्छति ॥ अग्निर्होताकविक्रतुः ॥
सत्यश्चित्रश्रवस्तमः ॥ देवोदेवेभिरागमत् ॥ १ ॥ यदंगदाशुषेत्वं ॥ अग्नेभद्रंकरिष्यसि ॥ तवेत्तत्सत्यमं
गिरः ॥ उपत्वाग्नेदिवेदिवे ॥ दोषावस्तर्धियावयं ॥ नमोभरंतएमसि ॥ राजंतमध्वराणां ॥ गोपामृतस्यदीदि
विं ॥ वर्धमानंस्वेदमे ॥ सनःपितेवसूनवे ॥ अग्नेसूपायनोभव ॥ सचस्वानःस्वस्तये ॥ २ ॥ वायवाया
हिदर्शत ॥ अग्निर्वैदेवानामवमोविष्णुःपरमः ॥ अथमहाव्रतं ॥ एषपंथाएतत्कर्म ॥ अथातःसंहितायाउ
पनिषत् ॥ विदामघवन्विदा ॥ महाव्रतस्यपंचविंशतिंसामिधेन्यः ॥ इषेत्वोर्जेत्वा ॥ अग्नआयाहिवी
तये ॥ शन्नोदेवीरभिष्टये ॥ अथैतस्यसमाम्नायस्य ॥ समाम्नायः समाम्नातः ॥ मयरसतजभनलगसंमि
तं ॥ गौः ॥ ग्मा ॥ पंचसंवत्सरमयं ॥ अथशिक्षांप्रवक्ष्यामि ॥ वृद्धिरादैच् ॥ योगीश्वरंयाज्ञवल्क्यं ॥ ना
रायणंनमस्कृत्य ॥ अथातोधर्मंव्याख्यास्यामः ॥ अथातोधर्मजिज्ञासा ॥ अथातोब्रह्मजिज्ञासा ॥ तच्छं

योरावृणीमहे ॥ गातुंयज्ञाय ॥ गातुंयज्ञपतये ॥ दैवीस्वस्तिरस्तुनः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातु
भेषजं ॥ शन्नोअस्तुद्विपदे ॥ शंचतुष्पदे ॥ ॐ नमोब्रह्मणेनमोअस्त्वग्नयेनमः पृथिव्यैनमओषधीभ्यः ॥
नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि ॥ एवंत्रिः ॥ॐब्रह्मभूर्भुवःस्वः ॥ ॐशांतिः शांतिः शांतिः॥
वृष्टिरसिवृश्चमेपाप्मानमृतात्सत्यमुपागां ॥ तीर्थदेवतास्तृप्यंतु ॥ प्रजापतिस्तृप्यतु ॥ ब्रह्मातृप्यतु ॥ वे
दास्तृप्यंतु ॥ देवास्तृप्यंतु ॥ ऋषयस्तृप्यंतु ॥ सर्वाणिच्छंदांसितृप्यंतु ॥ ॐकारस्तृप्यतु ॥ वषट्कारस्तृ
प्यतु ॥ व्याहृतयस्तृप्यंतु ॥ सावित्रीतृप्यतु ॥ यज्ञास्तृप्यंतु ॥ द्यावापृथिवीतृप्यतां ॥ अंतरिक्षंतृप्यतु ॥
अहोरात्राणितृप्यंतु ॥ सांख्यास्तृप्यंतु ॥ सिद्धास्तृप्यंतु ॥ समुद्रास्तृप्यंतु ॥ नद्यस्तृप्यंतु ॥ गिरयस्तृप्यं
तु ॥ क्षेत्रौषधिवनस्पतिगंधर्वाप्सरसस्तृप्यंतु ॥ नागास्तृप्यंतु ॥ वयांसितृप्यंतु ॥ गावस्तृप्यंतु ॥ साध्या
स्तृप्यंतु ॥ विप्रास्तृप्यंतु ॥ यक्षास्तृप्यंतु ॥ रक्षांसितृप्यंतु ॥ भूतानितृप्यंतु ॥ एवमंतानितृप्यंतु ॥ अथ
ऋषयः ॥ उपवीती ॥ शतर्चिनस्तृप्यंतु ॥ माध्यमास्तृप्यंतु ॥ गृत्समदस्तृप्यतु ॥ विश्वामित्रस्तृप्यतु ॥
वामदेवस्तृप्यतु ॥ अत्रिस्तृप्यतु ॥ भरद्वाजस्तृप्यतु ॥ वसिष्ठस्तृप्यतु ॥ प्रगाथास्तृप्यंतु ॥ पावमान्यस्तृ
प्यंतु ॥ क्षुद्रसूक्तास्तृप्यंतु ॥ महासूक्तास्तृप्यंतु ॥ प्राचीनावीती ॥ सुमंतुजैमिनिवैशंपायनपैलसूत्रभाष्य
भारतमहाभारतधर्माचार्यास्तृप्यंतु ॥ जानंतिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमांडव्यमांडूकेयास्तृप्यंतु ॥
गर्गीवाचक्नवीतृप्यतु ॥ वडवाप्रातीथेयीतृप्यतु ॥ सुलभामैत्रेयीतृप्यतु ॥ कहोळंतर्पयामि ॥ कौषीतकंत





र्पयामि ॥ महाकौषीतकंतर्पयामि ॥ पैंग्यंतर्पयामि ॥ महापैंग्यंतर्पयामि ॥ सुयज्ञंतर्पयामि ॥ सांख्यायनं
तर्पयामि ॥ ऐतरेयंतर्पयामि ॥ महैतरेयंतर्पयामि ॥ शाकलंतर्पयामि ॥ बाष्कलंतर्पयामि ॥ सुजातवक्त्रं
तर्पयामि ॥ औदवाहिंतर्पयामि ॥ महौदवाहिंतर्पयामि ॥ सौजामिंतर्पयामि ॥ शौनकंतर्पयामि ॥ आ
श्वलायनंतर्पयामि ॥ येचान्येआचार्यास्तेसर्वेतृप्यंतु ॥ प्रतिपुरुषंपितॄंस्तर्पयेत् ॥ अनेनदेवऋषिआचार्य
पितृतर्पणाख्येनकर्मणाभगवान्परमेश्वरःप्रीयतांनमम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति ब्रह्म० समाप्तः ॥

## ॥ ९ ॥ ॥ अथ माध्यान्हसंध्या प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथमाध्यान्हसंध्याप्रारंभः ॥ ॐ केशवादिचतुर्विंशतिनामभिः ॥ प्राणायामंकृ
त्वा ॥ माध्यान्हसंध्या ॥ युवानाश्वेताश्वेतवर्णाश्वेतवस्त्राश्वेतमाल्यानुलेपनावृषभवाहनारुद्रदैवत्यादक्षि
णाग्निउपस्थानायजुर्वेदसंहिताद्वितीयारुद्रसंध्याधर्मवतीनाम्नी ॥ ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्य
र्थंमाध्यान्हसंध्योपासिंतकरिष्ये ॥ आयातुवरदादेवीअक्षरंब्रह्मसंमितं ॥ गायत्रींछंदसांमातेदंब्रह्मजुषस्वमे॥
यदन्हात्कुरुतेपापंतदन्हात्प्रतिमुच्यते ॥ यद्रात्र्यात्कुरुतेपापंतद्रात्र्यात्प्रतिमुच्यते ॥ सर्ववर्णेमहादेविसंध्या
विद्येसरस्वति ॥ अजरेअमरेदेविसर्वदेविनमोस्तुते ॥ ओजोसि ॥ सहोसि ॥ बलमसि ॥ भ्राजोसि ॥
देवानांधामनामासि ॥ विश्वमसिविश्वायुः ॥ सर्वमसिसर्वायुः ॥ अभिभुरों ॥ गायत्रीमावाहयामि ॥ सा

वित्रीमावाहयामि ॥ सरस्वतीमावाहयामि ॥ छंदर्षीनावाहयामि ॥ श्रियमावाहयामि ॥ ह्रियमावाहया
मि ॥ आपोहिष्ठेतितृचस्यसूक्तस्य ॥ आंबरिषःसिंधुद्वीपऋषिः ॥ आपोदेवता ॥ गायत्रीच्छंदः ॥ मार्जने
विनियोगः ॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ ॐ योवःशिवतमोरसस्तस्य
भाजयतेहनः ॥ उशतीरिवमातरः ॥ ॐ तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥
आपःपुनंत्वितिमंत्रस्य ॥ नारायणऋषिः ॥ आपोदेवता ॥ अष्टीच्छंदः ॥ मंत्राचमनेविनियोगः ॥ ॐ आ
पःपुनंतुपृथिवींपृथिवीपूतापुनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां ॥ यदुच्छिष्टमभोज्यंयद्वादुश्च
रितंमम ॥ सर्वंपुनंतुमामापोसतांचप्रतिग्रहꣳ स्वाहा ॥ आचम्य ॥ आपोहिष्ठेतिनवर्चस्यसूक्तस्यआंब
रिषःसिंधुद्वीपऋषिः ॥ आपोदेवता ॥ गायत्रीच्छंदः ॥ पंचमीवर्धमाना ॥ सप्तमीप्रतिष्ठा ॥ अंत्येद्वेअनुष्टु
भौ ॥ मार्जनेविनियोगः ॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ ॐ योवःशिवत
मोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ ॐ तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजन
यथाचनः ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ ॐ ईशानावार्याणांक्षयंती
श्चर्षणीनां ॥ अपोयाचामिभेषजं ॥ ॐअप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवं ॥ ॐ
आपःपृणीतभेषजंवरूथंतन्वेꣳमम ॥ ज्योक्चसूर्यंदृशे ॥ ॐ इदमापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाहम



भिदुद्रोहयद्वाशेपउतानृतं ॥ ॐआपोऽअद्यान्वचारिषंरसेनसमगस्महि ॥ पयस्वानग्नआगहितंमासंसृजव
र्चसा ॥ ॐससुषीस्तदपसोदिवानक्तंचसस्रुषीः ॥ वरेण्यक्रतूरहमादेवीरवसेहुवे ॥ ऋतंचेतितृचस्यमाधुच्छं
दसोअघमर्षणऋषिः ॥ भाववृत्तोदेवता ॥ अनुष्टुप्छंदः ॥ अघमर्षणेविनियोगः ॥ ॐऋतंचसत्यंचाभी
द्धात्तपसोध्यजायत ॥ ततोरात्र्यजायतततःसमुद्रोऽअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोऽअजायत ॥ अ
होरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षम
थोस्वः ॥ आचम्य ॥ आकृष्णेनांगिरसोहिरण्यस्तूपःसवितात्रिष्टुप् ॥ सूर्यायार्घ्यदानेविनियोगः ॥ ॐ
आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ श्री
सूर्यसावित्रीइदमर्घ्यंदत्तंनमम ॥ हंसःशुचिषद्वामदेवःसूर्योजगती ॥ सूर्यायार्घ्यदानेविनियोगः ॥ ॐहंसः
शुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋ
तं ॥ श्रीसूर्यसावित्रीइदमर्घ्यंदत्तंनमम ॥ गायत्र्याविश्वामित्रःसवितागायत्री ॥ सूर्यायार्घ्यदानेविनियो
गः ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ श्रीसूर्यायइदमर्घ्यंदत्तंनमम ॥
असावादित्योब्रह्म ॥ आचम्य ॥ प्राणानायम्य ॥ उदुत्यमितित्रयोदशर्चस्यसूक्तस्यकाण्वःप्रस्क
ण्वऋषिः ॥ सूर्योदेवता ॥ नवाद्यागायत्रीच्छंदः ॥ अंत्याश्चतस्रोनुष्टुभः ॥ सूर्योपस्थानेविनियोगः ॥ ॐ

उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः ॥ सूरायवि श्वचक्षसे ॥ अदृश्रमस्यकेतवोविरश्मयोजनांऽअनु ॥ भ्राजंतोऽअग्नयोयथा ॥ तरणिर्विश्वदर्शतोज्योति ष्कृदसिसूर्य ॥ विश्वमाभासिरोचनं ॥ प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ १ ॥ येनापावकचक्षसाभुरण्यंतंजनाँअनु ॥ त्वंवरुणपश्यसि ॥ वियामेषिरजस्पृथ्वहामिमानोऽअक्तु भिः ॥ पश्यंजन्मानिसूर्य ॥ सप्तत्वाहरितोरथेवहंतिदेवसूर्य ॥ शोचिष्केशंविचक्षण ॥ अयुक्तसप्तशुंध्युवः सूरोरथस्यनप्त्यः ॥ ताभिर्यातिःस्वयुक्तिभिः ॥ उद्वयंतमसस्परिज्योतिष्पश्यंतउत्तरं ॥ देवंदेवत्रासूर्यमग न्मज्योतिरुत्तमं ॥ उद्यंनद्यमित्रमहआरोहंनुत्तरांदिवं ॥ हृद्रोगंममसूर्यहरिमाणंचनाशय ॥ शुकेषुमेहरि माणंरोपणाकासुदध्मसि ॥ अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ उदगादयमादित्योविश्वेनसहसासह ॥ द्विषंतंमह्यंरंधयन्मोऽअहंद्विषतेरधं ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनब्रह्मकर्म समारभे ॥ पृथ्वीतिमंत्रस्य ॥ मेरुपृष्ठऋषिः ॥ कूर्मोदेवता ॥ सुतलंछंदः ॥ आसनेविनियोगः ॥ ॐपृ थ्वीत्वयाधृतालोकादेविलंविष्णुनाधृता ॥ त्वंचधारयमांदेवीपवित्रंकुरुचासनं ॥ अंगुष्ठाग्रेतुगोविंदंतर्जन्यां तुमहीधरं ॥ मध्यमायांहृषीकेशमनामिक्यांत्रिविक्रमं ॥ कनिष्ठिक्यांन्यसेद्विष्णुंकरमध्येतुमाधवं ॥ एवंच



करविन्यासंसर्वपापप्रणाशनम् ॥ ॐभूःपादाभ्यांनमः ॥ ॐभुवःजानुभ्यांनमः ॥ ॐस्वःकटिभ्यांनमः ॥ ॐमहःनाभ्यैनमः ॥ ॐजनःहृदयायनमः ॥ ॐतपःकंठायनमः ॥ ॐसत्यंललाटायनमः ॥ ॐपरब्रह्म शिरसेस्वाहा ॥ ॐतत्सवितुर्ब्रह्मात्मनेहृदयायनमः ॥ ॐवरेण्यंविष्णुरात्मनेशिरसेस्वाहा ॥ ॐभर्गोदेव स्यरुद्रात्मनेशिखायैवषट् ॥ ॐधीमहिपरमात्मनेकवचायहुं ॥ ॐधियोयोनःज्ञानात्मनेनेत्रत्रयायवौषट् ॥ ॐप्रचोदयात्सत्यात्मनेअस्त्रायफट् ॥ इतिदिग्बंधः ॥ गायत्र्यागाथिनो ॥ विश्वामित्रऋषिः ॥ सवितादेव ता ॥ गायत्रीच्छंदः॥ अग्निर्मुखंब्रह्माशिरोविष्णुर्हृदयंरुद्रःशिखापृथिवीयोनिः ॥ त्रैलोक्यंचरणौप्राणापानव्या नोदानसमानासप्राणाश्वेतवर्णासांख्यायनसगोत्राचतुर्विंशत्यक्षरात्रिपदाषट्कुक्षिःपंचशीर्षोपनयनेविनियो गः ॥ आगच्छवरदेदेवीजपेमेसान्निधाभव ॥ गायंतंत्रायसेयस्माद्गायत्रीत्वंततःस्मृता ॥ अष्टशतसंख्यागाय त्रीजपमहंकरिष्ये ॥ सुमुखंसंपुटंचैववितितंविस्तृतंतथा ॥ द्विमुखंत्रिमुखंचैवचतुःपंचमुखंतथा॥ षण्मुखा धोमुखंचैवव्यापकांजलिकंतथा ॥ शकटंयमपाशंचग्रंथितंचोल्मुकंतथा ॥ प्रलंबंमुष्टिकंचेवमत्स्यःकूर्मोव राहकं ॥ सिंहक्रांतंमहाक्रांतंमुद्गरंपल्लवंतथा ॥ एतामुद्राःप्रकुर्वीतगायत्रीसुफलाभवेत् ॥ मुक्ताविद्रुमहेम नीलधवलच्छायैर्मुखैस्त्र्यक्षणै र्युक्तामिंदुकलानिबद्धमुकुटांतत्वार्थवर्णात्मिकां ॥ गायत्रींवरदाभयांकुशकशां शुभ्रंकपालंगुणंशंखंचचक्रमथारविंदयुगुलंहस्तैर्वहंतींभजेत् ॥ जपंकृत्वा ॥ ॐतत्सवितुर्हृदयायनमः ॥ ॐ वरेण्यंशिरसेस्वाहा ॥ ॐ भर्गोदेवस्याशिखायैवषट् ॥ ॐधीमहिकवचायहुं ॥ धियोयोनःनेत्रत्रयायवौषट् ॥

ॐ प्रचोदयात् अस्त्रायफट् ॥ सुरभिर्ध्यानशूर्पंचयोनिःकूर्मोथपंकजं ॥ लिंगंनिर्याणमुद्रांचजपांतेष्टौप्रदर्शयेत् ॥ यांसदासर्वभूतानिस्थावराणिचराणिच ॥ सायंप्रातर्नमस्यंतिसामासंध्याभिरक्षत्वोंन्नमः ॥ ॐप्राच्यैदिशेइंद्रायनमः ॥ ॐ आग्नेय्यैदिशेअग्नयेनमः ॥ ॐ दक्षिणायैदिशेयमायनमः ॥ ॐ निर्ऋत्यैदिशेनिर्ऋतयेनमः ॥ ॐ प्रतीच्यैदिशेवरुणायनमः ॥ ॐ वायव्यैदिशेवायवेनमः ॥ ॐ उदीच्यैदिशेसोमायनमः ॥ ॐई शान्यैदिशेईश्वरायनमः ॥ ॐ ऊर्ध्वायैदिशेब्रह्मणेनमः ॥ ॐ अधरायैदिशेअनंतायनमः ॥ ॐ अंतरिक्षायैदिशेवायवेनमः ॥ सर्वत्रनमः ॥ आत्मनेनमः ॥ परमात्मनेनमः ॥ अवांतरदिशाभ्योनमोनमः ॥ संश्रियंतुदिशोमयिसामागच्छंतुसूनृता ॥ सर्वेकामाऽअभिस्रवंतुनः॥ॐप्रियाअभिवादयेत् ॥(प्रवराणामुच्चारं कुर्यात्) अमुकगोत्रोत्पन्नोहं ॥ ऋग्वेदस्यआश्वलायनसूत्रशाकलशाखाध्यायी ॥ अमुकशर्माहं ॥ भोःअभिवादयामि नमोब्रह्मण्यदेवायगोब्राह्मणहितायच ॥ जगद्धितायकृष्णायगोविंदायनमोनमः ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्द्धनि ॥ ब्राह्मणेभ्योभ्यनुज्ञातागच्छदेवियथासुखं ॥ स्तुतामयावरदावेदमाताप्रचोदयंतिपवनेद्विजाता ॥ आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रयातुब्रह्मलोकं॥संध्यायैनमः ॥वेदायनमः ॥ वेदपुरुषायनमः॥आकाशात्पतितंतोयंयथागच्छतिसागरं ॥ सर्वदेवनमस्कारःकेशवंप्रतिगच्छति ॥ केशवादिचतुर्विंशतिनामाभिः ॥ प्राणानायम्य ॥ यस्यस्मृत्याचनामोक्त्यातपःसंध्याक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ अनेनमाध्यान्हसंध्यावंदनेनभगवान् श्रीपरमेश्वरःप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ इति माध्यान्हसंध्या स० ॥

विनियोगः ॥ ॐजुष्टोदमूनाअतिथिर्दुरोणइमन्नोयज्ञमुपयाहिविद्वान् ॥ विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि ॥ एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः ॥ अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान् ॥ इत्यक्षतैरावाह्य ॥ आच्छादनंदूरीकृत्य ॥ समस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती ॥ अग्निप्रतिष्ठापनेविनियोगः ॥ ॐ भूर्भुवःस्वः ॥ रुक्मकनामानमग्निंप्रतिष्ठापयामि ॥ प्रोक्षितेंधनानिनिक्षिप्य ॥ वेणुधमन्याप्रबोध्यध्यायेदेवम् ॥ चत्वारिशृंगागौतमोवामदेवोग्निस्त्रिष्टुप् ॥ अग्निमूर्तिध्यानेविनियोगः ॥ ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याआविवेश ॥ सप्तहस्तश्चतुःशृंगःसप्तजिव्होद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षिणपार्श्वेदेवींवामेस्वधांतथा ॥ विभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसन्मुखोवरदोभव ॥ परिसमूहनं ॥ पर्युक्षणं ॥ अन्नमभिघार्य ॥ विश्वानिनइतितिसृणांआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप् ॥ द्वाभ्यामर्चनेंत्योपस्थानेविनियोगः ॥ ॐ विश्वानिनोदुर्गहाजातवेदः ॥ सिंधुंननावादुरितातिपर्षि ॥ अग्नेअत्रिवन्नमसागृणानः ॥ अस्माकंबोध्यवितातनूनां ॥ यस्त्वाहृदाकीरिणामन्यमानः॥अमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहि ॥ प्रजाभिरग्नेअमृतत्वमश्याम् ॥ यस्मैत्वंसुकृते

जातवेदउँल्लोकमंग्नेकृणवंस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनंशतेस्वस्ति ॥ आत्मानंचालंकृत्य ॥
हस्तंप्रक्षाल्य ॥ ओंसूर्यायस्वाहा सूर्यायइदं॰ ॥ ॐप्रजापतयेस्वाहा ॥ प्रजापतयइदं॰ ॥ ॐ अ
ग्नयेस्वाहा ॥ अग्नयइदं॰ ॥ ॐ प्रजापतये॰ ॥ प्रजापतयइदं॰ ॥ ॐ सोमायवनस्पतये॰ ॥ सो
मायवनस्पतयइदं॰ ॥ ॐ अग्नीषोमाभ्यांस्वा॰ ॥ अग्नीषोमाभ्यामिदं॰ ॥ ॐ इंद्राग्निभ्यांस्वा॰ ॥ इंद्रा
ग्निभ्यामिदं॰ ॥ ॐ द्यावापृथिवीभ्यांस्वा॰ ॥ द्यावापृथिवीभ्यामिदं॰ ॥ ॐ धन्वंतरयेस्वा॰ ॥ धन्वंतर
यइदं॰ ॥ ॐ इंद्रायस्वा॰ ॥ इंद्रायइदं॰ ॥ ॐ विश्वेभ्योदेवेभ्यःस्वा॰ ॥ विश्वेभ्योदेवेभ्यइदं॰ ॥ ॐ
ब्रह्मणेस्वा॰ ॥ ब्रह्मणइदं॰ ॥ ॐ भूःस्वाहा॰ ॥ अग्नयइदं॰ ॥ ॐ भुवःस्वाहा ॥ वायवइदं॰ ॥ ॐ
स्वःस्वाहा ॥ सूर्यायइदं॰ ॥ ओंभूर्भुवःस्वःस्वाहा प्रजापतयइदं॰ ॥ परिसमूहनं ॥ पर्युक्षणं ॥ पंचोप
चारैः अग्निपूजनंकृत्वा ॥ मानस्तोकेतिकुत्सोरुद्रोजगती ॥ विभूतिग्रहणेविनियोगः ॥ ॐ मानस्तोकेत
नयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥
त्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्यायुषमितिकंठे ॥ अगस्त्यस्यत्र्यायुषमितिनाभौ ॥ यद्देवानांत्र्या
युषमितिदक्षिणस्कंधे ॥ तन्मेअस्तुत्र्यायुषमितिवामस्कंधे ॥ सर्वमस्तुशतायुषमितिशिरसि ॥ ओंचमेस्व
रश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ स्वस्तिश्रद्धांमेधांयशः



प्रज्ञांविद्यांबुद्धिंश्रियंबलम् आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषु
यत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसं
पूर्णतांयातिसद्योवंदेतमच्युतं ॥ अनेनप्रातःसायंवैश्वदेवाख्येनकर्मणाभगवान्यज्ञभोक्ताअग्निनारायण
स्वरूपीपरमेश्वरःप्रीयतांनमम ॥ ओंतत्सद्ब्रह्मार्पणमस्तु ॥ अद्येत्यादिपू॰ र्थं॰ बलिहरणाख्यंकर्मकरिष्ये ॥
उदकस्यवर्तुलंमंडलंकृत्वा ॥ बलिहरणंकृत्वा ॥ येभूताःप्रचरंतिदिवानक्तंबलिमिच्छंतोविदुरस्यप्रेष्ठाः॥ ते
भ्योबलिंपुष्टिकामोहरामिमयिपुष्टिंपुष्टिपतिर्ददातुस्वाहा ॥ बलिंदत्वा॥ ऐंद्रवारुणवायव्यांयाम्यांनैर्ऋतिकाश्च
ये ॥ तेकाकाः प्रतिगृण्हंतुभूम्यांपिंडंमयार्पितं ॥ वैवस्वतकुलेजातौद्वौश्यामशबलौशुनौ ॥ ताभ्यांपिंडो
मयादत्तोरक्षेतांपथिमांसदा ॥ श्वचांडालभूतपतितवायसेभ्योन्नंभूमौनिक्षिपेत् ॥ यमोसियमदूतोसिवाय
सोसिनमोस्तुते ॥ सप्तजन्मकृतंपापंबलिंभक्षंतुवायसाः ॥ कृमिकीटपतंगानांजंतूनांपापचारिणां ॥ तेस
र्वेतृप्तिमायांतुमयादत्तेनभूतले ॥ गोदोहनमात्रंतत्रस्थित्वाऽतिथिमाकांक्षेत् ॥ हस्तौपादौप्रक्षाल्याचम्यगृहं
प्रवेशयेत् ॥ शांतापृथिवीशिवमंतरिक्षंद्यौर्नोदेव्यभयंनोअस्तु ॥ शिवादिशः प्रदिशउद्दिशोनआपोविद्युतः
परिपातुसर्वतःशांतिः शांतिः शांतिः ॥ ॐवषट्तेवि॰ ॥ विष्णवेनमोविष्णवेनमोविष्णवेनमः ॥
इति वैश्वदेवः बलिहरणेनसह समाप्तः ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७ ॥ ॥ अथ सायंसंध्या प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथसायंसंध्याप्रारंभः ॥ प्रातःकालवदाचमनंप्राणायामंचकुर्यात् ॥ सायंसंध्या वृद्धाकृष्णाकृष्णवर्णाकृष्णवस्त्राकृष्णगंधाकृष्णमाल्यानुलेपनागरुडवाहनाविष्णुदैवत्याआहवनीयाग्न्युपस्थानासामवेदसंहितातृतीयाविष्णुसंध्यासत्यवतीनाम्नीममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंसायंसंध्योपास्तिंकरिष्ये ॥ ततःअपःप्राशनमंत्रपर्यंतंप्रातःकालवत् ॥ अग्निश्चेतिमंत्रस्य ॥ याज्ञवल्क्यउपनिषदऋषिः ॥ अग्निमामन्युमन्युपतिर्देवता ॥ प्रकृतिश्छंदः ॥ मंत्राचमनेविनियोगः ॥ ॐअग्निश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः ॥ पापेभ्योरक्षंताम् ॥ यदन्हापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणाशिश्ना ॥ अहस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सत्येज्योतिषिजुहोमिस्वाहा ॥ आचम्य॰ ॥ प्रातःकालवत्आपोहिष्ठेतिनवर्चःऋग्भिःमार्जनंकृत्वा ॥ तथागायत्रीमंत्रेणवरुणायत्रिवारमर्घ्यंदत्वा ॥ असावादित्योब्रह्म ॥ द्विराचमनंप्राणायामंचकृत्वा ॥ प्रातःकालवत्दिग्बंधासनंषडंगंतथाचगायत्रीजपः ॥ पुनश्चषडंगंकृत्वा ॥ यच्चिद्धितेतिदशर्चस्यसूक्तस्य ॥ अजीगर्तिःशुनःशेपऋषिः ॥ वरुणोदेवता ॥ गायत्रीच्छंदःवरुणोपस्थानेविनियोगः॥ ॐयच्चिद्धितेविशोयथाप्रदेववरुणव्रतं ॥ मिनीमसिद्यविद्यवि ॥ मानोवधायहत्नवेजिहीळानस्यरीरधः ॥ माहृणानस्यमन्यवे ॥ विमृळीकायतेमनोरथीरश्वंनसंदितं ॥ गीर्भिर्वरुणसीमहि ॥ पराहिमेविमन्यवःपतंतिवस्यइष्टये ॥ वयोनवसतीरुप ॥ कदाक्षत्रश्रियंनरमावरुणंकरामहे ॥ मृळीकायोरुचक्षसं ॥ १ ॥ तदित्समानमाशातेवेनंतानप्रयुच्छतः ॥ धृतव्रतायदाशुषे ॥ वेदायोवीनांपदमंतरिक्षेणपततां ॥ वेदनावःसमुद्रियः ॥ वेदमासोधृतव्रतोद्वादशप्रजावतः ॥ वेदायउपजायते ॥ वेदवातस्यवर्तनिमुरोर्ऋष्वस्यबृहतः ॥ वेदायेअध्यासते ॥ निषसादधृतव्रतोवरुणःपस्त्यास्वा ॥ साम्राज्यायसुक्रतुः ॥ यांसदासर्वभूतानीतिसमाप्तिपर्यंतंप्रातःकालवत्कुर्यात् ॥ ॥ इति सायंसंध्या समाप्ता ॥ ॥ शुभंभवतु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८ ॥ ॥ अथ गोपूजन ब्राह्मणपूजन भोजनविधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अद्यपूर्वोच्चरितएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौममआत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीरुद्ररूपिणीगोदेवताप्रीत्यर्थंयथाज्ञानेनयथामीलितोपचारैःपूजनमहंकरिष्ये ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ श्रीरुद्ररूपिण्यैगवेनमः॥ध्या॰ श्रीरु॰आ॰आ॰पा॰अ॰स्ना॰व॰अक्षतान्॰चं॰ पु॰ धू॰ दी॰ ओदननैवेद्यंसमर्पयामि॥गवामंगेष्वितिमंत्रेणप्रदक्षणामंत्रपुष्पंसमर्पयामि आगावोइत्येकवर्गंपठित्वा अनेनगोपूजनेनश्रीरुद्ररूपिणीगौः प्रीयतां॥ इ

तिगोपूजनंसमाप्तं॥अथब्राह्मणपूजा॥महाविष्णुस्वरूपिणेब्राह्मणायइदमासनंइदंपाद्यं ॥ चरणंपवित्रंविततंपुराणं॥येनपूतःस्तरंतिदुष्कृतानि॥तेनपवित्रेणशुद्धेनपूताः॥अतिपाप्मानमरातिंतरेम॥ भूमिदेवाग्रजन्मासित्वंविप्रपुरुषोत्तम ॥ प्रत्यक्षोयज्ञपुरुषोअर्घोयंप्रतिगृह्यतां॥इदंअर्घ्यंस • अ • गंधाःपांतु ॥ सौमंगल्यंचास्तु ॥अक्षताःपांतुआयुष्यमस्तु॥पुष्याणिपांतुसौश्रियमस्तु॥धूपंपातुदीपंपातुतांबूलंपातुदक्षिणाःपांतुऐश्वर्यमस्तु॥ नमोस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वते सहस्रकोटीयुगधारिणेनमः ॥ सकलाराधनैस्वर्चितमस्तु॥अस्तुसकलाराधनैस्वर्चितं ॥इति ब्राह्मणपूजनंसमाप्तं ॥ ॥ अथभोजनसंकल्पप्रारंभः ॥ ॥गायत्रीमंत्रेणअंन्नप्रोक्षणंकार्यं॥ॐप्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां ॥ एकोविष्णुर्महद्भूतंपृथक्भूतान्यनेकशः ॥ त्रीन्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेनब्राह्मणभोजनेनश्रीआराध्यदेवताप्रीयतां ॥ छ ॥

॥ १९ ॥ ॥ अथ त्रिसुपर्णप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ ॐ शांतिःशांतिःशांतिः ॥ ॐ ब्रह्ममेतुमां ॥ मधुमेतुमां ॥ ब्रह्ममेवमधुमेतुमां ॥ यास्तेसोमप्रजावत्सोभिसोअहं ॥ दुष्वंप्नहंदुरुःषह ॥ यास्तेसोमप्राणास्तांजुहोमि ॥ त्रिसुपर्णमयाचितंब्राह्मणायंदद्यात् ॥ ब्रह्महत्यांवाएतेघ्नंति येब्राह्मणास्त्रिसुपर्णंपठंति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पं

क्तिंपुनंति ॥ ॐ ब्रह्ममेधया ॥ मधुमेधया ॥ ब्रह्ममेवमधुमेधया ॥ अद्यानोदेवसवितः प्रजावत्सावीः सौभगं ॥ परादुष्वप्नियं ँ सुव ॥ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्मआसुव ॥ मधुवाताऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसिमधुमत्पार्थिवं ँ रजः ॥ मधुद्यौरस्तुनः पिता ॥ मधुमान्नोवनस्पतिर्मधुमा ँ अस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ यइमंत्रिसुपर्णमयाचितंब्राह्मणायदद्यात् ॥ भ्रूणहत्यांवाएतेघ्नंति ॥ येब्राह्मणास्त्रिसुपर्णपठंति॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पंक्तिंपुनंति ॥ ॐ ब्रह्ममेधवा ॥ मधुमेधवा ॥ ब्रह्ममेवमधुमेधवा ॥ ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां ॥ श्येनोगृध्राणा ँ स्वधितिर्वनानां ँ सोमःपवित्रमत्येतिरेभन् ॥ हं ँ सःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ ऋचेत्वारुचेत्वासमित्स्रवंतिसरितोनधेनाः॥ अंतर्हृदामनसापूयमानाः ॥ घृतस्यधाराअभिचाकशीमि ॥ हिरण्ययोवेतसोमध्यआसां ॥ तस्मिन्त्सुपर्णोमधुकृत्कुलायीभजंनास्तेमधुदेवताभ्यः ॥ तस्यासतेहरयःसप्ततीरेस्वधांदुहानाअमृतस्यधारां ॥ यइदंत्रिसुपर्णमयाचितंब्राह्मणायदद्यात् ॥ वीरहत्यांवाएतेघ्नंति ॥ येब्राह्मणास्त्रिसुपर्णपठं

ति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पंक्तिपुनंति ॥ ॐ तस्यैवंविदुषोयज्ञस्यात्मायजमानःश्रद्धापत्नीशरी
रमिध्ममुरोवेदिर्लोमानिबर्हिर्वेदः शिखाह्रदयंयूपःकामआज्यंमन्युः पशुस्तपोग्निर्दमःशमयितादक्षिणावाग्घो
ताप्राणउद्गाताचक्षुरध्वर्युर्मनोब्रह्माश्रोत्रमग्नधियावध्रियंतेसादीक्षायदश्नातितद्धविर्यत्पिबतितदस्यसोमपानंय
द्रमतेतदुपसदोयत्संचरत्युपविशत्युत्तिष्ठतेचसप्रवर्ग्योयन्मुखंतदाहवनीयोयाव्याहृतिराहुतिर्यदस्यविज्ञानंत
ज्जुहोतियत्सायंप्रातरत्तितत्समिधंयत्प्रातर्मध्यंदिनं सायंचतानिसवनानियेअहोरात्रेतेदर्शपूर्णमासौयेर्धमासा
श्चमासाश्चतेचातुर्मास्यानियऋतवस्तेपशुबंधायेसंवत्सराश्चपरिवत्सराश्चतेहर्गणाःसर्ववेदसंवाएतत्सत्रंयन्म
रणंतदवभृथएतद्वैजरामर्यमग्निहोत्रं सत्रंयएवंविद्वानुदगयनेप्रमीयतेदेवानामेवमहिमानंगत्वादित्यस्यसायु
ज्यंगच्छत्यथयोदक्षिणेप्रमीयतेपितॄणामेवमहिमानंगत्वाचंद्रमसःसायुज्यं सलोकतामाप्नोत्येतौवैसूर्याचं
द्रमसोर्महिमानौब्राह्मणोविद्वानभिजयतितस्माद्ब्रह्मणोमहिमानमाप्नोतितस्माद्ब्रह्मणोमहिमानं ॥ सहनाव
वतु ॥ सहनौभुनक्तु ॥ सहवीर्यंकरवावहै ॥ तेजस्विनावधीतमस्तुमाविद्विषावहै ॥ ॐ शांति शांतिः शांतिः ॥

॥ २० ॥ ॥ अथ परिवेषण प्रारंभः ॥



श्रीगणेशायनमः ॥ ॥ पात्रमध्येअन्नंवामेभक्ष्यभोज्यंदक्षिणेघृतपायसंपुरतःशाखादीन् ॥ एवंपरिवेषणं
कारयित्वा ॥ ब्राह्मणभोजनसंकल्पः ॥ गायत्रीमंत्रेणप्रोक्ष्य ॥ नानापात्रस्थमन्नंतस्मैतस्मैसंप्रददे ॥ ॐ
प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणा
म् ॥ १ ॥ एकोविष्णुर्महद्भूतंपृथक्भूतान्यनेकशः ॥ त्रीन्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥
अनेनब्राह्मणभोजनेनअमुकदेवताप्रीयतांनमम ॥ नमोदेव्यैमहादेव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रा
यैनियताःप्रणताःस्मताम् ॥ १ ॥ अनेनसुवासिनीभोजनेनअमुकदेवीप्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणम
स्तु ॥ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारंतारिषऊर्जंनोधेहिद्विपदेचतुष्पदे ॥ पार्वतीप
तेहरहरमहादेव ॥ ॥ इति परिवेषणम् समाप्तं ॥ ॥ छ ॥ ॥ छ ॥

॥ २१ ॥ ॥ अथ आपोशन प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ प्रांजलिःअन्नंप्रणम्यास्माकंनित्यमेतदस्तुइतिसंप्रार्थ्य ॥ ॐ पितुन्नुस्तोषंमहोध
र्माणंतविषीम् ॥ यस्यत्रितोव्योजसावृत्रंविपर्वमर्दयत् ॥ १ ॥ इतिमंत्रेणस्तुत्वा ॥ मानस्तोकेतनयेमान
आयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे ॥ १ ॥ ॐ
नमोवःकिरिकेभ्योदेवानांहृदयेभ्योनमोविक्षीणकेभ्योनमोविचिन्वत्केभ्योनमआनिर्हतेभ्यः ॥ १ ॥ ॐ
नमःशंभवेचमयोभवेचनमः शंकरायचमयस्करायचनमः शिवायचशिवतरायच ॥ १ ॥ इत्यभिमंत्रितो

दकेनान्नंप्रोक्ष्य ॥ सत्यंत्वर्तेनपरिषिंचामि ॥ इतिदिवा ॥ रात्रौतु ॥ ऋतंत्वासत्येनपरिषिंचामि ॥ इतिप्र
दक्षिणमन्नंपरिषिच्य ॥ दक्षिणतोभुविउदकधारांप्राक्संस्थांकृत्वातत्रबलित्रयंदद्यात् ॥ तद्यथा ॥ ॐभूपत
येस्वाहानमः ॥ ॐभुवनपतयेस्वाहानमः ॥ ॐभूतानांपतयेस्वाहानमः ॥ एवंबलित्रयंप्राक्संस्थंदत्वाउप
र्युदकंदत्वाबलीन्उद्धृत्यहस्तंप्रक्षाल्यआपोशनार्थंजलमादायवामहस्तमध्यमानामिकांगुष्ठैर्भोजनपात्रमाल
भ्य ॥ अन्नंब्रह्मारसोविष्णुर्भोक्तादेवोमहेश्वरः ॥ एवंध्यात्वातुयोभुंक्तेसोन्नदोषैर्नलिप्यते ॥ १ ॥ अंतश्च
रतिभूतेषुगुहायांविश्वतोमुखः ॥ त्वंयज्ञस्त्वंवषट्कारस्त्वंरुद्रस्त्वंप्रजापतिस्त्वंष्णोःपरमंपदममृतोपस्तरणमसि
स्वाहा ॥ इतिमंत्रेणनिःशब्दंतज्जलस्याचमनम् ॥ तर्जनीमध्यमांगुष्ठैः ॥ ॐप्राणायस्वाहाइदंप्राणायन
मम ॥ मध्यमानामिकांगुष्ठैः ॥ ॐअपानायस्वाहाइदं० ॥ कनिष्ठिकानामिकांगुष्ठैः ॥ ॐव्यानायस्वाहा
इदं० ॥ मध्यमानामिकांगुष्ठैः ॥ ॐउदानायस्वाहाइदं० ॥ सर्वाभिः ॥ ॐसमानायस्वाहाइदंस० ॥
जलंस्पृष्ट्वायथेष्टंभोजनंकुर्यात् ॥ ततोभोजनांतेपात्रस्थमन्नंकिंचिद्गृहीत्वाअवघ्राय ॥ उच्छिष्टभागधेयेभ्यो
नमः ॥ इतिभूमौविसृज्य ॥ उत्तरापोशनार्थंउदकंगृहीत्वा ॥ अमृतापिधानमसिस्वाहा ॥ इतिमंत्रेणतद
र्धंपीत्वा ॥ रौरवेपुण्यनिलयेपद्मार्बुदनिवासिनाम् ॥ अर्थिनामुदकंदत्तमक्षय्यमुपतिष्ठतु ॥ इतिमंत्रेणावशि
ष्टंजलंपितृतीर्थेनभूमौनिषिंच्यअंगणादौपाणिमुखेसंशोधयेत् ॥ हस्तौपादौप्रक्षाल्याचम्यशतपदानिगत्वा ॥
अगस्तिरग्निर्वडवानलश्चभुक्तंमयान्नंजरयत्यशेषम् ॥ सुखंममैतत्परिणामसंभवंयच्छत्वरोगोममचास्तुदेहः

॥ १ ॥ इत्युदरंपरिमृज्यतांबूलंभक्षयेत् ॥ ॥ इत्यापोशनम् समाप्तं ॥ ॥ छ ॥ ॥ छ ॥

॥ २२ ॥ ॥ श्रीसूक्त प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ हिण्यवर्णामितिपंचदशर्चस्यसूक्तस्यआनंदःकर्दमश्चिक्लीतेंदिरासुताऋषयः ॥
श्रीर्देवता ॥ अनुष्टुप्छंदः ॥ ऐंबीजं ॥ सौंशक्तिः क्लींकीलकं ॥ ममदारिद्र्यपरिहारार्थंऐश्वर्यप्राप्त्यर्थंश्री
सूक्तजपेविनियोगः ॥ अथन्यासः ॥ आनंदःकर्दमश्चिक्लीतेंदिरासुताऋषिभ्योनमः शिरसि ॥ अनुष्टुप्छं
दसेनमः मुखे ॥ श्रीर्देवतायैनमः हृदये ॥ ऐंबीजायनमः दक्षिणस्तने ॥ सौंशक्तयेनमः वामस्तने ॥
क्लींकीलकायनमःनाभौ ॥ ऐंअंगुष्ठा० ह्रींतर्ज० श्रींमध्य० ऐंअनामि० ह्रींकनिष्ठिका० श्रींकरतलक
र० एवंहृदयादि ॥ भूर्भुवस्वरोम्इतिदिग्बंधः ॥ अथध्यानं ॥ अरुणकमलसंस्थातद्रजःपुंजवर्णाकर
कमलधृतेष्टाभीतियुग्मांबुजाच ॥ मणिमुकुटविचित्रालंकृताकल्पजातैर्भवतुभुवनमातासंततंश्रीश्रियैनमः॥
मानसोपचारैःसंपूज्य ॥ श्रीसूक्तजपेविनियोगः ॥ ॐऐं ॐहिरण्यवर्णांहरिणींसुवर्णरजतस्रजां ॥ चंद्रां
हिरण्मयींलक्ष्मींजातवेदोममावह ॥ ॐऐं ॐक्लीं ॐतांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यां
हिरंण्यंविंदेयंगामश्वंपुरुषानहं ॥ ॐक्लीं ॐश्रीं ॐअश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीं ॥ श्रियं
देवीमुपह्वयेश्रीर्मादेवीर्जुषतां ॥ ॐश्रीं ॐक्लीं ॐकांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयं
तीं ॥ पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं ॐ क्लीं ॐ वदवद ॐ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलो

ऋ० ब्र० केदेवजुष्टामुदारां ॥ तांपद्मिनेमींशरणमहंप्रपद्येअलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ ॐ वदवद ॐ वाग्वादिनी ॐ श्री०सू०
आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्याअल
॥३०॥ क्ष्मीः ॥ ॐ वाग्वादिनी ॐ ऐं ॐ उपैतुमांदेवसखः कीर्तिश्चमणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृ
द्धिंददातुमे ॥ ॐ ऐं ॐ सौं ॐ क्षुत्पिपासामलाज्येष्ठाअलक्ष्मीर्नाशयाम्यहं ॥अभूतिमसमृद्धिंचसर्वानिर्णुद
मेगृहात् ॥ ॐ सौं ॐ हंसः ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपव्हये
श्रियं ॥ ॐ सोहं ॐ आँ ॐ मनसःकाममाकूतिंवाचःसत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतां
यशः ॥ ॐ आँ ॐ ह्रीं ॐ कर्दमेनप्रजाभूतामयिसंभवकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीं ॥
ॐ ह्रीं ॐ क्रौं ॐ आपस्रजंतुस्निग्धानिचिक्लीतवसमेगृहे ॥ नीचदेवींमातरंश्रियंवासयमेकुले ॥ ॐ क्रौं
ॐ क्लीं ॐ आर्द्रांयःकरिणींयष्टींसुवर्णांहेममालिनीं ॥ सूर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ ॐ क्लीं
ॐ स्त्रीं आर्द्रांपुष्करिणींपुष्टींपिंगलांपद्ममालिनीं ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ ॐ स्त्रीं ॐ
हुं ॐ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंप्रभूतंगावोदस्योश्वान्विंदेयंपुरुषानहं ॥ ॐ
हुं ॐस्वाहा ॐयःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं ॥ सूक्तंपंचदशर्चंचश्रीकामः सततंजपेत् ॥ ॥३०॥
ॐस्वाहा ॐम् इतिश्रीसूक्तविधानंसमाप्तं ॥ ऐं सौंक्लीं ऐंक्लीं श्रींक्लींवदवद वाग्वादिनी० ऐं--सौंहंसः
आंक्लींक्रों० क्लींस्त्रींहुंस्वाहा ॥ ॥ इतिविद्यारण्यभाष्यात् ॥ ॥ शुभंभवतु ॥ ॥ छ ॥

ऋ० ब्र० अवदक्षिणात्तात् ॥ अवचोर्ध्वात्तात् ॥ अवाधरात्तात् ॥ सर्वतोमांपाहिपाहिसमंतात् ॥ त्वंवाङ्मयस्त्वंचि ग०सू०
न्मयः ॥ त्वमानंदमयस्त्वंब्रह्ममयः ॥ त्वंसच्चिदानंदाद्वितीयोसि ॥ त्वंप्रत्यक्षंब्रह्मासि ॥ त्वंज्ञानमयोविज्ञा
॥३१॥ नमयोसि ॥ सर्वंजगदिदंत्वत्तोजायते ॥ सर्वंजगदिदंत्वत्तस्तिष्ठति ॥ सर्वंजगदिदंत्वयिलयमेष्यति ॥ सर्वं
जगदिदंत्वयिप्रत्येति ॥ त्वंभूमिरापोनलोनिलोनभः ॥ त्वंचत्वारिवाक्पदानि ॥ त्वंगुणत्रयातीतः ॥ त्वंकालत्र
यातीतः ॥ त्वंदेहत्रयातीतः ॥ त्वंमूलाधारस्थितोसिनित्यं ॥ त्वंशक्तित्रयात्मकः ॥ त्वांयोगिनोध्यायंतिनि
त्यं ॥ त्वंब्रह्मात्वंविष्णुस्त्वंरुद्रस्त्वमिंद्रस्त्वमग्निस्त्वंवायुस्त्वंसूर्यस्त्वंचंद्रमास्त्वंब्रह्मभूर्भुवःसुवरोम् ॥ गणादी
न्पूर्वमुच्चार्यवर्णादींस्तदनंतरं ॥ अनुस्वारःपरतरः ॥ अर्धेंदुलसितं ॥ तारेणरुद्धं ॥ एतत्तवमनुस्वरूपं ॥
गकारःपूर्वरूपं ॥ अकारोमध्यमरूपं ॥ अनुस्वारश्चांत्यरूपं ॥ बिंदुरुत्तररूपं ॥ नादःसंधानं ॥ संहि
तासंधिः ॥ सैषागणेशविद्या ॥ गणकऋषिः ॥ निचृद्गायत्रीच्छंदः ॥ गणपतिर्देवता ॥ ॐ गंगणपतयेन
मः ॥ एकदंतायविद्महेवक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचोदयात् ॥ एकदंतंचतुर्हस्तंपाशमंकुशधारिणम् ॥
रदंचवरदंहस्तैर्बिभ्राणंमूषकध्वजम् ॥ रक्तंलंबोदरंशूर्पकर्णकंरक्तवाससं ॥ रक्तगंधानुलिप्तांगंरक्तपुष्पैःसुपू
जितम् ॥ भक्तानुकंपिनंदेवंजगत्कारणमच्युतं ॥ आविर्भूतंचसृष्ट्यादौप्रकृतेःपुरुषात्परं ॥ एवंध्यायतियो ॥३१॥
नित्यंसयोगीयोगिनांवरः ॥ नमोव्रातपतयेनमोगणपतयेनमःप्रमथपतयेनमस्तेअस्तुलंबोदरायैकदंताय
विघ्ननाशिनेशिवसुतायवरदमूर्तयेनमः ॥ एतदथर्वशीर्षंयोधीते ॥ सब्रह्मभूयायकल्पते ॥ ससर्वतःसुखमेधते

॥ २३ ॥ ॥ अथ गणपतिसूक्त प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ गणपतिसूक्तप्रारंभः ॥ ॐम् ॥ आतूनइंद्रक्षुमंतंचित्रंग्राभंसंगृभाय ॥ महाहस्तीदक्षिणेन ॥ विद्माहित्वातुविकूर्मितुविदेष्णंतुवीमघं ॥ तुविमात्रमवोभिः ॥ नहित्वाशूरदेवानमर्तासोदित्संतं ॥ भीमंनगांवारयंते ॥ एतोन्विंद्रंस्तवामेशानंवस्वःस्वराजं ॥ नराधसामधिष्ठंनः ॥ प्रस्तोषदुपगासिषच्छ्रुवत्सामगीयमानं ॥ अभिराधसाजुगुरत् ॥ १ ॥ आनोभरदक्षिणेनाभिसव्येनप्रमृश ॥ इंद्रमानोवसोर्निर्भाक् ॥ उपक्रमस्वाभरधृषताधृष्णोजनानां ॥ अदाशूष्टरस्यवेदः ॥ इंद्रयउनुतेअस्तिवाजोविप्रेभिःसनित्वः ॥ अस्माभिःसुतंसनुहि ॥ सद्योजुवस्तेवाजाअस्मभ्यंविश्वश्चंद्राः ॥ वशैश्चमक्षूजरंते ॥ ॥ इति गणपतिसूक्तं समाप्तं ॥ ॥छ॥ ॥छ॥ ॥छ॥

॥ २४ ॥ ॥ अथ गणपति अथर्वशीर्षप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥ ॐ नमस्तेगणपतये ॥ त्वमेवप्रत्यक्षंतत्वमसि ॥ त्वमेवकेवलंकर्तासि ॥ त्वमेवकेवलंधर्तासि ॥ त्वमेवकेवलंहर्तासि ॥ त्वमेवसर्वंखल्विदंब्रह्मासि ॥ त्वंसाक्षादात्मासिनित्यं ॥ ऋतंवच्मि ॥ सत्यंवच्मि ॥ अवत्वंमां ॥ अववक्तारं ॥ अवश्रोतारं ॥ अवदातारं ॥ अवधातारं ॥ अवानूचानमवशिष्यं ॥ अवपश्चात्तात् ॥ अवपुरस्तात् ॥ अवोत्तरात्तात् ॥



॥ २५ ॥ ॥ अथ रुद्रसूक्त प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ रुद्रसूक्तप्रारंभः ॥ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअस्मिन्ननातुरं ॥ मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ॥ यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषु ॥ अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः ॥ सुम्नायन्निद्विशोअस्माकमाचरारिष्टवीराजुहवामतेहविः ॥ त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे ॥ आरेअस्मद्दैव्यंहेळोअस्यतुसुमतिमिद्वयमस्यावृणीमहे ॥ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ॥ हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥ २ ॥ इदंपित्रेमरुतामुच्यतेवचःस्वादोस्वादीयोरुद्रायवर्धनं ॥ रास्वाचनोअमृतमर्तभोजनंत्मनेतोकायतनयायमृळ ॥ मानोमहांतमुतमानोअर्भकंमानउक्षंतमुतमानउक्षितं ॥ मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिषः ॥ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे ॥ उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे ॥ भद्राहितेसुमतिर्मृळयत्तमाथावयमवइत्तेवृणीमहे ॥ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरसुम्नमस्मेतेअस्तु ॥ मृळाचनोअधिचब्रूहिदेवाधाचनःशर्मयच्छद्विबर्हाः ॥ अ

ससर्वविघ्नैर्नबाध्यते ॥ सपंचमहापापात्प्रमुच्यते ॥ सायमधीयानोदिवसकृतंपापंनाशयति ॥ प्रातरधीयानो रात्रिकृतंपापंनाशयति ॥ सायंप्रातःप्रयुंजानोअपापोभवति ॥ सर्वत्राधीयानोपविघ्नोभवति ॥ धर्मार्थकाम मोक्षंचविंदति ॥ इदमथर्वशीर्षमशिष्यायनदेयं ॥ योयदिमोहाद्दास्यति ॥ सपापीयान्भवति ॥ सहस्रा वर्तनात् ॥ यंयंकाममधीते ॥ तंतमनेनसाधयेत् ॥ अनेनगणपतिमभिषिंचति ॥ सवाङ्मीभवति ॥ चतुर्थ्या मनश्नंजपति ॥ सविद्यावान्भवति ॥ इत्यथर्वणवाक्यं ॥ ब्रह्माद्याचरणंविद्यात् ॥ नबिभेतिकदाचनेति ॥ योदूर्वांकुरैर्यजति ॥ सवैश्रवणोपमोभवति ॥ योलाजैर्यजति ॥ सयशोवान्भवति ॥ समेधावान्भवति ॥ योमोदकसहस्रेणयजति ॥ सवांछितफलमवाप्नोति ॥ यःसाज्यसमिद्भिर्यजति ॥ ससर्वंलभतेससर्वंलभते ॥ अष्टौब्राह्मणान्सम्यक्ग्राहयित्वा ॥ सूर्यवर्चस्वीभवति ॥ सूर्यग्रहेमहानद्यांप्रतिमासन्निधौवाजप्त्वा ॥ सि द्धमंत्रोभवति महाविघ्नात्प्रमुच्यतेमहादोषात्प्रमुच्यते ॥ महापापात्प्रमुच्यते ॥ ससर्व० ससर्व० यएवंवेद ॥ इत्युपनिषत् ॥ सहनाववतु ॥ सहनौभुनक्तु ॥ सहवीर्यंकरवावहै ॥ तेजस्विनावधीतमस्तुमाविद्विषावहै ॥ ॐ शांतिःशांतिःशांतिः ॥ तमुंष्टुहियःस्विषुःसुधन्वायोविश्वस्यक्षयतिभेषजस्य ॥ यक्ष्वामहेसौमनसायरुद्रंन मोभिर्देवमसुरंदुवस्य ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥इति गणपतिअथर्वशीर्ष समाप्तं॥ ॥ छ ॥

वोचामनमोअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् ॥ तंनोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउत द्यौः ॥ ॥ इति रुद्रसूक्तं समाप्तं ॥ ॥ शुभंभवतु ॥ ॥छ॥ ॥छ॥

॥ २६ ॥ ॥ अथ सौर प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ ॐमुदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ अपत्येतायवोय थानक्षत्रायंत्यक्तुभिः ॥ सूरायविश्वचक्षसे ॥ अदृश्रमस्यकेतवोविरश्मयोजनांअनु ॥ भ्राजंतोऽअग्नयोय था ॥ तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य ॥ विश्वमाभासिरोचनं ॥ प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानु षान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ १ ॥ येनापावकचक्षसाभुरण्यंतंजनांअनु ॥ त्वंवरुणपश्यसि ॥ विद्यामे षिरजस्पृथ्वहामिमानोऽअक्तुभिः ॥ पश्यंजन्मानिसूर्य ॥ सप्तत्वाहरितोरथेवहंतिदेवसूर्य ॥ शोचिष्केशंवि चक्षण ॥ अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः ॥ ताभिर्यातिस्वयुक्तिभिः ॥ उद्वयंतमसस्परिज्योतिष्पश्यंत उत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उद्यन्नद्यमित्रमहऽआरोहंनुत्तरांदिवं ॥ हृद्रोगंममसूर्यहरिमा णंचनाशय ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ॥ अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ उदगादय मादित्योविश्वेनसहसासह ॥ द्विषंतंमह्यंरंधयन्मोऽअहंद्विषतेरधं ॥ २ ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मि

त्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीऽअंतरिक्षंसूर्यऽआत्माजगतस्तस्थुषश्च ॥ सूर्योदेवीमुषसंरोचमानां
मर्योनयोषामभ्येतिपश्चात् ॥ यत्रानरोदेवयंतोयुगानिवितन्वतेप्रतिभद्रायभद्रं ॥ भद्राऽअश्वाहरितःसूर्यस्य
चित्राऽएतग्वाऽअनुमाद्यासः ॥ नमस्यंतोदिवऽआपृष्ठमस्थुःपरिद्यावापृथिवीयंतिसद्यः ॥ तत्सूर्यस्यदेवत्वंत
न्महित्वंमध्याकर्तोर्विततंसंजभार ॥ यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ तन्मित्रस्यवरु
णस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे ॥ अनंतमन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितःसंभरंति ॥ अद्यादेवाऽ
उदितासूर्यस्यनिरंहसःपिपृतानिरवद्यात् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीऽउतद्यौः ॥ ३ ॥
इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान् ॥ एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुः ॥
कृष्णंनियानंहरयःसुपर्णाऽअपोवसानादिवमुत्पतंति ॥ तऽआववृत्रंत्सदनादृतस्यादिद्घृतेनपृथिवीव्युद्यते ॥
हंसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाअद्रिजा
ऋतं ॥ यत्वासूर्यस्वर्भानुस्तमसाविध्यदासुरः ॥ अक्षेत्रविद्यथामुग्धोभुवनान्यदीधयुः ॥ ४ ॥ यदद्यसूर्यब्र
वोनागाऽउद्यन्मित्रायवरुणायसत्यं ॥ वयंदेवत्रादितेस्यामतवप्रियासोऽअर्यमन्गृणंतः ॥ उत्सूर्योबृहदर्चींष्य



श्रेत्पुरुविश्वाजनिममानुषाणां ॥ समोदिवाददृशेरोचमानःक्रत्वाकृतःसुकृतःकर्तृभिर्भूत् ॥ ससूर्यप्रति
पुरोनऽउद्गाऽएभिःस्तोमेभिरेतशेभिरेवैः ॥ प्रनोमित्रायवरुणायवोचोनागसोऽअर्यम्णेऽअग्नयेच ॥ विनःसह
स्रंशुरुधोरदंत्वृतावानोवरुणोमित्रोऽअग्निः ॥ यच्छंतुचंद्राऽउपमंनोऽअर्कमानःकामंपूपुरंतुस्तवानाः ॥ ५ ॥
उद्वेतिसुभगोविश्वचक्षाःसाधारणःसूर्योमानुषाणां ॥ चक्षुर्मित्रस्यवरुणस्यदेवःश्चर्मेववयःसमविव्यक्तमांसि ॥
उद्वेतिप्रसवीताजनानांमहान्केतुरर्णवःसूर्यस्य ॥ समानंचक्रंपर्याविवृत्संन्यदेतशोवहतिधूर्षुयुक्तः ॥ विभ्रा
जमानऽउषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः ॥ एषमेदेवःसविताचच्छंदयःसमानंनप्रमिनातिधाम ॥ दिवो
रुक्मऽउरुचक्षाऽउदेतिदूरेऽअर्थस्तरणिर्भ्राजमानः ॥ नूनंजनाःसूर्येणप्रसूताऽअयन्नर्थानिकृणवन्नपांसि ॥
यत्राचक्रुरमृतागातुमस्मैश्येनोनदीयन्नन्वेतिपाथः ॥ उदुत्यंदर्शतंवपुर्दिवऽएतिप्रतिव्हरे ॥ यदीमाशुर्वहति
देवऽएतशोविश्वस्मैचक्षसेऽअरं ॥ शीर्ष्णःशीर्ष्णोजगतस्तस्थुषस्पतिंसमयाविश्वमारजः ॥ सप्तस्वसारःसु
वितायसूर्यवहंतिहरितोरथे ॥ ६ ॥ तच्चक्षुर्देवहितंशुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतं ॥ ब
ण्महाअसिसूर्यबळादित्यमहाअसि ॥ महस्तेसतोमहिमापनस्यतेद्धादेवमहाअसि ॥ बट्सूर्यश्रवसामहाअ

सिसत्रादेवमहांअसि ॥ मन्हादेवानामसुर्यःपुरोहितोविभुज्योतिरदाभ्यं ॥ ७ ॥ नमोमित्रस्यवरुणस्यचक्ष
सेमहोदेवायतदृतंसपर्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसत ॥ सामासत्योक्तिःपरिपातुवि
श्वतोद्यावाचयत्रततनन्नहानिच ॥ विश्वमन्यंनिविशतेयदेजतिविश्वाहापोविश्वाहोदेतिसूर्यः ॥ नतेअदेवः
प्रदिवोनिवासतेयदेतशेभिःपतैरथर्यसि ॥ प्राचीनमन्यदनुवर्त्ततेरजऽउदन्येनज्योतिषायासिसूर्य ॥ येन
सूर्यज्योतिषाबाधसेतमोजगच्चविश्वमुदियर्षिभानुना ॥ तेनास्मद्विश्वामनिरामनाहुतिमपामीवामपदुष्वप्न्यं
सुव ॥ विश्वस्यहिप्रेषितोरक्षसिव्रतमहेळयन्नुच्चरसिस्वधाऽअनु ॥ यदद्यत्वासूर्योपब्रवामहैतन्नोदेवाऽअनुमं
सीरतक्रतुं ॥ तन्नोद्यावापृथिवीतंनऽआपइंद्रःशृण्वंतुमरुतोहवंवचः ॥ माशूनेभूमसूर्यस्यसंदृशिभद्रंजीवंतो
जरणामशीमहि ॥८॥ विश्वाहात्वासुमनसःसुचक्षसःप्रजावंतोऽअनमीवाऽअनागसः॥ उद्यंतंत्वामित्रमहोदिवे
दिवेज्योक्जीवाःप्रतिपश्येमसूर्य ॥ महिज्योतिर्बिभ्रतंत्वाविचक्षणभास्वंतंचक्षुषेचक्षुषेमयः॥आरोहंतंबृहतः
पाजसस्परिवयंजीवाःप्रतिपश्येमसूर्य ॥ यस्यतेविश्वाभुवनानिकेतुनाप्रचेरतेनिचविशंतेऽअक्तुभिः ॥ अ
नागास्त्वेनहरिकेशसूर्यान्हान्हानोवस्यसावस्यसोदिहि ॥ शन्नोभवचक्षसाशंनोऽअन्हाशंभानुनाशंहिमाशं
घृणेन ॥ यथाशमध्वंच्छमसद्दुरोणेतत्सूर्यद्रविणंधेहिचित्रं ॥ अस्माकंदेवाऽउभयायजन्मनेशर्मयच्छताद्विप



देचतुष्पदे ॥ अदत्पिबदूर्जयमानमाशितंतदस्मेशंयोररपोदधातन ॥ यद्वोदेवाश्चकृमजिह्वयागुरुमनसो
वाप्रयुतीदेवहेळनं ॥ अरावायोनोऽअभिदुच्छुनायतेतस्मिंतदेनोवसवोनिधेतन ॥ ९ ॥ सूर्योनोदिवस्पातुवा
तोऽअंतरिक्षात् ॥ अग्निर्नःपार्थिवेभ्यः ॥ जोषासवितर्यस्यतेहरःशतंसवांअर्हति ॥ पाहिनोदिद्युतःपतंत्याः ॥
चक्षुर्नोदेवःसविताचक्षुर्नऽउतपर्वतः ॥ चक्षुर्धाताद्धधातुनः ॥ चक्षुर्नोधेहिचक्षुषेचक्षुर्विख्यैतनूभ्यः ॥ संचे
दंविचपश्येम ॥ सुसंदृशंत्वावयंप्रतिपश्येमसूर्य ॥ विपश्येमनृचक्षसः ॥ १० ॥ विभ्राड्बृहत्पिबतुसोम्यं
मध्वायुर्दधद्यज्ञपतावविह्रुतं ॥ वातजूतोयोऽअभिरक्षतित्मनाप्रजाःपुपोषपुरुधाविराजति ॥ विभ्राड्बृहत्सु
भृतंवाजसातमंधर्मंदिवोधरुणेसत्यमर्पितं ॥ अमित्रहावृत्रहादस्युहंतमंज्योतिर्जज्ञेऽअसुरहासपत्नहा ॥ इ
दंश्रेष्ठंज्योतिषांज्योतिरुत्तमंविश्वजिद्धनजिदुच्यतेबृहत् ॥ विश्वभ्राड्भ्राजोमहिसूर्योदृशऽउरुपप्रथेसहऽओ
जोऽअच्युतं ॥ विभ्राजंज्योतिषास्वरगच्छोरोचनंदिवः ॥ येनेमाविश्वाभुवनान्याभृताविश्वकर्मणाविश्व
देव्यावता ॥ ११ ॥ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः ॥ पितरंचप्रयंत्स्वः ॥ अंतश्चरतिरोचनास्यप्रा
णादपानती ॥ व्यख्यन्महिषोदिवं ॥ त्रिंशद्धामाविराजतिवाक्पतंगायधीयते ॥ प्रतिवस्तोरहद्युभिः
॥ १२ ॥ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्र्यजायततः समुद्रोऽअर्णवः ॥ समुद्रादर्णवाद

धिसंवत्सरोऽअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥
दिवंचपृथिवींचांतरिक्षमथोस्वः॥सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानः
सुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥ श्रीसवितासूर्यनारायणार्पणमस्तु ॥ इति सौरंसमाप्तं ॥

॥ २७ ॥ ॥ अथ विष्णुसूक्त प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ विष्णुसूक्तप्रारंभः ॥ ॐ म् ॥ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजां
सि ॥ योअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायः ॥ प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरि
ष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वा ॥ प्रविष्णवेशूषमेतुमन्मगिरिक्षितउरुगायायवृ
ष्णे ॥ यइदंदीर्घंप्रयतंसधस्थमेकोविममेत्रिभिरित्पदेभिः ॥ यस्यत्रीपूर्णामधुनापदान्यक्षीयमाणास्वधयाम
दंति ॥ यउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वा ॥ तदस्यप्रियमभिपाथोअश्यांनरोयत्रदेवयवो
मदंति ॥ उरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेपरमेमध्वउत्सः ॥ तावांवास्तून्युश्मसिगमध्यैयत्रगावोभूरि
शृंगाअयासः ॥ अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरि ॥ १ ॥ प्रवःपांतमंधसोधियायतेमहेशूराय
विष्णवेचार्चत ॥ यासानुनिपर्वतानामदाभ्यामहस्तस्थतुरर्वतेवसाधुना ॥ त्वेषमित्थासमरणंशिमीवतोरिंद्राविं



ष्णूसुतपावामुरुष्यति ॥ यामर्त्यायप्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥ ताईंवर्धंतिमह्यस्यपौंस्यं
निमातरानयतिरेतसेभुजे ॥ दधातिपुत्रोवरंपरंपितुर्नामतृतीयमधिरोचनेदिवः ॥ तत्तदिदस्यपौंस्यंगृणीमसी
नस्यत्रातुरवृकस्यमीळ्हुषः ॥ यःपार्थिवानित्रिभिरिद्विगामभिरुरुक्रमिष्टोरुगायायजीवसे ॥ द्वेइदस्यक्रम
णेस्वर्दृशोभिख्यायमर्त्योभुरण्यति ॥ तृतीयमस्यनकिरादधर्षतिवयश्चनपतयंतःपतत्रिणः ॥ चतुर्भिःसाकं
नवतिंचनामभिश्चक्रंनवृत्तंव्यतीरवीविपत् ॥ बृहच्छरीरोविमिमानऋक्वभिर्युवाकुमारःप्रत्येत्याहवं ॥
॥ २ ॥ भवामित्रोनशेव्योघृतासुतिर्विभूतद्युम्नएवयाउसप्रथाः ॥ अधातेविष्णोविदुषाचिदर्ध्यःस्तोमोयज्ञश्च
राध्योहविष्मता ॥ यःपूर्व्यायवेधसेनवीयसेसुमज्जानयेविष्णवेददाशति ॥ योजातमस्यमहतोमहिब्रवत्से
दुश्रवोभिर्युज्यंचिदभ्यसत् ॥ तमुस्तोतारःपूर्व्यंयथाविदऋतस्यगर्भंजनुषापिपर्तन ॥ आस्यजानंतोनामचि
द्विवक्तनमहस्तेविष्णोसुमतिंभजामहे ॥ तमस्यराजावरुणस्तमश्विनाक्रतुंसचंतमारुतस्यवेधसः ॥ दाधार
दक्षमुत्तममहर्विदंव्रजंचविष्णुःसखिवांअपोर्णुते ॥ आयोविवायसचथायदैव्यइंद्रायविष्णुः सुकृतेसुकृत्त
रः ॥ वेधाअजिन्वत्त्रिषधस्थआर्यमृतस्यभागेयजमानमाभजत् ॥ ३ ॥ ॥ इति विष्णुसूक्तं ॥ समाप्तं ॥

श्रीगणेशायनमः ॥ ॥ देवीसूक्तप्रारंभः ॥ इयमंददाद्रभसमृणच्युतंदिवोदासंवध्र्यश्वायदाशुषे ॥ या शश्वंतमाचखादावसंपणितर्तेदात्राणितविषासरस्वति ॥ इयंशुष्मेभिर्बिसखाइवारुजत्सानुगिरीणांतविषेभि रूर्मिभिः ॥ पारावतघ्नीमवसेसुवृक्तिभिःसरस्वतीमाविवासेमधीतिभिः ॥ सरस्वतिदेवनिदोनिबर्हयप्रजां विश्वस्यबृसयस्यमायिनः ॥ उतक्षितिभ्योवनीरविंदोविषमेभ्योअस्रवोवाजिनीवति ॥ प्रणोदेवीसरस्वतीवा जेभिर्वाजिनीवती ॥ धीनामवित्र्यवतु ॥ यस्त्वादेविसरस्वत्युपब्रूतेधनेहिते ॥ इंद्रंनवृत्रतूर्ये ॥ १ ॥ त्वंदे विसरस्वत्यवावाजेषुवाजिनि ॥ रदापूषेवनःसनिं ॥ उतस्यानःसरस्वतीघोराहिरण्यवर्तनिः ॥ वृत्रघ्नीवष्टिसु ष्टुतिं ॥ यस्याअनंतोअह्रुतस्त्वेषश्चरिष्णुरर्णवः ॥ अमश्चरतिरोरुवत् ॥ सानोविश्वाअतिद्विषःस्वसॄरन्याऋ तावरी ॥ अतन्नहेवसूर्यः ॥ उतनःप्रियाप्रियासुसप्तस्वसासजुष्टा ॥ सरस्वतीस्तोम्याभूत् ॥२॥ आपप्रुषीपा र्थिवान्युरुरजोअंतरिक्षं ॥ सरस्वतीनिदस्पातु ॥ त्रिषधस्थासप्तधातुःपंचजातावर्धयंती ॥ वाजेवाजेह व्याभूत् ॥ प्रयामहिम्नामहिनासुचेकितेद्युम्नेभिरन्याअपसामपस्तमा ॥ रथइवबृहतीविभ्वनेकृतोपस्तुत्या

तिसूर्यायप्रदर्श्यत्रिस्ताडयेत् ॥ अथपूर्वोच्चारित० प्राप्त्यर्थंश्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थंयज्ञोपवीतधारण महंकरिष्ये ॥ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंब लमस्तुतेजः ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ इति यज्ञोपवितमंत्रः समाप्तः ॥ ॥छ॥ ॥छ॥

## ॥ ३२ ॥ ॥ अथ समंत्रक श्रावणी प्रारंभः ॥ ॥

श्रीगणेशायनमः ॥ ॥ अथसमंत्रकोत्सर्जनोपाकर्मप्रारंभः ॥ सामग्रीदर्भदूर्वामृत्गोमयभस्मतिलयव तांबूलतंडुलपूगफलनारिकेलफलवस्त्रयज्ञोपवीतचरुदधिसक्तुसमित्घृतइंधनवेणुधमनीगुडगोमूत्रपयदधि धूपदीपगंधपुष्पाक्षतारंगवल्लीपलाशपर्णदर्वीस्रुवाद्रोणआसनआचमनपात्रतांम्रकलशजलनिषेकपात्राणिब्र ह्मचारीअस्तिचेत्मेखलाअजिनकौपीनदंडएतान्यपिसंपाद्य॥ ॥छ॥ ॥छ॥ ॥छ॥

### ॥ ॥ अथ पंचगव्यमेलन प्रारंभः ॥ ॥

श्रीगणेशायनमः ॥ ॥ अथपंचगव्यमेलनप्रारंभः ॥ ॥ आचम्यप्राणानायम्यदेशकालौमृत्वाश्रीपरमे श्वरप्रीत्यर्थंपंचगव्यमेलनंकरिष्ये ॥ गायत्र्यागाथिनोविश्वामित्रःसवितागायत्री ॥ गोमूत्रप्रक्षेपणेवि० ॥ ॐ तत्सवि० ॥ गंधद्वारेत्यस्यानंदःश्रीरनुष्टुप् ॥ गोमयप्रक्षे० ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ई श्वरींसर्वभूतानांतामिहोपव्हयेश्रियं ॥ आप्यायस्वेत्यस्यगौतमःसोमोगायत्री ॥ पयःप्रक्षेपणे० ॥ ॐ ॥

क्र०ब्र० पं०ग०

॥४५॥

आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ दधिक्राव्णोवामदेवोदधिक्रावानुष्टुप् ॥ दधिप्रक्षेप० ॥ ॐ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ शुक्रमसिज्योतिरसितेजोसि ॥ इति घृतं ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां ॥ इतिकुशोदकं ॥ आपोहिष्ठेतितिसृणामांबरीषः सिंधुद्वीपआपोगायत्री ॥ पंचगव्यालोडनेविनि० ॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ इतिपंचगव्यकरणं ॥ सर्वैःसहआचम्यप्राणानायम्य ॥ देशकालौस्मृत्वाममशरीरशुध्यर्थं पंचगव्यप्राशनंकरिष्ये ॥ यत्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्राशनंपंचगव्यस्यदहत्वग्निरिवेंधनं ॥ ॐ पिबेत् ॥ आचम्यएवंत्रिः ॥ ॥ ॥ इति पंचगव्यमेलन प्राशनविधिः समाप्तः ॥ ॥ दत्तात्रेयार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥

॥ ॥ अथोत्सर्जन प्रयोग प्रारंभः ॥ ॥

॥४५॥

आचम्यद्विदर्भपवित्रेधृत्वाप्राणानायम्य ॥ श्रीमन्महागणाधिपतयेनमः ॥ इष्टदे० ॥ सुमुखश्चै० ॥ शुभतिथौ आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ममाध्याप्यानांचाधीतानांछंदआदीनांयातयामतानिरासेन आप्यायनद्वाराश्रीपरमेश्वरप्रीत्यर्थंउत्सर्जनाख्यंकर्मकरिष्ये ॥ तदादौनिर्विघ्नतासिध्यर्थंमहागणपतिपूजांकरिष्ये ॥ भूःगणपतिंआवाहयामि ॥ भुवःगण० ॥ स्वःगण० ॥ भूर्भुवःस्वःगण० ॥ गणानांत्वाशौनकोगृत्समदोगणपतिर्जगती ॥ गणपत्यावाहनेविनियोगः ॥ ॐ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ भूर्भुवस्वःमहागणपतयेनमः ध्यानं० ॥ एवंषोडशोपचारपूजांकुर्यात् ॥ वक्रतुंडमहाकायसूर्यकोटिसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ अनेनपूजनेनगणपतिःप्रीयतां ॥ यांतुदेवगणाः सर्वेपूजामादायपार्थिवीं ॥ इष्टकामप्रसिध्यर्थंपुनरागमनायच ॥ उत्सर्जनहोमंकर्तुंस्थंडिलादिसर्वंकर्मकरिष्ये ॥ गोमयादिलिप्तेशुद्धेदेशेशुद्धमृदाईशान्यारंभंउदक्संस्थंचतुरस्त्रंचतुरंगुलोन्नतमंगुलोन्नतंवाचतुर्दिक्षुमिलित्वाद्विसप्तत्यंगुलपरिमितफलितमष्टादशांगुलविस्तृतहोमानुसारेणतदधिकंवानतुततोन्यूनंमध्योन्नतंस्थंडिलंकुर्यात् ॥ तद्गोमयेनप्रदक्षिणमुपलिप्य ॥ दक्षिणेष्टौउदीच्यांद्वेप्रतीच्यांचतुः प्राच्यामर्धइतिअंगुलानित्यक्त्वा ॥ दक्षिणोपक्रमामुदक्संस्थांप्रादेशमात्रामेकांलेखांलिखित्वातस्यादक्षिणोत्तरयोः प्रागायतेपूर्वरेखयाअसंसृष्टप्रादेशसंमितेद्वेलेखेलिखित्वातयोर्मध्येपरस्परमसंसृष्टाउदकसंस्थाः प्रागायताः प्रादेशसंमितास्तिस्त्रइतिषड्लेखायज्ञियशाकलमूलेनदक्षिणहस्तेनोल्लिख्य ॥ लेखासुतच्छकलमुदगग्रंनिधाय ॥ स्थंडिलमद्भिरभ्युक्ष्यशाकलमाग्नेय्यांनिरस्यपाणिंप्रक्षाल्यवाग्यतोभवेत् ॥ ततस्तैजसेनासंभवेमृन्मयेनवापात्रयुग्मेनसंपुटीकृत्यसुवासिन्याश्रोत्रिया

गारात्स्वगृहाद्वासमृद्धंनिर्धूममग्निमाहृतंस्थंडिलादाग्नेय्यांनिधाय ॥ जुष्टोदमूनाआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप्
एह्यग्नेराहूगणोगौतमोग्निस्त्रिष्टुप् ॥ अग्न्यावाहनेविनियोगः ॥ ॐजुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुप
याहिविद्वान् ॥ विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि ॥ एह्यग्नइहहोतानिषीदादब्धःसुपु
रएताभवानः ॥ अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान् ॥ इत्यक्षतैरावाह्यआच्छादनंदूरी
कृत्यसमस्तव्याहृतीनांपरमेष्ठीप्रजापतिः प्रजापतिर्बृहती ॥ अग्निप्रतिष्ठापनेविनियोगः ॥ ॐ भूर्भुवःस्वः
बलवर्धननामानमग्निंप्रतिष्ठापयामि ॥ प्रोक्षितेंधनानिनिक्षिप्य ॥ वेणुधमन्याप्रबोध्यध्यायेदेवं चत्वारिशृंगा
गौतमोवामदेवोग्निस्त्रिष्टुप् ॥ अग्निमूर्तिध्यानेविनियोगः ॥ ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्ता
सोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश ॥ स्मृतिमंत्राश्च ॥ सप्तहस्तश्चतुःशृंगःसप्त
जिव्होद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥
बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् ॥ मेषारूढोजटाबद्धोगौरवर्णो
महौजसः ॥ धूम्रध्वजोलोहिताक्षःसप्तार्चिःसर्वकामदः ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ एष
हिदेवःप्रदिशोनुसर्वाःपूर्वोहिजातःसउगर्भेअंतः॥सविजायमानःसजनिष्यमाणःप्रत्यङ्मुखस्तिष्ठतिविश्वतो
मुखः ॥ अग्नेशांडिल्यगोत्रवैश्वानरमेषारूढवरप्रदप्राङ्मुखोदेवाग्नेममसन्मुखोवरदोभव ॥ समिद्धयंत्रयं



वादायउत्सर्जनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजाप
तिंप्रजापतिंचाघारदेवतेआज्येनअग्नीषोमौचक्षुषीआज्येन ॥ अत्रप्रधानं ॥ सावित्रीं ब्रह्माणं श्रद्धां मेधां
प्रज्ञां धारणां सदसस्पतिं अनुमतिं छंदांस्यृषीन् एताःप्रधानदेवताः आज्येन पुनरत्रप्रधानं अग्निं अप्त
णसूर्यान् अग्निं शकुंतं अग्निं मित्रावरुणौ अग्निअपः अग्निं मरुतः अग्निं विश्वान्देवान् अग्निं इंद्रासो
मौ इंद्रं आग्नामरुतः पवमानसोमं सोमं संज्ञानम् एताःप्रधानदेवताःगृहसिद्धान्नद्रव्येण शेषेण स्विष्टकृ
तमग्निमिध्मसंनहनेनरुद्रमयासमग्निंदेवान् विष्णुमग्निंवायुंसूर्यंप्रजापतिंचैताः प्रायश्चित्तदेवताआ
ज्येनज्ञाताज्ञातदोषनिबर्हणार्थंत्रिवारमग्निं मरुतश्चाज्येन विश्वान्देवान्संस्रावेणयक्ष्ये अंगदेवताः प्रधा
नदेवताः सर्वाःसंनिहिताःसंतु एवं सांगोपांगेन कर्मणासद्योयक्ष्ये समस्तव्याहृतीनां परमेष्ठी प्रजाप
तिःप्रजापतिर्बृहतीअन्वाधानसमिद्धोमेवि० ॥ ॐ भूर्भुवःस्वःस्वाहाप्रजापतयइदंनमम ॥ अग्न्यायत
नादष्टांगुलपरिमितेदेशेऐशानींदिशमारभ्यप्रदक्षिणंसमंतात्सोदकेनपाणिनात्रिः परिमृज्यपूर्वमुपरिनिहितद
र्भैर्दशांगुलमितेदेशेप्राच्यादिषुपरिस्तृणीयात् ॥ तत्रप्राच्यांप्रतीच्यांचोदगग्रादर्भाः ॥ अवाच्यामुदीच्यांच
प्रागग्राः ॥ पूर्वपश्चात्परिस्तरणमूलयोरुपरिदक्षिणपरिस्तरणं ॥ उत्तरपरिस्तरणंतुतदग्रयोरधस्तात् ॥ ते
चदर्भाअनियतसंख्याएकैकस्यांदिशिचत्वारश्चत्वारइत्येवंषोडशवा ॥ ततोग्नेर्दक्षिणतोब्रह्मासनार्थं ॥ उत्त
रतश्चपात्रासादनार्थंकांश्चित्प्रागग्रान्दर्भानास्तृणीयात् ॥ अग्नेरीशानतस्त्रिरंभसापरिषिच्य ॥ उत्तरास्तीर्णे

षुदर्भेषुदक्षिणसव्यपाणिभ्यांक्रमेण ॥ चरुस्थालीप्रोक्षण्यौदर्वीस्रुवौप्रणीताआज्यपात्रेइध्माबर्हिषी वेत्येता
वतामेवासादनं ॥ ततःप्रोक्षणीपात्रमुत्तानंकृत्वा ॥ तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रकुशद्वयरूपेपवि
त्रेनिधाय ॥ शुद्धाभिरद्भिस्तत्पात्रंपूरयित्वागंधपुष्पाक्षतादिक्षिप्त्वाहस्तयोरंगुष्ठोपकनिष्ठिकाभ्यामुदगग्रेपृथ
क्पवित्रेधृत्वाअपस्त्रिरुत्पूय ॥ पात्राण्युत्तानानिकृत्वाइध्मंचविस्रस्य ॥ सर्वाणिपात्राणित्रिःप्रोक्षयेत् ॥ ता
अपःकिंचित्कमंडलौक्षिपेदित्येके ॥ प्रणीतापात्रमग्नेःप्रत्यङ्निधायतत्रप्रागग्रेपवित्रेनिधायोत्पूताभिरद्भि
स्तत्पात्रंपूरयित्वागंधपुष्पाक्षतान्निक्षिप्यमुखसममुद्धृत्य ॥ अग्नेरुत्तरतोदर्भेषुनिधायतेपवित्रेगृहीत्वा ॥ अ
न्यैर्दर्भैराच्छादयेत् ॥ ततःतेपवित्रेआज्यपात्रेनिधाय तत्पात्रंपुरतःसंस्थाप्य तस्मिन्नाज्यमासिच्यअग्नेरुत्त
रतःस्थितांगारान्भस्मनासहाग्नेरुदक्परिस्तरणाद्बहिर्निरूह्यतेष्वाज्यपात्रमधिश्रित्यज्वलतादर्भोल्मुकेनाव
ज्वल्यांगुष्ठपर्वमात्रंप्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्यगृहसिद्धान्नंचरुस्थालीपात्रेनिधायपुनर्ज्वलतातेनै
वदर्भोल्मुकेनचरुणासहाज्यं त्रिःपर्यग्निकृत्वातदुल्मुकमपास्याप ः स्पृष्ट्वाआज्यपात्रंभुविकर्षन्निवोदगुद्वा
स्यांगारानग्नौप्रत्यस्यापःस्पृष्ट्वातत्रस्थमेवाज्यं ॥ सवितुष्ट्वाहिरण्यस्तूपःसवितापुरउष्णिक् ॥ आज्यस्योत्पव
ने० ॥ ॐसवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिःप्रागुत्पुनाति॥सकृन्मत्रेणद्विस्तूष्णीं
उत्तानपाणिद्वयांगुष्ठोपकनिष्ठिकाभ्यामंतयोरसंसृष्टगृहीताभ्यामुदगग्राभ्यांपवित्राभ्यांप्रागुत्पूयतेपवित्रेअ
द्भिःप्रोक्ष्याग्नौप्रहरेत् ॥ ॐ स्कंदायस्वाहा ॥ स्कंदायइ० ॥ अथाग्नेःपश्चात्परिस्तरणाद्बहिरात्मनोग्रतोभू



मिंप्रोक्ष्यतत्रबर्हिःसन्नहनींरज्जुमुदगग्रांप्रसार्यतस्यांबर्हिः ः प्रागग्रमुदगपवर्गमविरलमास्तीर्यतस्मिन्नाज्यपात्रं
निधायस्रुवादिसंमार्जयेत् ॥ दक्षिणेनहस्तेनस्रुक्स्रुवौगृहीत्वासव्येनकांश्चिद्दर्भानादायसहैवाग्नौप्रताप्यस्रु
चंनिधाय स्रुवंवामहस्तेगृहीत्वादक्षिणेन हस्तेन स्रुवस्यबिलंदर्भाग्रैः प्रागादिप्रागपवर्गंत्रिःसम्मृज्याधस्ता
द्दर्भाग्रेणैवाभ्यात्मंबिलपृष्ठंत्रि ः सम्मृज्यततोदर्भाणांमूलैर्दंडस्याधस्ताद्बिलपृष्ठादारभ्ययावदुपरिष्टाद्बिलंताव
त्त्रिःसम्मृज्याद्भिःप्रोक्षस्रुवंनिष्टप्याज्यस्थाल्याउत्तरतः स्रुगप्येवंनिधायोदकंस्पृष्ट्वातैरेवदर्भैर्जुहूं चैवमेवसंमृ
ज्यस्रुवादुत्तरतोनिधायदर्भानद्भिःप्रक्षालयित्वाग्नावनुप्रहरेत्॥ गृहसिद्धान्नमग्नावधिश्रित्याभिघार्यत्रिःप्रोक्ष्यउ
दगुद्वास्यआज्यादृक्षिणतोबर्हिषिनिधायपुनरप्यभिघार्यएकादशांगुलपरिमितेदेशेगंधाक्षतपुष्पैरग्निंसमंत्रमर्च
येत्॥विश्वानिनइतितिसृणांवसुश्रुतोग्निस्त्रिष्टुप्॥द्वाभ्यामग्न्यर्चनेअंत्याग्निप्रार्थनेविनि० ॥ ॐविश्वानिनोदुर्ग
हाजातवेदः ॥ सिंधुन्नावादुरितातिपर्षि ॥ अग्नेअत्रिवन्नमसागृणानः ॥ अस्माकंबोध्यवितातनूनां ॥
यस्त्वांहृदाकीरिणामन्यमानः ॥ अमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहि ॥ प्रजाभिरग्नेअ
मृतत्वमश्यां ॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिन्नंशते
स्वस्ति ॥ ततःआत्मानंचालंकृत्यहस्तंप्रक्षाल्यइध्मबंधनरज्जुमिध्मस्थानेनिधायपाणिनेध्ममादायमूलमध्या
ग्रेषुस्रुवेणत्रिरभिघार्यमूलमध्ययोर्मध्यभागेगृहीत्वा ॥ अयंतेवामदेवोजातवेदाअग्निस्त्रिष्टुप् इध्महवनेवि०

ॐ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेद्धवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधय स्वाहा जातवेदसेग्नयइ० ॥ स्रुवेणाज्यमादायाग्नेरायतनस्यवायव्यकोणमारभ्याग्नेयकोणपर्यंतंप्रजापतये स्वाहाप्रजापतयइदंनममइतिमनसास्मरन् ॥ स्वाहेत्युच्चार्यनैरंतर्येणाज्यधारामग्नाविध्मदारूपरिहुत्वापु नराज्यमादायाग्नेरायतनस्यनैर्ऋत्यकोणतईशानीपर्यंतं तथैवहुत्वात्यक्त्वाचस्रुवेणाज्यमादायाग्नयेस्वाहे त्यग्नेरुत्तरपार्श्वेपूर्वभागे हुत्वापुनराज्यं सोमायस्वाहेत्यग्निदक्षिणपार्श्वेतत्समप्रदेशेहुत्वा अथप्रधानहो मः ॥ ॐ सावित्र्यैस्वाहा ॥ सावित्र्याइदंनमम ॥ ॐ ब्रह्मणेस्वाहा ॥ ब्रह्मणइदंनमम ॥ ॐ श्रद्धायैस्वाहा ॥ श्रद्धायाइदंनमम ॥ ॐ मेधायैस्वाहा ॥ मेधायाइदंनमम ॥ ॐ प्रज्ञायैस्वाहा ॥ प्रज्ञा याइदंनमम ॥ ॐ धारणायैस्वाहा ॥ धारणायाइदंनमम ॥ ॐ सदसस्पतयेस्वाहा ॥ सदसस्पतय० ॥ ॐअनुमतये० अनुमतय०ॐछंदोभ्यऋषिभ्यःस्वा० छंदोभ्यऋषिभ्य०अवदानधर्मःस्रुवेणस्रुच्याज्यमुपस्ती र्यचरुमध्यादंगुष्ठपर्वमात्रंतिरश्चीनाभिरंगुष्ठमध्यमानामिकाभिरुदगग्राभिर्नख संस्पर्शमकुर्वन्नवदायदर्व्या मोप्य ततः चरुपूर्वभागंप्रागग्राभिस्ताभिस्तथैवावदायदर्व्यामोप्यपात्रस्थंहविरभिघार्यदर्वीस्थमवत्तंचाभि घार्यविधूमज्वालाग्नौआज्यभागयोर्मध्यदेशेतत्प्रत्यक्देशेवाआच्छादयंनिवदर्व्यावामपार्श्वेणाहावयेत् पंचा वत्तिनःअत्रप्रसूतेतिमंत्रंपठंति ॐप्रसूतोभक्षमकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृजे ॥ सुतेसातेनयद्या





गमंवांप्रतिविश्वामित्रजमदग्नीदमे ॥ पंचावत्तीतुदर्व्यामुपस्तीर्यमध्यात्पूर्वार्धात्पश्चार्धाच्चत्रिर्हविषोवदाया भिघार्यजुहुयात् ॥ अग्निमीळेवैश्वामित्रोमधुच्छंदाग्निर्गायत्री ॥ उत्सर्जनप्रधानगृहसिद्धान्नहोमेविनियो गः ॥ ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमंस्वाहा ॥ अग्नयइ० ॥ कुषुंभकस्तन्मैत्रा वरुणिरगस्त्योप्तृणसूर्यानुष्टुप् ॥ उत्सर्जनप्र० ॥ ॐकुषुंभकस्तदब्रवीद्गिरेःप्रवर्तमानकः ॥ वृश्चिकस्यारसं विषमरसंवृश्चिकतेविषंस्वाहा ॥ अप्तृणसूर्येभ्यइ० ॥ त्वमग्नेद्युभिरित्यस्यशौनकोगृत्समदोऽग्निर्जगती ॥ उत्सर्ज० ॥ ॐत्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ॥ त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वं नृणांनृपतेजायसेशुचिःस्वाहा ॥ अग्नयइ० ॥ आवदंछौनकोगृत्समदःशकुंतोजगती ॥ उ० ॥ ॐआव दंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवी राःस्वाहा ॥ शकुंतायेदं० ॥ सोमस्यमागाथिनोविश्वामित्रोग्निस्त्रिष्टुप् ॥ उत्सर्जन० ॥ ॐसोमस्यमातव संवक्ष्यग्नेवह्निंचकर्थविदथेयजध्यै ॥ देवांअच्छादीद्युंजेअद्रिंशमायेअग्नेतन्वंजुषस्वस्वाहा ॥ अग्नय इ० ॥ गृणानाभार्गवोजमदग्निर्मित्रावरुणौगायत्री ॥ उ० ॥ ॐगृणानाजमदग्निनायोनावृतस्यसीदतं ॥ पातंसोमंमृतावृधास्वाहा ॥ मित्रावरुणाभ्यामिदं० ॥ त्वांह्यग्नेगौतमोवामदेवोग्निरष्टी ॥ उ० ॥ ॐत्वांह्य

ग्रेसदमित्संमन्यवेंदेवासोदेवमरतिंन्येंरिरइतिक्रत्वान्येरिरे ॥ अमर्त्यंयजतमर्त्येष्वादेवमादेवंजनतप्रचेतसं विश्वमादेवंजनतप्रचेतसंस्वाहा ॥ अग्नयइ० ॥ धामंतेगौतमोवामदेवआपोजगती ॥ उत्सर्ज० ॥ ॐ धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यंतरायुषि ॥ अपामनीकेसमिथेयआभृतस्तमश्यामधुमंतंतऊर्मिं स्वाहा ॥ अद्भ्यइ० ॥ अबोध्यात्रेयोबुधगाविष्ठिरावग्निस्त्रिष्टुप् ॥ उत्सर्ज० ॥ ॐअबोध्यग्निः समिधाज नानांप्रतिधेनुमिवायतीमुषासं ॥ यव्हाइवप्रवयामुज्जिहानाः प्रभानवः सिस्त्रतेनाकमच्छस्वाहा ॥ अग्नय इ० ॥ गंतानआत्रेयएवयामरुन्मरुतोतिजगती ॥ उ० ॥ ॐगंतानोयज्ञंयज्ञियाःसुशमिश्रोताहवमरक्षएव यामरुत् ॥ ज्येष्ठासोनपर्वतासोव्योमनियूयंतस्यप्रचेतसस्यातदुर्धर्तवोनिदःस्वाहा ॥ मरुद्भ्य० ॥ त्वंह्यग्ने बार्हस्पत्योभारद्वाजोग्निस्त्रिष्टुप् ॥ उत्सर्जन० ॥ ॐत्वंह्यग्नेप्रथमोमनोतास्याधियोअभवोदस्महोता ॥ त्वं सींवृषन्नकृणोर्दुष्टरींतुसहोविश्वस्मैसहसेसहध्यैस्वाहा ॥ अग्नयइ० ॥ योनस्वःपायुर्भारद्वाजोविश्वेदेवाअ नुष्टुप् ॥ उ० ॥ ॐयोनःस्वोअरणोयश्चनिष्ट्योजिघांसति ॥ देवास्तंसर्वेधूर्वंतुब्रह्मवर्ममर्मांतरंस्वाहा ॥ विश्वेभ्योदेवेभ्यइ० ॥ अग्निनरोमैत्रावरुणिर्वसिष्ठोग्निर्विराट् ॥ उ० ॥ ॐअग्निनरोदीधितिभिरणरण्योर्हस्तं च्युतीजनयंतप्रशस्तं ॥ दूरेदृशंगृहपतिमथर्युंस्वाहा ॥ अग्नयइ० ॥ प्रतिचक्ष्वमैत्रावरुणिर्वसिष्ठेंद्रासोमाव

नुष्टुप् ॥ उ० ॥ ॐप्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं ॥ रक्षोभ्योवधमस्यतमशनिंयातुमद्भ्यःस्वाहा ॥ इंद्रासोमाभ्यामिदं० ॥ माचित्काण्वःप्रगाथइंद्रोबृहती ॥ उत्सर्ज० ॐ माचिदन्यद्विशंसतसखायोमा रिषण्यत ॥ इंद्रमित्स्तोतावृषणंसचासुतेमुहुरुक्थाचशंसतस्वाहा॥ इंद्रायेदं० ॥ आग्नेयाहिकाण्वःसौभ रिरग्नामरुतोनुष्टुप् ॥ उत्सर्ज० ॥ ॐ आग्नेयाहिमरुत्सखारुद्रेभिःसोमपीतये ॥ सोभर्याउपसुष्टुतिंमादय स्वस्वर्णरेस्वाहा ॥ अग्नामरुद्भ्यइ० ॥ स्वादिष्ठयामधुच्छंदाः पवमानसोमोगायत्री ॥ उत्सर्ज० ॥ ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इंद्रायपातवेसुतःस्वाहा ॥ पवमानसोमायेदं० ॥ यत्तेराजन्मारी च : कश्यप : सोम : पंक्तिः ॥ उत्सर्जन० ॥ ॐ यत्तेराजन्छृतंहविस्तेनसोमाभिरक्षनः ॥ अरातीवामान स्तारीन्मोचन : किंचनाममद्रिंद्रायेदोपरिस्त्रवस्वाहा ॥ सोमायेदं० ॥ अग्नेबृहन्नाप्त्यस्त्रितोग्निस्त्रिष्टुप् ॥ उ० ॥ ॐ अग्नेबृहन्नुषसामूर्ध्वोअस्थान्निर्जगन्वान्तमसोज्योतिषागात् ॥ अग्निर्भानुनारुशतास्वंगआजा तोविश्वासद्मान्यप्रास्वाहा ॥ अग्नयइ० ॥ समानीवइत्यस्यांगिरसःसंवननःसंज्ञानमनुष्टुप् ॥ उत्सर्ज० ॥ ॐ समानीवआकूतिः समानाहृदयानिवः ॥ समानमस्तुवोमनोयथावः सुसहासतिस्वाहा ॥ संज्ञाना येदं० ॥ यदस्येतिहिरण्यगर्भोग्निःस्विष्टकृदतिधृतिः ॥ स्विष्टकृत्होमेवि० ॥ ॐ यदस्यकर्मणोत्यरीरिचं

यद्वान्यूनमिहकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वांत्सर्वंस्विष्टंसुहुतंकरोतुमे ॥ अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्राय
श्चित्ताहुतीनांकामानांसमर्धयित्रेसर्वान्नःकामांत्समर्द्धयस्वाहा अग्नावीशानदेशे जुहुयात् स्विष्टकृतेऽग्नयइ०
ततोग्नेरुत्तरतस्थितामिध्मबंधनरज्जुंविस्रस्यरुद्रायपशुपतयेस्वाहा पशुपतयेरुद्रायेदं० सर्वैः सहप्राणायामं
कृत्वापृथिवीतिमंत्रस्यमेरूपृष्ठऋषिः कूर्मोदेवतासुतलंछंदः आसनेवि० ॐ पृथ्वित्वयाधृतालोकादेवित्वं
विष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ अनेनभूतान्युत्साद्यशरावेजलकुशांश्चादाय विद्युद
सिविद्यमेपाप्मानमृतात्सत्यमुपैमिवामजंघोपरिमूलदेशेदक्षिणपादंनिधायएवमुपस्थंकृत्वादक्षिणजानुस्थेवा
मेकरेउत्तानेप्रागग्रांगुलौप्रागग्रेद्वेपवित्रेधृत्वादक्षिणकरेणतथैवसंपुटीकृत्यप्रणवादिस्वयमुच्चारयन् अन्यान
प्येवमुपविष्टान्वाचयेत् प्रणवस्यपरब्रह्मऋषिः परमात्मादेवतादेवीगायत्रीच्छंदः व्याहृतीनांपरमेष्ठी
प्रजापतिः प्रजापतिर्बृहतीगायत्र्यागाथिनोविश्वामित्रः सविताऽगायत्रीअग्निमीळइत्यादीनांछंदसांवै
श्वामित्रोमधुच्छंदादयऋषयः अग्न्यादयोदेवताः गायत्र्यादीनिच्छंदांसिउत्सर्जनेवि० ॐ भूर्भुवःस्वः
तत्स० ण्यं ॥ भर्गो०हि० ॥ धि०यात् ॥ ॐ भूर्भुवःस्वः ॥ तत्स० हि ॥ धियो०यात् ॥ ॐ
भूर्भुवःस्वः ॥ तत्स०हि ॥ धियो०यात् ॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥
अग्निः पूर्वेभिर्ऋषिभिरीड्योनूतनैरुत ॥ सदेवांएहवक्षति ॥ अग्निनारयिमश्नवत्पोषमेवदिवेदिवे ॥ यश

संवीरवत्तमं ॥ अग्नेयंयज्ञमध्वरंविश्वतः परिभूरसि ॥ सइद्देवेषुगच्छति ॥ अग्निर्होताकविक्रतुः सत्य
श्चित्रश्रवस्तमः ॥ देवोदेवेभिरागमत् ॥ १ ॥ यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसि ॥ तवेत्तत्सत्यमंगिरः ॥
उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयं ॥ नमोभरंतएमसि ॥ राजंतमध्वराणांगोपामृतस्यदीदिविं ॥ वर्धमा
नंस्वेदमे ॥ सनः पितेवसूनवेग्नेसूपायनोभव॥सचस्वानः स्वस्तये॥२॥ अग्निर्वैदेवानामवमोविष्णुःपरमः॥
अथमहाव्रतं ॥ एषपंथाएतत्कर्म ॥ अथातः संहितायाउपनिषत् ॥ विदामघवन्विदा ॥ महाव्रतस्यपंच
विंशतिंसामिधेन्यः ॥ इषेत्वोर्जेत्वा ॥ अग्नआयाहिवीतये ॥ शंनोदेवीरभिष्टये ॥ अथैतस्यसमाम्नायस्य
॥ समाम्नायः समाम्नातः ॥ मयरसतजभनलगसंमितं ॥ गौः ग्मा ॥ पंचसंवत्सरमयं ॥ अथशिक्षांप्र
वक्ष्यामि ॥ वृद्धिरादैच् ॥ योगीश्वरंयाज्ञवल्क्यं ॥ नारायणंनमस्कृत्य ॥ अथातोधर्मंव्याख्यास्यामः ॥
अथातोधर्मजिज्ञासा ॥ अथातोब्रह्मजिज्ञासा ॥ तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीस्वस्तिर
स्तुनः स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शन्नोअस्तुद्विपदेशंचतुष्पदे ॥ ॐ नमोब्रह्मणेनमोअ
स्त्वग्नयेनमः पृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि ॥ नमोब्र०मि॥
नमो०मि ॥ वृष्टिरसिवृश्चमेपाप्मानमृतात्सत्यमुपागां सर्वैःसहउत्थाय ॥ संज्ञानमुशनावदत्संज्ञानंवरुणो
वदत् ॥ संज्ञानमिंद्रश्चाग्निश्चसंज्ञानंसवितावदत् ॥ उत्सृष्टावैवेदाः ॥ इत्युक्त्वाजलंस्पृशेयुः आचार्यैः

प्रायश्चित्तादिहोमशेषंसमाप्यअयाश्चेत्यस्यविमदोयाळग्नि : पंक्ति : प्रायश्चित्ताज्यहोमेविनियोग : ॥ ॐ अ
याश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि ॥ अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा॥
अयसेग्नयइदंनमम ॥ अतोदेवामेधातिथिर्देवागायत्री ॥ प्रायश्चित्ताज्यहोमेवि० ॥ ॐ अतोदेवाअवंतु
नोयतोविष्णुर्विचक्रमे ॥ पृथिव्या : सप्तधामभि : स्वाहा ॥ देवेभ्यइ० ॥ इदंविष्णु : काण्वोमेधातिथिर्वि
ष्णुर्गायत्री ॥ प्रायश्चित्ताज्यहोमेवि० ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूळ्हमस्यपांसुरेस्वाहा
॥ विष्णवइ० ॥ व्यस्तसमस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजप्रजापतयोग्निवायुसूर्यप्रजापतयोगा
यत्र्युष्णिगनुष्टुप्बृहत्यश्छंदांसि ॥ प्रायश्चित्ताज्यहोमेवि० ॥ ॐ भूः स्वाहा॥ अग्नयइ० ॥ ॐभुवः स्वा
हा ॥ वायवइ० ॥ ॐ स्व : स्वाहा ॥ सूर्यायेदं० ॥ ॐ भूर्भुव : स्व : स्वाहा ॥ प्रजापतयइ० ॥ अना
ज्ञातमितिमंत्रद्वयस्याहिरण्यगर्भोग्निरनुष्टुप् ॥ ज्ञाताज्ञातदोषनिबर्हणार्थप्रायश्चित्ताज्यहोमे० ॥ ॐ अनाज्ञा
तंयदाज्ञातंयज्ञस्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्व ँ हिवेत्थयथातथ ँ स्वाहा ॥ अग्नयइदं० ॥ ॐ
पुरुषसंमितोयज्ञोयज्ञ : पुरुषसंमित : ॥ अग्नेतदस्यकल्पयत्व ँ हिवेत्थयथातथ ँ स्वाहा ॥ अग्नयइ० ॥
यत्पाकत्रेत्याप्त्यस्त्रितोग्निस्त्रिष्टुप् ॥ न्यूनातिरिक्तपरिपूर्णार्थप्रायश्चित्ताज्यहोमेवि० ॥ ॐ यत्पाकत्रामन
सादीनदक्षानयज्ञस्यमन्वतेमर्त्यास : ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाँ ऋतुशोयजातिस्वाहा ॥

अग्नयइ० ॥ यद्वोदेवाअभितपामरुतस्त्रिष्टुप् ॥ मंत्रतंत्रविपर्यासादिनियतनैमित्तिकप्रायश्चित्ताज्यहो० ॥
ॐ यद्वोदेवाअतिपातयानिवाचाचप्रयुतीदेवहेळनं ॥ अरायोअस्माँअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्तंनि
धेतनस्वाहा ॥ मरुद्भ्यइ० ॥ होमसांगतासिध्यर्थसर्वप्रायश्चित्तंकरिष्ये ॥ ॐ भुर्भुव : स्व : स्वाहा ॥ प्र
जापतयइ० ॥ ॐ विश्वेभ्योदेवेभ्य : स्वा० ॥ विश्वेभ्योदेवेभ्य० ॥ ततस्तंडुलकणान्समिद्दर्भशकला
नद्भिःप्रोक्ष्याग्नौप्रहरेत् ॥ अथावभृथस्नानीयपूर्णपात्रजलेनमार्जनंकुर्यात् ॥ तद्यथा ॥ पूर्वासादितंपूर्णपा
त्रमास्तीर्णेबर्हिषिदक्षिणपाणिनानिधाय ॥ तत्रगंगादिपुण्यनदी : स्मरन्दक्षिणपाणिनास्पृशन् ॥ ॐ पूर्णम
सिपूर्णमेभूयाः सुपूर्णमसिसुपूर्णमेभूयाः सदसिसन्मेभूयाः सर्वमसिसर्वमेभूयाः ॥ अक्षितिरसिमामेक्षेष्ठाः ॥
इतिजपित्वाकुशाग्रैःप्रागादिपंचदिक्षुजलंमंत्रैःसिंचेत् ॥प्राच्यांदिशिदेवाऋत्विजोमार्जयंतां॥ दक्षिणस्यांदि
शिमासाःपितरोमार्जयंताम्॥ अपउ० प्रतीच्यांदिशिग्रहाःपशवोमार्जयंतां ॥ उदीच्यांदिश्यापओषधिवनस्प
तयोमार्जयंतां ॥ ऊर्ध्वायांदिशियज्ञ : संवत्सर : प्रजापतिर्मार्जयतां ॥ कुशाग्रैःस्वशिरसिमार्जयेत्॥ आपो
अस्मानित्यस्यदेवश्रवाआपस्त्रिष्टुप् ॥ मार्जनेवि० ॥ ॐ आपोअस्मान्मातरः शुंधयंतुघृतेननोघृतप्वःपुनं
तु ॥ विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि ॥ इदमापःसिंधुद्वीपआपोनुष्टुप् ॥ मार्जनेवि० ॥
ॐ इदमापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं ॥ मार्जनंकृत्वा ॥ सुमित्र्यान

आपओषधयः संतुदुर्मित्र्यास्तस्मैसंतु ॥ योस्मान्द्वेष्टियंचवयंद्विष्मस्तंहंन्मि ॥ इतिनिर्ऋतिदेशेकुशाग्रै
रपःसिंचेत् ॥ अथस्ववामपाणावुत्तानेबर्हिषिनिधाय ॥ तत्रदक्षिणपाणिनापूर्णपात्रमादाय ॥ माहंप्रजांप
रासिचंयानः सयावरीस्थन ॥ समुद्रेवोनिनयानिः स्वंपाथोअपीथ ॥ ताआपःसमुद्रंगच्छंतातिध्यात्वा ॥ पाणि
स्थजलेनात्मानंशिष्यांश्चप्रोक्षयेत् ॥ भागीरथिभागीरथि ॥ततःकर्त्ताग्नेर्वायव्यस्थितःसंस्थाजपेनोपतिष्ठेत्॥अ
ग्नेत्वन्नइतिचतसृणांगौपायना लौपायनावा बंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चैकर्चाऋषयः ॥ अग्निर्देवता ॥
द्विपदाविराट्छंदः ॥ अग्न्युपस्थानेवि० ॥ ॐअग्नेत्वन्नोअंतमउतत्राताशिवोभवावरूथ्यः ॥ वसुरग्निर्व
सुश्रवाआच्छानक्षिद्युमत्तमंरयिंदाः ॥ सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् ॥ तंत्वाशोचिष्ठदी
दिवःसुम्नायनूनमीमहेसखिभ्यः ॥ ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंत
स्मैतेनमः॥अग्नयेनमः ॥ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमे
हव्यवाहन ॥ देहिमेहव्यवाहनोन्नमः मानस्तोकइतिकुत्सोरुद्रोजगती ॥ विभूतिग्रहणेविनियोगः ॥ ॐ
मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमि
त्त्वाहवामहे ॥ इतिस्रुवबिलपृष्ठेनविभूतिंगृहीत्वा ॥ ॐत्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्यायुषमि
तिकंठे ॥ अगस्त्यस्यत्र्यायुषमितिनाभौ ॥ यद्देवानात्र्यायुषमितिदक्षिणस्कंधे ॥ तन्मेअस्तुत्र्यायुषमितिवा



मस्कंधे ॥ सर्वमस्तुशतायुषमितिशिरसिधारयेत् ॥ कर्त्तापरिस्तरणानिविसृज्यअग्निंपरिसमुह्यपरिषिच्यपु
ष्पादिभिरलंकृत्यनैवेद्यंतांबूलंचनिवेद्य ॥ आचम्य प्राणानायम्यशुभतिथौममशरीरशुध्यर्थंउत्सर्जनांगत्वेन
भस्मस्नानंकरिष्ये भस्मआदाय ॥ ईशानःसर्वविद्यानामितिमंत्रेणशिरसि तत्पुरुषायेतिमंत्रेणमुखे अघोरे
भ्योइतिमंत्रेणहृदये वामदेवायेतिमंत्रेण गुह्ये सद्योजातायेतिमंत्रेण पादयोः ॐसर्वांगे ॥ ॐआपोहि
ष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिव
मातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ इतितिसृभिर्मार्जयित्वा आच
म्य गोमयस्नानंकरिष्येगोमयमादाय ॥ प्रणवेनदिक्षुदक्षिणभागं तीर्थेचउत्तरभागंप्रक्षिप्य शेषं ॐमान
स्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवा
महे ॥ इत्यभिमंत्र्य ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपव्हयेश्रियं ॥
अग्रमग्रंचरंतीनामोषधीनांवनेवने ॥ तासामृषभपत्नीनांपवित्रंकायशोधनं ॥ तन्मेरोगांश्चशोकांश्चनुदगोमय
सर्वदा ॥ इतिशिरःप्रभृत्यंगानिविलिप्य ॥ स्नात्वा ॥ ॐआपोहि० नः ॥ आचम्य प्राणानायम्य ॥ म
मशरीरशुध्यर्थंउत्सर्जनांगत्वेन मृत्तिकास्नानंकरिष्ये ॥ ॐबळित्थापर्वतानांखिद्रंबिभर्षिपृथिवि ॥ प्रयाभू
मिंप्रवत्वतिमन्हाजिनोषिमहिनि ॥ इतिभूमिंप्राथ्र्य ॐनावोरिषत्खनितायस्मैचाहंखनामिवः ॥ द्विपच्चतु

ष्पदस्माकंसर्वमस्त्वनातुरं ॥ इतिखनित्वा ॥ ॐस्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः
इतिमृदमादाय ॐआयनेतेपरायणेदूर्वारोहंतुपुष्पिणीः ॥ ह्रदाश्चपुंडरीकाणिसमुद्रस्यगृहाइमे ॥ इतिदू
र्वामादाय ॐतत्सवितु० त् ॥ इतिमृदमभ्युक्ष्यभूमौनिधाय ॐत्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिं
द्रं ॥ व्हयामिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रः ॥ इतिपूर्वस्यां ॐयमायमधुमत्तमंराज्ञेहव्यंजुहोत
न ॥ इदंनमऋषिभ्यः पूर्वजेभ्यःपूर्वेभ्यः पथिकृद्भ्यः इतिदक्षिणे ॐतत्वायामिब्रह्मणावंदमानस्तदाशा
स्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ इतिपश्चिमे ॐवयंसोमव्रतेत
वमनस्तनूषुबिभ्रतः ॥ प्रजावंतः सचेमहि ॥ इत्युत्तरे ॥ ॐतत्सूर्यरोदसीउभेदोषावस्तोरुपब्रुवे ॥ भोजे
ष्वस्माँअभ्युच्चरासदा ॥ उपरिष्टात् ॥ ॐअधःपश्यस्वमोपरिसंतरांपादकौहर ॥ मातेकशप्लकौदृशन्स्त्री
हिब्रह्मावभूविथ ॥ अधः ॥ ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्द
शांगुलं ॥ इतिशिरसि ॥ ॐअक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्काज्जि
व्हायाविवृहामिते ॥ इतिमुखे ॥ ॐग्रीवाभ्यस्तउष्णिहाभ्यः कीकसाभ्योअनूक्यात् ॥ यक्ष्मंदोषण्यमंसा

भ्यांबाहुभ्यांविवृहामिते ॥ कंठे ॥ ॐआंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि ॥ यक्ष्मंमतस्नाभ्यांयक्नःप्लाशि
भ्योविवृहामिते ॥ हृदये ॥ ॐनाभानाभिंनआददेचक्षुश्चित्सूर्येसचा ॥ कवेरपत्यमादुहे ॥ नाभौ ॥ ॐ
त्वमिंद्रसजोषसमर्कंबिभर्षिबाव्होः ॥ वज्रंशिशानओजसा ॥ बाव्होः ॥ ॐसोमानंस्वरणंकृणुहिब्रह्मण
स्पते ॥ कक्षीवंतंयऔशिजः ॥ कक्ष्योः ॥ ॐयःकुक्षिःसोमपातमःसमुद्रइवपिन्वते ॥ उर्वीरापोनकाकु
दः ॥ कुक्ष्योः ॥ ॐवव्हीनांपिताबहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य ॥ इषुधिःसंकाःपृतनाश्चसर्वाः
पृष्ठेनिनद्धोजयतिप्रसूतः ॥ पृष्ठे ॥ ॐऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां ॥ यक्ष्मंश्रोणिभ्यांभास
दाद्भंससोविवृहामिते ॥ ऊर्वोः ॥ ॐमेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदं
विवृहामिते ॥ जान्वोः ॥ ॐएतावानस्यमहिमातोज्यायांश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृ
तंदिवि ॥ पादयोः ॥ ॐयस्यविश्वानिहस्तयोः पंचक्षितीनांवसु ॥ स्पाशयस्वयोअस्मध्रुग्दिव्येवाशनिर्ज
हि ॥ हस्तयोः ॥ ॐअंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥
पुरुषसूक्तेनचसर्वांगे ॥ ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगु
लं ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ एतावानस्यमहिमातोज्या

यांश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ तस्माद्विराळजायतविराजोअधिपूरुषः ॥ सजातोअत्यरिच्यत पश्चाद्भूमिमथोपुरः ॥ १ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाअयजंतसाध्याऋषयश्चये ॥ तस्माद्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यं ॥ पशूंतांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चमे ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ २ ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहूकाऊरूपादाउच्येते ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ चंद्रमामनसोजातश्चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ नाभ्याऽआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकांअकल्पयन् ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुं ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ॐअश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ॥ शिरसाधारयिष्यामिरक्षस्वमांपदेपदे ॥ सतिलदूर्वामृदौशिरसिनिधाय ॥ मृत्तिकास्थानंप्रक्षाल्य, तीर्थंप्रार्थयेत् ॥ हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः ॥ यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः ॥ यन्मेमनसावाचाकर्मणावादुष्कृतंकृतम् ॥ तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः ॥ ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ इदंतेन्याभिरसमानमद्भिर्याःकाश्चसिंधुंप्रवहंतिनद्यः ॥ सर्पोजीर्णामिवत्वचंजहातिपापंसशिरस्कोभ्युपेत्य ॥ गंगागंगेतियोब्रूयाद्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥ सुमित्र्यानआपओषधयःसंतु ॥ दुर्मित्र्यास्तस्मैसंतु ॥ योस्मान्द्वेष्टियंचवयंद्विष्मस्तंहंन्मि ॥ ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोररादताआपोदेवीरिहमामवंतु ॥ याआपोदिव्याउतवास्रवंतिखनित्रिमाउतवायाः स्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताआपोदे० ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतः शुचयोयाः पावकास्ताआपोदे० ॥ यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति ॥ वैश्वानरोयास्वग्निः प्रविष्टस्ताआपोदे० ॥ ॐ एतोन्विंद्रंस्तवामशुद्धंशुद्धेनसाम्ना ॥ शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु ॥ इंद्रंशुद्धोनआगहिशुद्धः शुद्धाभिरूतिभिः ॥ शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः ॥ इंद्र

शुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे ॥ शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषासति ॥ ॐतरत्समंदीधावतिधारासुत
स्यांधसः॥तरत्समंदीधावति ॥ उस्रावेदवसूनांमर्तस्यदेव्यवसः ॥तर० ॥ध्वस्रयोः पुरुषंत्योरासहस्राणिद द्महे॥
तर०॥ आययोस्त्रिंशतंतनासहस्राणिचद द्महे॥ तर०॥ ॐत्रिभिष्ट्वंदेवसवितर्वर्षिष्ठैः सोमधामभिः ॥ अग्नेदक्षैः
पुनीहिनः ॥ पुनंतुमांदेवजनाःपुनंतुवसवोधिया ॥ विश्वेदेवाः पुनीतमाजातवेदः पुनीहिमा ॥प्रप्यायस्वप्रस्यंद
स्वसोमविश्वेभिरंशुभिः ॥ देवेभ्यउत्तमंहविः ॥ उपप्रियंपनिप्रतंयुवानमाहुतीवृधं ॥ अगन्मबिभ्रतोनमः॥
अलाय्यस्यपरशुर्ननाशतमापवस्वदेवसोम ॥ आखुंचिदेवदेवसोम ॥ यःपावमानीरध्येत्यृषिभिःसंभृतंरसं॥
सर्वंसपूतमश्नातिस्वदितंमातरिश्वना ॥ पावमानीर्योअध्येत्यृषिभिः संभृतंरसं ॥ तस्मैसरस्वतीदुहेक्षीरंस
र्पिर्मधूदकं ॥ १ ॥ पावमानीः स्वस्त्ययनीःसुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसोब्राह्मणेष्वमृतंहि
तं ॥ पावमानीर्दिशंतुनऽइमंल्लोकमथोअमुं ॥ कामान्त्समर्धयन्तुनोदेवैर्देवीःसमाहिताः ॥ येनदेवाःपवित्रे
णात्मानंपुनतेसदा ॥ तेनसहस्रधारेणपावमान्यःपुनंतुमां ॥ प्राजापत्यंपवित्रंशतोद्यामंहिरण्मयं ॥ तेनब्रह्म
विदोवयंपूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातुसोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिः
पुनातुमाजातवेदामूर्जयंत्यापुनातु ॥ ऋषयस्तुतपस्तेपुःसर्वेस्वर्गंजिगीषवः ॥ तपसस्तपसोग्रियंतुपावमा

नीरृचोब्रवीत् ॥ २ ॥ अपोहिष्ठेतितिसृभिःऋग्भिः मार्जनंकृत्वा ॥ ॐ इमंमेगंगेयमुने० ॥ असि
क्न्या० षोमया ॥ इत्युदकमालोड्य ॥ ऋतंचेतितृचस्यसूक्तस्यमाधुच्छंदसोघमर्षणऋषिः ॥ भाववृत्तो
देवता ॥ अनुष्टुप्छंदः ॥ अघमर्षणेविनि० ॥ ॐ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्र्यजा
यतततः समुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी॥
सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोस्वः ॥ इतिअघमर्षणंकृत्वा ॥ प्रवा
हाभिमुखस्त्रिर्मार्जयेत् ॥ स्नानांगतर्पणंकुर्यात् ॥ ब्रह्मादयोयेदेवाः ॥ तान्देवांस्तर्पयामि ॥ भूर्देवांस्तर्प
यामि ॥ भुवर्देवांस्तर्पयामि ॥ स्वर्देवांस्तर्प० ॥ भूर्भुवः स्वर्देवांस्तर्पयामि ॥ निवीती ॥ कृष्णद्वैपायना
दयोयेऋषयः ॥ तान्ऋषींस्त० ॥ भूर्ऋषीन्० ॥ भुवर्ऋषीन्० ॥ स्वर्ऋषीन्० ॥ भूर्भुवः स्वर्ऋषी
न्० ॥ प्राचीनावीती ॥ सोमः पितृमान्यमोंगिरस्वानग्निष्वात्तादयोयेपितरः ॥ तान्पितृन्० ॥ भूः पि
तृन्० ॥ भुवः पितॄंस्त० ॥ स्वः पितृन्० ॥ भूर्भुवः स्वः पितृन्० ॥ अग्निदग्धाश्चयेजीवायेप्यदग्धाः
कुलेमम ॥ भूमौदत्तेनतोयेनतृप्तायांतुपरांगतिं ॥ इतिजलांजलिंतटेनिक्षिप्य ॥ यन्मयादूषितंतोयंशारीरम
लसंभवात् ॥ तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ यक्ष्मतर्पणंकृत्वा ॥ ॥ ७ ॥ ॥ ७ ॥

॥ ३३ ॥ ॥ अथ ऋषिपूजन विधि प्रारंभः ॥ ॥

श्रीगणेशायनमः ॥ ऋषीन्पूजयेत् ॥ ऋषीन्दर्भामयान्कृत्वापूजयेत्तर्पयेत्ततः ॥ आचम्यप्राणानायम्यदेशका
लौस्मृत्वाउत्सर्जनांगत्वेनअरुंधतीसहितकश्यपादिसप्तऋषिपूजनंकरिष्ये॥ निवीती॥ॐ ऋषेमंत्रकृतांस्तोमैः
कश्यंपोद्वर्धयन्गिरः ॥ सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रायेंदोपरिस्रव ॥ कश्यपायनमः कश्यपंआ
वाहयामि ॥ ॐ अत्रिर्यद्वामवरोहंन्नृबीसमजोहवीन्नाधमानेवयोषा ॥ श्येनस्यंचिज्जवंसानूतंनेनागच्छ
तमश्विनाशंतमेन ॥ अत्रयेनमः ॥ अत्रिं० ॥ ॐ एवानः स्पृधः समंजासमस्मिन्निंद्रांरांधिमिथतीरदेवीः ॥
विद्यामवस्तोरवंसागृणंतोभरद्वाजाउततंइंद्रनूनं ॥ भरद्वाजायनमः ॥ भरद्वाजम्० ॥ ॐ एवातेवयमिंद्रभुं
जतीनांविद्यामसुमतीनांनवानां ॥ विद्यामवस्तोरवंसागृणंतोविश्वामित्राउततंइंद्रनूनं ॥ विश्वामित्राय० ॥
विश्वामित्रं० ॥ ॐ अभित्वागोतंमागिराजातवेदोविचर्षणे ॥ द्युम्नैरभिप्रणोनुमः ॥ गौतमाय० ॥ गौत
मंआ० ॥ ॐ गृणानाजमदग्निनायोनावृतस्यंसीदतं ॥ पातंसोममृतावृधा ॥ जमदग्नये० ॥ जमदग्निं० ॥
ॐ उतासिमैत्रावरुणोवासिष्ठोर्वश्यांब्रह्मन्मनसोधिजातः ॥ द्रप्संस्कन्नंब्रह्मणादैव्येनविश्वेदेवाः पुष्करेत्वाद
दंत ॥ वसिष्ठायनमः ॥ वसिष्ठं० ॥ ॐ अत्रेर्यथानुसूयास्याद्वसिष्ठस्याप्यरुंधती ॥ कौशिकस्ययथासतीत



सोमौतृप्यतां० ॥ इंद्रंत० ॥ अग्नामरुतस्तर्प० ॥ पवमानसोमंत० ॥ सोमंत०॥ अग्निंत० ॥ संज्ञानंत०
ब्रह्मयज्ञतर्पणं ॥ प्रजापतिस्तृप्यतु ॥ ब्रह्मातृप्यतु ॥ वेदास्तृप्यंतु ॥ देवास्तृप्यंतु ॥ ऋषयस्तृप्यंतु ॥
सर्वाणिच्छंदांसितृप्यंतु ॥ ॐ कारस्तृप्यतु ॥ वषट्कारस्तृप्यतु ॥ व्याहृतयस्तृप्यंतु ॥ सावित्रीतृप्यतु ॥
यज्ञास्तृप्यंतु ॥ द्यावापृथिवीतृप्यतां॥ अंतरिक्षंतृप्यतु ॥ अहोरात्राणितृप्यंतु ॥ सांख्यास्तृप्यंतु ॥ सिद्धास्तृ
प्यंतु ॥ समुद्रास्तृप्यंतु ॥ नद्यस्तृप्यंतु ॥ गिरयस्तृप्यंतु ॥ क्षेत्रौषधिवनस्पतिगंधर्वाप्सरसस्तृप्यंतु ॥ नागा
स्तृप्यंतु ॥ वयांसितृप्यंतु ॥ गावस्तृ० ॥ साध्यास्तृ० ॥ विप्रास्तृ० ॥ यक्षास्तृ० ॥ रक्षांसितृ० ॥ भूता
नितृ० ॥ एवमंतानितृ० ॥ अथऋषयः ॥ निवीती॥ शतर्चिनस्तृ० ॥ माध्यमास्तृ० ॥ गृत्समदस्तृ०
विश्वामित्रस्तृ० ॥ वामदेवस्तृ० ॥ अत्रिस्तृ० ॥ भरद्वाजस्तृ० ॥ वसिष्ठस्तृ० ॥ प्रगाथास्तृ० ॥ पा
मान्यस्तृ०॥ क्षुद्रसूक्तास्तृ०॥ महासूक्तास्तृ०॥ प्राचीनावीतीतिलोदकेन॥ अपसव्यंद्विजाग्र्याणांपित्र्येतीर
प्रकीर्तितम् ॥ आप्रकोष्टात्प्रकर्तव्यंमातापित्रोस्तुजीवतःइति ॥ सुमंतुजेमिनिवैशंपायनपैलसूत्रभाष्य ॥
महाभारतधर्माचार्यास्तृ०॥जानंतिबाहविगार्ग्यगौतमशाकल्यबाभ्रमांडव्यमांडूकेयास्तृ ॥गर्गीवाचक्नवी ॥
वडवाप्रातीथेयीतृ० ॥ सुलभामैत्रेयीतृ० ॥ कहोळंतर्प० ॥ कौषीतकं० ॥ महाकौषीतकं०पैं
महापैंग्यंत० ॥ सुयज्ञंत० ॥ सांख्यायनंत० ॥ ऐतरेयंत० ॥ महैतरेयंत०॥ शाकलंत० ॥ बा
सुजातवक्त्रंत० ॥ औदवाहिंत० ॥ महौदवाहिंत० ॥ सौजामिंत० ॥ शौनकंत० ॥ आश्वलायनं ॥

थात्वंमपिभर्तरि ॥ अरुंधत्यैनमःअरुंधतींआ० ॥ ॐ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिद ॥ अस्म
अग्नीमहिंगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥ गृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशं
यद्यपिदूरइवपशून्लभतेगृहानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा ॥ कश्यपाद्यावा
भ्योनमः ॥ सुप्रतिष्ठितमस्तु ॥ ॐ देवाएतस्यामवदंतपूर्वेसप्तऋषयःस्तपसेयेनिषेदुः ॥ भीमाजाया
णस्योपनीतादुर्धांदधातिपरमेव्योमन् ॥ इतिमंत्रेणषोडशोपचारैःपूजयेत् ॥ अरुंधत्यैनमःहरिद्राकुंकुमसु
सौभाग्यद्रव्यंसमर्पयामि ॥ अनेनपूजनेनअरुंधत्यादिऋषयः प्रीयंतां ॥ श्रीकृष्णार्पणमस्तु ॥ ॥
ऋषि पूजन विधिः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ

## ॥ ३४ ॥ ॥ अथ तर्पण विधि प्रारंभः ॥ ॥

श्रीगणेशायनमः ॥ ॥ अथतर्पणम् ॥ निवीती ॥ कश्यपंत० ॥ अत्रिंत० ॥ भरद्वाजंत० ॥ विश्वा
मित्रंत० ॥ गौतमंत० ॥ जमदग्निंत० ॥ वसिष्ठंत० ॥ अरुंधतींत० ॥ सव्यं ॥ सावित्रींत० ॥ ब्रह्माणं
त० ॥ श्रद्धांत० ॥ मेधांत० ॥ प्रज्ञांत० ॥ धारणांत० ॥ सदसस्पतिंत० ॥ अनुमतिंत० ॥ छंदांस्यृ
षीन्त० ॥ अग्निंत० ॥ अप्तृणसूर्यंत० ॥ अग्निंत० ॥ शकुंतंत० ॥ अग्निंत० ॥ मित्रावरुणौतृप्यतां०
अग्निंत० ॥ अपस्त० ॥ अग्निंत० ॥ मरुतस्त० ॥ अग्निंत० ॥ विश्वान्देवान्त० ॥ अग्निंत० ॥ इंद्रा

ऋ० ब्र०

॥५८॥

स्तर्प० ॥ आब्रह्मस्तंबपर्यंतंदेवर्षिपितृमानवाः ॥ तृप्यंतुपितरः सर्वेमातृमातामहादयः ॥ अतीतकुलको
टीनांसप्तद्वीपनिवासिनां ॥ आब्रह्मभुवनाल्लोकानिदमस्तुतिलोदकम् ॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रि
णोमृताः ॥ तेगृण्हंतुमयादत्तंसूत्रनिष्पीडनोदकम् ॥ सव्येन अपसव्येनवायमादींस्तर्पयेत् ॥ यमंतर्पयामि ॥
धर्मराजंत० ॥ मृत्युंत० ॥ अंतकंत० ॥ वैवस्वतंत० ॥ कालंतर्पयामि ॥ सर्वभूतक्षयकरंतर्पयामि ॥ औदुं
बरंत० ॥ दध्नंत० नीलंत० ॥ परमेष्ठिनंत० वृकोदरंत० ॥ चित्रंत० ॥ चित्रगुप्तंत० ॥ दक्षिणाभिमुख
स्तिष्ठेत् ॥ यमोनिहंतापितृधर्मराजोवैवस्वतोदंडधरश्चकालः ॥ भूताधिपोदत्तकृतानुसारीकृतांतमेतद्दश
भिर्जपंति ॥ इमंमंत्रंदशवारंजपेत् ॥ उपविश्य ॥ वर्षकृतपापशुध्यर्थंभीष्मतर्पणंकरिष्ये ॥ वैय्याघ्र
यगोत्रायसांकृत्यप्रवरायच ॥ अपुत्रायददाम्येतज्जलंभीष्मायवर्मणे ॥ ॥ इतित्रीनंजलीन्दद्यात् ॥
पितीर्थेन ॥ यस्यस्मृत्याचना० ॥ अनेनउत्सर्जनेनभगवान्परमेश्वरःप्रीयतां ॥ नमम ॥ गच्छगच्छ
श्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥ ॥ इतिउत्सर्जनप्रयोगःसमाप्तः
॥ ॥ इति तर्पण विधिः समाप्तः ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥

## ॥ ३५ ॥ ॥ अथ शांतिसूक्त प्रारंभः ॥

॥५९॥

श्रीगणेशायनमः ॥ ॥ शांतिसूक्तं ॥ ॐ आनोभद्राःक्रतवोयंतुविश्वतोदब्धासोऽअपरीतास

येचान्येआचार्यास्तेसर्वेंतृ॰ पितृत॰ अस्मत् पितरं शर्माणं गोत्रं वसुरूपंस्वधानमस्तर्प॰
तूपितामहंशर्माणं गोत्रं रुद्ररूपंस्वधानमस्त॰ ॥ अस्मत्प्रपितामहं शर्माणं गोत्रं आ
धानमस्त॰ ॥ अस्मत्मातरं दां गोत्रां वसुरूपांस्वधान॰ ॥ अस्मत्पितामहीं दां गोत्रां रुद्र
न॰ ॥ अस्मत्प्रपितामहीं दां गोत्रां आदित्यरूपांस्वधान॰ ॥ अस्मत्सापत्नमातरं दां गोत्रां
स्वधान॰ ॥ अस्मत्मातामहंशर्माणंगोत्रंवसुरूपंस्व॰॥ अस्मत्मातुःपितामहं शर्माणं गोत्रं रुद्ररूप
अस्मत्मातुःप्रपितामहं शर्माणं गोत्रं आदित्यरूपं स्वधानम॰ ॥ अस्मत्मातामहीं दां गोत्रां
पां स्वधान॰ ॥ अस्मत्मातुःपितामहीं दां गोत्रां रुद्ररूपांस्वधानम॰ ॥ अस्मत् मातुःप्रपितामही
गोत्रां आदित्यरूपांस्वधान॰ ॥ अस्मत्स्त्रियं दां गोत्रां वसुरूपांस्वधान॰ ॥ अस्मत्पुत्रं शर्माणं गोत्रं
सुरूपंस्व॰ ॥अस्मत्दुहितरं दां गोत्रां वसुरूपांस्व॰ अस्मत्पितृव्यंशर्माणंगोत्रंसपत्नीकंससुतंवसुरूपंस्व॰
अस्मत्मातुलंशर्माणंगोत्रं सपत्नीकंससुतंवसु॰ स्वधा॰॥अस्मत् स्वभ्रातरं शर्माणं गोत्रं सपत्नीकं ससुतं
वसु॰ स्वधा॰ ॥ अस्मत् पितृभगिनीं दां गोत्रांसभर्तृकांससुतांवसुरूपांस्वधान॰ ॥ अस्मत्मातृ
भगिनीं दां गोत्रां सभर्तृकांससुतांवसुरूपांस्वधान॰॥अस्मत्स्वभगिनीं दां गोत्रां सभर्तृकांससुतांवसुरू
पांस्वधान॰ ॥ अस्मत्श्वशुरं शर्माणं गोत्रं सपत्नीकंससुतंवसुरूपंस्वधान॰ अस्मत्गुरुं शर्माणं गोत्रं
सपत्नीकं ससुतंवसुरूपंस्वधान॰॥ अस्मत् आचार्यगुरुं शर्माणं गोत्रं सपत्नीकं ससुतंवसुरूपंस्वधानम



## ॥ ३६ ॥ ॥ अथ पर्जन्यसूक्त प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अच्छावदतवसंगीर्भिराभिस्तुहिपर्जन्यंनमसाविवास ॥ कनिक्रदद्वृषभोजीरदा
नूरेतोदधात्योषधीषुगर्भं ॥ विवृक्षान्हंत्युतहंतिरक्षसोविश्वंबिभायभुवनंमहावधात् ॥ उतानागाईषतेवृष्ण्या
वतोयत्पर्जन्यस्तनयन्हंतिदुष्कृतः ॥रथीवकशयाश्वाँअभिक्षिपन्नाविर्दूतान्कृणुतेवर्ष्याँ॥अह ॥ दूरात्सिंह
स्यस्तनथाउदीरतेयत्पर्जन्यःकृणुतेवर्ष्यं॥नभः ॥ प्रवातावांतिपतयंतिविद्युतउदोषधीर्जिहतेपिन्वतेस्वः ॥
इरा॥विश्वस्मैभुवनायजायतेयत्पर्जन्यःपृथिवींरेतसावति ॥ यस्यव्रतेपृथिवीनन्नमीतियस्यव्रतेशफवज्जर्भुरी
ति ॥ यस्यव्रतओषधीर्विश्वरूपाःसनःपर्जन्यमहिशर्मयच्छ ॥१॥ दिवोनोवृष्टिंमरुतोररीध्वंप्रपिन्वतवृष्णोअ
श्वस्यधाराः ॥ अर्वाङेतेनस्तनयित्नुनेह्यपोनिषिंचन्नसुरःपितानः ॥ अभिक्रंदस्तनयगर्भमाधाउदन्वतापरि
दीयारथेन ॥ दृतिंसुकर्षविषितंन्यंचंसमाभवंतूद्वतोनिपादाः ॥ महांतंकोशमुदचानिषिंचस्यंदंतांकुल्याविषिताः
पुरस्तात् ॥ घृतेनद्यावापृथिवीव्युंधिसुप्रपाणंभवत्वघ्न्याभ्यः ॥ यत्पर्जन्यकनिक्रदत्स्तनयन्हंसिदुष्कृ
तः ॥ प्रतीदंविश्वंमोदतेयत्किंचपृथिव्यामधि ॥ अवर्षीर्वर्षमुदुषूगृभायाकर्धन्वान्यत्येतवाउ ॥ अजीजन

देवानोयथासदामिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवं
र्ततां ॥ देवानांसख्यमुपसेदिमावयंदेवानऽआयुःप्रतिरंतुजीवसे ॥ तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदिं
तिंदक्षमस्रिधं ॥ अर्यमणंवरुणंसोममश्विनासरस्वतीनःसुभगामयस्करत् ॥ तन्नोवातोमयोभुवातुभेषजंत
न्मातापृथिवीतत्पितायौः ॥ तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवं ॥ तमीशानंजगत
स्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ १ ॥ स्व
स्तिनऽइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥
पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः ॥ अग्निजिव्हामनवःसूरचक्षसोविश्वेनोदेवाऽअव
सागमन्निह ॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेव
हितंयदायुः ॥ शतमिन्नुशरदोऽअंतिदेवायत्रानश्चक्राजरसंतनूनां ॥ पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरि
षतायुर्गंतोः ॥ अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिःपंचजनाऽअदिति
र्जातमदितिर्जनित्वं ॥ २ ॥ ॥ इत्यादिशांतिसूक्तानि ॥ इति शांतिसूक्तं समाप्तं ॥ ॥ ७ ॥



गग्रंनिधाय ॥ स्थंडिलमद्भिरभ्युक्ष्यशकलमाग्नेय्यांनिरस्यपाणिंप्रक्षाल्यवाग्यतोभवेत् ॥ ततस्तैजसेनासंभ
वेमृन्मयेनवापात्रयुग्मेनसंपुटीकृत्यसुवासिन्याश्रोत्रियागारात्स्वगृहाद्वासमृत्धंनिर्धूममग्निमाहृतंस्थंडिलादा
ग्नेय्यांनिधायजुष्टोदमूनाआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप् ॥ एह्यग्नेराहूगणोगोतमोग्निस्त्रिष्टुप् ॥ अग्न्यावाहनेवि
नियोगः ॥ ॐ जुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् ॥ विश्वाअग्नेअभियुजोविहत्याशत्रूय
तामाभरभोजनानि ॥ एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः ॥ अवतांत्वारोदसीविश्वमिन्वेयजा
महेसौमनसायदेवान् ॥ इत्यक्षतैरावाह्यआच्छादनंदूरीकृत्यसमस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापति
र्बृहती ॥ अग्निप्रतिष्ठापनेविनियोगः ॥ ॐ भूर्भुवःस्वःबलवर्धननामानमग्निंप्रतिष्ठापयामि ॥ प्रोक्षितेंधना
निनिक्षिप्य ॥ वेणुधमन्याप्रबोध्यध्यायेदेवं ॥ चत्वारिशृंगागौतमोवामदेवोग्निस्त्रिष्टुप् ॥ अग्निमूर्तिध्याने
वि० ॥ ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यां
आविवेश ॥ स्मृतिमंत्राश्च ॥ सप्तहस्तश्चतुःशृंगःसप्तजिव्होद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनः सुखासीनःशुचि
स्मितः ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यज
नंवामेघृतपात्रंचधारयन् ॥ मेषारूढोजटाबद्धोगौरवर्णोमहौजसः ॥ धूम्रध्वजोलोहिताक्षःसप्तार्चिःसर्व
कामदः ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ ॐ एषहिदेवःप्रदिशोनुसर्वाःपूर्वोहिजातःसउगर्भेअं

ओषधीर्भोजनायकमुतप्रजाभ्योविदोमनीषाम् ॥ २ ॥ इत्यादिपर्जन्यसूक्तानिवैदिकाः पठंति श्रीरस्तु ॥
श्रीकृष्णार्पणमस्तु ॥ शुभंभवतु ॥ इति पर्जन्यसूक्तं समाप्तं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३७ ॥ ॥ अथ उपाकर्मप्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथोपाकर्मप्रयोगप्रारंभः ॥ आचम्यद्विदर्भपवित्रेधृत्वाप्राणानायम्य ॥ श्रीमन्महागणाधिपतयेनमः ॥ इष्टदे० ॥ सुमुखश्चै० ॥ शुभतिथौ ॥ आत्मनः ॥ श्रुतिस्मृतिपु०र्थं ॥ अधीतानांअध्येष्यमाणानांछंदसांयातयामतानिरासेनाप्यायनद्वाराश्रीपरमेश्वरप्रीत्यर्थंउपाकर्माख्यंकर्मकरिष्ये ॥ आचार्यःएभिर्ब्राह्मणैःसहउपाकर्माख्यंकर्मकरिष्ये ॥ गणपतिंपूजयेत् ॥ नूतनब्रह्मचारीचेत् ॥ अस्यनवोपनीतब्रह्मचारिणोवेदाध्ययनप्रारंभार्थमुपाकरणंकरिष्ये ॥ तदंगस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ पुण्याहवाचनंसमाप्य ॥ सर्वैःसहनिवीतीभूत्वाकश्यपादिसप्तऋषीनर्चयेत् ॥ ततउपवीती॥ उपाकर्मांगहोमंकर्तुंस्थंडिलादिकरिष्ये ॥ तद्गोमयेनप्रदक्षिणमुपलिप्य ॥ दक्षिणेष्टौउदीच्यांद्वेप्रतीच्यांचतुःप्राच्यामर्धमित्यंगुलानित्यक्त्वा ॥ दक्षिणोपक्रमामुदकसंस्थांप्रादेशमात्रामेकांलेखांलिखित्वातस्यादक्षिणोत्तरयोःप्रागायतेपूर्वरेखयाअसंसृष्टेप्रादेशसंमितेद्वेलेखेलिखित्वा तयोर्मध्येपरस्परमसंसृष्टाउदक्संस्थाःप्रागायताःप्रादेशसंमितास्तिस्रइतिषड्लेखायज्ञियशकलमूलेनदक्षिणहस्तेनोल्लिख्य ॥ लेखासुतच्छकलमुदतः ॥ सविजायमानःसजनिष्यमाणःप्रत्यङ्मुखस्तिष्ठतिविश्वतोमुखः ॥ अग्नेशांडिल्यगोत्रवैश्वानरमेषारूढवरप्रदप्राङ्मुखदेवाग्नेममसन्मुखोवरदोभव ॥समिद्वयंत्रयंवादायउपाकर्महोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये॥अस्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजापतिंप्रजापतिंचाघारदेवतेआज्येनअग्नीषोमौचक्षुषीआज्येन ॥ अत्रप्रधानं ॥ सावित्रीं ब्रह्माणं श्रद्धां मेधां प्रज्ञां धारणां सदसस्पतिं अनुमतिं छंदांस्यृषीन् एताः प्रधानदेवताः आज्येन पुनरत्र प्रधानं अग्निं अप्तृणसूर्यान् अग्निं शकुंतं अग्निं मित्रावरुणौ अग्निं अपः अग्निं मरुतः अग्निं विश्वान्देवान् अग्निं इंद्रासोमौ इंद्रं अग्नामारुतः पवमानसोमं सोमं अग्निं संज्ञानं एताः प्रधानदेवताः दधिसक्तुद्रव्येण शेषेणस्विष्टकृतमग्निमिध्मसंनहनेनरुद्रंयज्ञोपवीतेनपरमात्मानमयासमग्निंदेवान्विष्णुमग्निंवायुंसूर्यंप्रजापतिंचैताःप्रायश्चित्तदेवताआज्येन ज्ञाताज्ञातदोषनिबर्हणार्थंत्रिवारमग्निंमरुतश्चाज्येनविश्वान्देवान्त्संस्रावेणयक्ष्ये अंगदेवताः प्रधानदेवताः सर्वाः संनिहिताः संतु एवंसांगोपांगेनकर्मणासद्योयक्ष्ये ॥ समस्तव्याहृतीनांपरमेष्ठीप्रजापतिः प्रजापतिर्बृहती ॥ अन्वाधानसमिद्धोमेवि० ॥ ॐ भूर्भुवः स्वःस्वाहा प्रजापतयइदंनमम ॥ अग्न्यायतनादष्टांगुलपरिमितेदेशेऐशानींदिशमारभ्यप्रदक्षिणंसमंतात्सोदकेनपाणिनात्रिः परिमृज्यपूर्वमुपरिनिहितदर्भैर्दशांगुलमितेदेशेप्राच्यादिषुपरिस्तृणीयात् ॥ तत्रप्राच्यांप्रतीच्यांचोदगग्रादर्भाः ॥ अवाच्यामुदीच्यांचप्रागग्राः॥ पूर्वपश्चात्परिस्तरणमूलयोरुपरिदक्षिणपारिस्तरणं ॥ उत्तरपरिस्तरणंतुतदग्रयोरधस्तात् ॥ तेचदर्भाअनिय

तसंख्याएकैकस्यांदिशिचत्वारश्चत्वारइत्येवंषोडशवा ॥ उत्तरतश्चपात्रासादनार्थंकांश्चित्प्रागग्रान्दर्भानास्तृ
णीयात् ॥ अग्नेरीशानतस्त्रिरंभसापरिषिच्य ॥उत्तरास्तीर्णेषुदर्भेषुदक्षिणसव्यपाणिभ्यांक्रमेण ॥दधिसक्तुस्था
लीप्रोक्षण्यौदर्वीस्रुवौप्रणीताआज्यपात्रेइध्माबर्हिषीचेत्येतावतामेवासादनं ॥ ततःप्रोक्षणीपात्रमुत्तानंकृत्वा॥
तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रकुशद्वयरूपेपवित्रेनिधाय ॥ शुद्धाभिरद्भिस्तत्पात्रंपूरयित्वागंधपुष्पा
क्षतादिक्षिप्त्वाहस्तयोरंगुष्ठोपकनिष्ठिकाभ्यामुदगग्रेपृथक्पवित्रेधृत्वाअपस्त्रिरुत्पूय ॥ पात्राण्युत्तानानिकृत्वा
इध्मंचविस्रस्य ॥ सर्वाणिपात्राणित्रिःप्रोक्षयेत् ॥ ताअपःकिंचित्कमंडलौक्षिपेदित्येके ॥ प्रणीतापात्रम
ग्नेःप्रत्यङ्निधायतत्रप्रागग्रेपवित्रेनिधायोत्पूताभिरद्भिःपूरयित्वागंधपुष्पाक्षतान्निक्षिप्य मुखसममुद्धृत्य ॥
अग्नेरुत्तरतोदर्भेषुनिधायतेपवित्रेगृहीत्वा ॥ अन्यैर्दर्भैराच्छादयेत् ॥ ततःतेपवित्रेआज्यपात्रेनिधायतत्पात्रं
पुरतःसंस्थाप्यतस्मिन्नाज्यमासिच्यअग्नेरुत्तरतस्थितांगारान्भस्मनासहाग्नेरुदक्परिस्तरणाद्बहिर्निरूह्य ॥
तेष्वाज्यपात्रमधिश्रित्यज्वलतादर्भोल्मुकेनावज्वल्यांगुष्ठपर्वमात्रंप्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्यदधिसक्तू
नासादितपात्रेनिधायपुनर्ज्वलतातेनैवदर्भोल्मुकेन दधिसक्तुभिः सहाज्यंत्रिःपर्यग्निकृत्वातदुल्मुकमपास्या
पःस्पृष्ट्वा आज्यपात्रंभुविकर्षन्निवोदगुद्वास्यांगारानग्नौप्रत्यस्यापःस्पृष्ट्वातत्रस्थमेवाज्यं ॥ सवितुष्ट्वाहिर
ण्यस्तूपःसवितापुरउष्णिक् ॥ आज्यस्योत्पवनेवि० ॥ ॐ सवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणवसोः
सूर्यस्यरश्मिभिः ॥ सकृन्मंत्रेणद्विस्तूष्णींउत्तानपाणिद्वयांगुष्ठोपकनिष्ठिकाभ्यामंतयोरसंस्पृष्टंगृहीताभ्यामुद

गग्राभ्यां पवित्राभ्यांप्रागुत्पूयतेपवित्रेअद्भिःप्रोक्ष्याग्नौप्रहरेत् ॥ ॐ स्कंदायस्वाहा ॥ स्कंदायइ० ॥ अ
थाग्नेःपश्चात्परिस्तरणाद्बहिरात्मनोग्रतोभूमिंप्रोक्ष्यतत्रबर्हिःसन्नहनींरज्जुमुदगग्रांप्रसार्यतस्यांबर्हिः प्रागग्र
मुदगपवर्गमविरलमास्तीर्यतस्मिन्नाज्यपात्रंनिधायस्रुवादिसंमार्जयेत् ॥ दक्षिणेनहस्तेनस्रुक्स्रुवौगृहीत्वास
व्येनकांश्चिद्दर्भानादायसहैवाग्नौप्रताप्यस्रुचंनिधायस्रुवंवामहस्तेगृहीत्वादक्षिणेनहस्तेनस्रुवस्यबिलंदर्भाग्रैः
प्रागादिप्रागपवर्गंत्रिःसम्मृज्याधस्ताद्दर्भाग्रेणैवाभ्यात्मंबिलपृष्ठंत्रिः सम्मृज्यततोदर्भाणांमूलैर्दंडस्याधस्ताद्बिल
पृष्ठादारभ्ययावदुपरिष्टाद्बिलंतावत्त्रिः सम्मृज्याद्भिःप्रोक्ष्यस्रुवंनिष्टप्याज्यस्थाल्याउत्तरतः स्रुगस्पृष्टंनिधायोद
कंस्पृष्ट्वातैरेवदर्भैर्जुहूंचैवमेवसम्मृज्यस्रुवादुत्तरतोनिधायदर्भानद्भिःप्रक्षालयित्वाग्नावनुप्रहरेत् ॥ दधिसक्तून
भिघार्यत्रिःप्रोक्ष्य आज्याद्दक्षिणतोबर्हिषिनिधाय ॥ एकादशांगुलपरिमितेदेशेगंधाक्षतपुष्पैरग्निंसमंत्रमर्च
येत् विश्वानिनइतितिसृणांवसुश्रुतोग्निस्त्रिष्टुप् द्वाभ्यामग्न्यर्चनेअंत्याग्निप्रार्थनेविनि० ॥ ॐ विश्वानिनो
दुर्गहाजातवेदः ॥ सिंधुंननावादुरितातिपर्षि ॥ अग्नेअत्रिवन्नमसागृणानः ॥ अस्माकंबोध्यवितातनूनां ॥
यस्त्वाहृदाकीरिणामन्यमानः ॥ अमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहि ॥ प्रजाभिरग्नेअ
मृतत्वमश्यां ॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशते
स्वस्ति ॥ ततआत्मानंचालंकृत्यहस्तंप्रक्षाल्येध्मबंधनरज्जुमिध्मस्थानेनिधायपाणिनेध्ममादायमूलमध्या

ग्रेषुस्रुवेणत्रिरभिघार्यमूलमध्ययोर्मध्यभागेगृहीत्वा ॥ अयंतेवामदेवोजातवेदाग्निस्त्रिष्टुप् इध्माहवनेवि० ॥
ॐ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेत्धवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधय
स्वाहा ॥ जातवेदसेग्नयइ० ॥ स्रुवेणाज्यमादायाग्नेरायतनस्यवायव्यकोणमारभ्याग्नेयकोणपर्यंतंप्रजापत
येस्वा० प्रजापतयइदं० इतिमनसास्मरन् ॥ स्वाहेत्युच्चार्यनैरंतर्येणाज्यधारामग्नाविध्मदारूपरिहुत्वापुनराज्य
मादायाग्नेरायतनस्यनैर्ऋत्यकोणतईशानीपर्यंतंतथैवहुत्वात्यत्का चस्रुवेणाज्यमादायाग्नयेस्वाहेत्यग्नेरुत्तरपा
र्श्वेपूर्वभागेहुत्वापुनराज्यंसोमायस्वाहेत्यग्निदक्षिणपार्श्वेतत्समप्रदेशेहुत्वा अथप्रधानहोमः ॐ सावित्र्यैस्वा
हा सावित्र्याइदंनमम ॐ ब्रह्मणेस्वाहा ॥ ब्रह्मणइदंनमम ॐ श्रद्धायैस्वाहा० श्रद्धायाइदं ॐ मेधायै०
मेधायाइ० ॐ प्रज्ञायै० प्रज्ञाया० ॐ धारणायै० धारणाया० ॐ सदसस्पतये० सदसस्पतय० ॐ अनुमतये० अ
नुमतय० ॐ छंदोभ्यऋषिभ्यः स्वा० छंदोभ्यऋषिभ्य० अथावदानधर्मः स्रुवेणस्रुच्याज्यमुपस्तीर्यदधि
सक्तुमध्यादंगुष्ठपर्वमात्रंतिरश्चीनाभिरंगुष्ठमध्यमानामिकाभिरुदगग्राभिर्नखसंस्पर्शमकुर्वन्नवदायदर्व्यामो
प्यततःदधिसक्तुपूर्वभागंप्रागग्राभिस्तथैवावदायदर्व्यामोप्यपात्रस्थंहविरभिघार्यदर्वीस्थमवत्तंचाभिघार्यवि
धूमज्वालाग्नौआज्यभागयोर्मध्यदेशेतत्प्रत्यक्देशेवाआच्छादयंन्निवदर्व्यावामपार्श्वेणाहावयेत् पंचावत्तिनः
अत्रप्रसूतोतिमंत्रंपठंति ॐ प्रसूतोभक्षमकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृजे ॥ सुतेसातेनयद्यागमंवांप्र



तिविश्वामित्रजमदग्नीदमे ॥ पंचावत्तीतुदर्व्यामुपस्तीर्यमध्यात्पूर्वार्धात्पश्चार्धाच्चत्रिर्हविषोवदायाभिघार्यजु
हुयात् ॥ अग्निमीळेवैश्वामित्रोमधुच्छंदाअग्निर्गायत्री ॥ उपाकर्मप्रधानदधिसक्तुहोमेविनियोगः ॥ ॐ अ
ग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमंस्वाहा ॥ अग्नयइ० ॥ कुषुंभकस्तन्मैत्रावरुणिरग
स्त्योतृणसूर्यानुष्टुप् ॥ उपाकर्मप्र० ॥ ॐ कुषुंभकस्तदब्रवीद्गिरेःप्रवर्तमानकः ॥ वृश्चिकस्यारसंविषम
रसंवृश्चिकतेविषंस्वाहा ॥ अतृणसूर्येभ्यइ० ॥ त्वमग्नेद्युभिरित्यस्यशौनकोगृत्समदोग्निर्जगती ॥ उपाक
र्म० ॐ त्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ॥ त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजाय
सेशुचिःस्वाहा ॥ अग्नयइ० ॥ आवदंछौनकोगृत्समदःशकुंतोजगती ॥ उपाकर्म० ॥ ॐ आवदंस्त्वंश
कुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराःस्वा
हा ॥ शकुंतायेदं० ॥ सोमस्यमागाथिनोविश्वामित्रोग्निस्त्रिष्टुप् ॥ उपाकर्मप्रधा० ॥ ॐ सोमस्यमानव
संवक्ष्यग्नेवह्निंचकर्थविदथेयजध्यै ॥ देवांअच्छादीद्यद्युंजेअद्रिंशमायेअग्नेतन्वंजुषस्वस्वाहा ॥ अग्नयइ०
गृणानाभार्गवोजमदग्निर्मित्रावरुणौगायत्री ॥ उपाकर्म० ॥ गृणानाजमदग्निनायोनावृतस्यसीदतं ॥ पा
तंसोममृतावृधास्वाहा ॥ मित्रावरुणाभ्यामिदं० ॥ त्वांह्यग्नेगौतमोवामदेवोग्निरष्टी ॥ उपाक० ॥ ॐ त्वांह्य

ग्नेसदमित्संमन्यवोदेवासोदेवमरतिंन्येरिरइतिक्रत्वान्येरिरे ॥ अमर्त्यंयजतमर्त्येष्वादेवमादेवंजनतप्रचेतसं
विश्वमादेवंजनतप्रचेतसंस्वाहा ॥ अग्नयइ॰ ॥ धामंतेगौतमोवामदेवआपोजगती ॥ उपाक॰ ॥ ॐ
धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यं १ तरायुषि ॥ अपामनीकेसमिथेयआभृतस्तमश्यामममधुमंतंतऊ
र्मिंस्वाहा ॥ अद्भ्यइ॰ ॥ अबोध्यात्रेयोबुधगविष्टिरावग्निस्त्रिष्टुप् ॥ उपाक॰ ॥ ॐ अबोध्यग्निःसमिधा
जनानांप्रतिधेनुमिवायतीमुषासं ॥ यव्हाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छस्वाहा ॥ अग्नय
इ॰ ॥ गंतानआत्रेयएवयामरुन्मरुतोतिजगती ॥ उ॰ ॐ गंतानोयज्ञंयज्ञियाःसुशमिश्रोताहवमरक्षएव
यामरुत् ॥ ज्येष्ठासोनपर्वतासोव्योमनियूयंतस्यप्रचेतसःस्यातंदुर्धर्तवोनिदःस्वाहा ॥ मरुद्भ्यइ॰ ॥ त्वंह्य
ग्नेबार्हस्पत्योभारद्वाजोग्निस्त्रिष्टुप् ॥ उपाकर्म॰ ॥ त्वंह्यग्नेप्रथमोमनोतास्याधियोअभवोदस्महोता ॥ त्वंसीं
वृषन्नकृणोर्दुष्टरीतुसहोविश्वस्मैसहसेसहध्यैस्वाहा ॥ अग्नयइ॰ ॥ योनस्वःपायुर्भारद्वाजोविश्वेदेवाअनुष्टु
प् ॥ उ॰ ॥ ॐ योनस्वोअरणोयश्चनिष्ट्योजिघांसति ॥ देवास्तंसर्वेधूर्वंतुब्रम्हवर्ममममांतरंस्वाहा ॥ वि
श्वेभ्योदेवेभ्यइ॰ ॥ अग्निनरोमैत्रावरुणिर्वसिष्ठोग्निर्विराट् ॥ उ॰ ॥ ॐ अग्निंनरोदीधितिभिररण्योर्हस्त
च्युतीजनयंतप्रशस्तं ॥ दूरेदृशंगृहपतिमथर्युस्वाहा ॥ अग्नयइ॰ ॥ प्रतिचक्ष्वमैत्रावरुणिर्वसिष्ठेंद्रासोमाव



नुष्टुप् ॥ उ॰ ॥ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं ॥ रक्षोभ्योवधमस्यतमशनिंयातुमद्भ्यःस्वाहा ॥ इंद्रा
सोमाभ्यामिदं॰ ॥ माचित्काण्वः प्रगाथइंद्रोबृहती ॥ उपा॰ ॥ ॐ माचिदन्यद्विशंसतसखायोमारिष
ण्यत ॥ इंद्रमित्स्तोतावृषणंसचासुतेमुहुरुक्थाचशंसतस्वाहा ॥ इंद्राय॰ ॥ आग्नेयाहिकाण्वःसौभरिरग्नामरु
तोनुष्टुप् ॥ उपा॰ ॥ आग्नेयाहिमरुत्सखारुद्रेभिःसोमपीतये ॥ सोभर्याऽउपसुष्टुतिंमादयस्वस्वर्णरेस्वाहा
अग्नामरुद्भ्यइ॰ ॥ स्वादिष्ठयामधुच्छंदाःपवमानसोमोगायत्री ॥ उपा॰ ॥ ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधा
रया ॥ इंद्रायपातवेसुतःस्वाहा ॥ पवमानसोमायेदं॰ ॥ यत्तेराजन्मारीचःकश्यपःसोमःपंक्तिः ॥ उपाकर्मप्र॰ ॥
यत्तेराजन्छृतंहविस्तेनसोमाभिरक्षनः ॥ अरातीवामानस्तारीन्मोचनः किंचनाममदिंद्रायेंदोपरिस्रवस्वा
हा ॥ सोमायेदं॰ ॥ अग्नेबृहन्नाप्त्यस्त्रितोग्निस्त्रिष्टुप् ॥ उपा॰ ॥ ॐ अग्नेबृहन्नुषसामूर्ध्वोअस्थान्निर्जगन्वा
न्तमसोज्योतिषागात् ॥ अग्निर्भानुनारुशतास्वंगआजातोविश्वासद्मान्यप्राःस्वाहा ॥ अग्नयइ॰ ॥ समा
नीवइत्यस्यांगिरसःसंवननःसंज्ञानमनुष्टुप् ॥ उपाक॰ ॥ ॐ समानीवआकूतिःसमानाहृदयानिवः ॥ स
मानमस्तुवोमनोयथावःसुसहासतिस्वाहा ॥ संज्ञानायेदं॰ ॥ यदस्येतिहिरण्यगर्भोग्निःस्विष्टकृदतिधृतिः ॥
स्विष्टकृद्धोमेवि॰ ॐ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं ॥ अग्निष्टत्स्विष्टकृद्विद्वांत्सर्वंस्विष्टंसुहुतंक

रोतुमे ॥ अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्रायश्चित्ताहुतीनांकामानांसमर्धयित्रेसर्वान्नःकामांत्समर्द्धयस्वाहा ॥ स्विष्टकृतेग्नयइ० ॥ ततोग्नेरुत्तरतास्थितामिध्मबंधनरज्जुंविस्रस्यरुद्रायस्वा० रुद्रायेदं० अथदधिसक्तुप्राशनं ॥ दधिक्राव्णोगौतमोवामदेवोदधिक्राबानुष्टुप् ॥ दधिसक्तुप्राशनेविनि० ॥ ॐदधिक्राव्णोऽअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखांकरत्प्रणआयूंषितारिषत्स्वाहा॥इतिप्राश्य ॥आचम्य ॥ परिस्तरणदर्भाणामधस्तादंजलिंनिधाय ॥ अन्येनजलंसेचयित्वातज्जलंभूमौनिषिंचेयुः ॥ एतदेवमार्जनं यज्ञोपवीतमित्यस्यपरब्रह्मपरमात्मात्रिष्टुप् ॥ यज्ञोपवीतहवनेविनि० ॥ ॐयज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः स्वाहा ॥ परमात्मनइदंन० ॥ प्राचीनावीती ॥ पितृप्रीत्यर्थंब्राह्मणेभ्यःयज्ञोपवीतदानंकरिष्ये ॥ यज्ञोपवीतंदत्त्वा ॥ अभिमंत्रणंकारयेत् ॥ ॐ भूः ॐभुवः ॐस्वः ॥ यज्ञोपवीतंपलाशपर्णेनिधाय ॥ ॐआपोहिष्ठाम० जनयथाचनः ॥ हिरण्यवर्णाः शुचयः पावकायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपःशꣳस्योनाभवंतु ॥ यासाꣳराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशꣳस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाऽअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशꣳस्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वाꣳअग्नीꣳरप्सुषदोहुवेवोमयि



वर्चोबलमोजोनिधत्त ॥ पवमानःसुवर्चनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमांदेवजनाः ॥ पुनंतुमनबोधिया ॥ पुनंतुविश्वेऽआयवः ॥ जातवेदःपवित्रवत् ॥ पवित्रेणपुनीहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूꣳरनु ॥ यत्तेपवित्रमर्चिषि ॥ अग्नेविततमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यांदेवसवितः॥पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥वैश्वदेवीपुनतीदेव्यागात् ॥ यस्यैब्रह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयꣳस्यामपतयोरयीणां ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातःप्राणेनेषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपुनीहिमा ॥ येनदेवाऽअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योऽअध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ तस्मैसरस्वतीदुहे ॥ क्षीरꣳसर्पिर्मधूदकं ॥ पावमानीस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ पावमानीर्दिशंतुनः ॥ इमंल्लोकमथोऽअमुं ॥ कामांन्त्समर्धयंतुनः ॥ देवीर्देवैःसमाहिताः ॥ पावमानीस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ ते

नंसहस्त्रंधारेण ॥ पावमान्यः पुनंतुमां ॥ प्राजापत्यंपवित्रं ॥ शतोद्यामं हिरण्मयं ॥ तेनब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामूर्जयंत्यापुनातु ॥ तत्सवि० यात् ॥ इत्यभिषिच्य ॥ वामहस्तेधृत्वा ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां ॥ इतित्रिःसंताड्य ॥ ॐभूरग्निंचपृथिवींचमांच ॥ त्रींश्चलोकान्त्संवत्सरंच ॥ प्रजापतिःस्त्वासादयतु ॥ तयादेवतयांगिरस्वध्रुवासीद ॥ भुवोवायुंचांतरिक्षंचमांच ॥ त्रींश्च लोकान्० ॥ प्रजापति० ॥ तयादेवतयां० ॥ सुवरादित्यंचदिशंचमांच ॥ त्रींश्चलोकान् ॥ प्रजापति० ॥ तयादे० ॥ भूर्भुवःसुवश्चंद्रमसश्चदिशंचमांच ॥ त्रींश्चलोकान्० ॥ प्रजापति० ॥ तयादेवतयां० ॥ ॐकारंप्रथमतंतोन्यसामि ॥ अग्निंद्वितीयतंतौन्यसामि ॥ नागांन्तृतीयतंतौ० ॥ सोमंचतुर्थतं० ॥ पितृन्पंचमतं० ॥ प्रजापतिंषष्ठमतं० ॥ वायुंसप्तमतंतौ० ॥ सूर्यअष्टमतंतौ० ॥ विश्वान्देवान्नवमतंतौन्यसामि ॥ अग्न्यादिदेवताभ्यो०सर्वोप०मि ॥ देवस्य०इत्यादाय ॥ प्रतियज्ञोपवीतेदशगायत्रीजपःउद्वयंतमस०मं ॥ इतिसूर्यायदर्शयित्वा ॥ यज्ञोपवीतंप०जः ॥ इतिधारयेत् ॥ ॥ ७ ॥ ॥ ७ ॥

॥ ३८ ॥ ॥ अथ ब्रह्मचारिणः नूतन श्रावणी विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ब्रह्मचारीचेत्कटिसूत्रकौपीनवस्त्राजिनयज्ञोपवीतमेखलादंडानुपनयनवद्धारयित्वा पुराणानिजलेनिक्षेपयेत् ॥ युवंवस्त्राणीत्यस्यऔचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् ॥ वस्त्रधारणेविनि० ॥ ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः ॥ अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे ॥ मित्रस्यचक्षुरित्यस्यवामदेवोअजिनंत्रिष्टुप् ॥ अजिनधारणेवि० ॥ ॐ मित्रस्यचक्षुर्धरुणंबलीयस्तेजोयशस्वीस्थविरंसमिद्धं ॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंदधेहं ॥ यज्ञोपवीतमित्य० यज्ञोपवीतधारणे० ॥ ॐ यज्ञोप० ॥ तेजः० ॥ इयंदुरुक्तादितिद्वयोर्वामदेवोमेखलात्रिष्टुप् ॥ मेखलाबंधनेविनियोगः ॥ ॐ इयंदुरुक्तात्परिबाधमानाच्छर्मवरूथंपुनतीनआगात् ॥प्राणापानाभ्यांबलमाभरंतीप्रियादेवानांसुभगामेखलेयं ॥ ऋतस्यगोप्त्रीतपसःपरस्पीघ्नतीरक्षःसहमानाअरातीः ॥ सानःसमंतमनुपरेहिभद्रयाभर्तारस्तेमेखलेमारिषाम ॥ मेखलांत्रिरावृत्यानाभिप्रदेशेग्रंथित्रयंकुर्यात् ॥ स्वस्तिनइत्यस्यस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् ॥ दंडदानेवि० ॥ ॐ स्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः ॥ स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना ॥ अदांतंदमयित्वामांमार्गेसंस्थापयन्स्वयं ॥ दंडःकरेस्थितोयस्मात्तस्माद्रक्षयतोभयं ॥ सर्वैःसहप्राणायामंकृत्वापृथिवीतिमंत्रस्यमेरुपृष्ठऋषिःकूर्मोदेवतासुतलंछंदः आसनेवि० ॐ पृथ्वीत्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं अनेनभूतान्युत्साद्यशरावेजलकुशांश्चादायविद्युदसिविद्यमेपाप्मानमृतात्सत्यमुपैमीतिवामजंघोपरिमूलदेशेदक्षिणपादं

निधायएवमुपस्थंकृत्वादक्षिणजानुस्थेवामेकरेउत्तानेप्रागग्रांगुलौप्रागग्रेद्वेपवित्रेधृत्वादाक्षिणकरेणतथैवसंपु
टीकृत्य प्रणवादिस्वयमुच्चारयन्अन्यानप्येवमुपविष्टान्वाचयेत्प्रणवस्यपरब्रह्मऋषिः परमात्मादेवतादेवी
गायत्रीच्छंदः ॥व्याहृतीनांपरमेष्ठीप्रजापतिः प्रजापतिर्बृहतीगायत्र्यागाथिनोविश्वामित्रःसावितागायत्री अ
ग्निमीळइत्यादीनांछंदसांवैश्वामित्रोमधुच्छंदादयऋषयः अग्न्यादयोदेवताःगायत्र्यादीनिच्छंदांसिउपाकरणे
वि० ॥ ॐ भूर्भुवःस्वःतत्स० ण्यंभर्गो०हि ॥ धियो० ॥ ॐ भूर्भुवःस्वः ॥ तत्स० हि ॥ धियो०यात् ॥
ॐ भूर्भुवःस्वःतत्स०हि॥धियो०यात् ॥ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ अग्निः
पूर्वेभिर्ऋषिभिरीड्योनूतनैरुत ॥ सदेवांएहवक्षति ॥ अग्निनारयिमश्नवत्पोषमेवदिवेदिवे ॥ यशसंवीरवत्त
मं ॥ अग्नेयंयज्ञमध्वरंविश्वतःपरिभूरसि ॥ सइद्देवेषुगच्छति ॥ अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः ॥
देवोदेवेभिरागमत् ॥ १ ॥ यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसि ॥ तवेत्तत्सत्यमंगिरः ॥ उपत्वाग्नेदिवेदिवेदो
षावस्तर्धियावयं ॥ नमोभरंतएमसि ॥ राजंतमध्वराणांगोपामृतस्यदीदिविं ॥ वर्धमानंस्वेदमे ॥ सनःपि
तेवसूनवेग्नेसूपायनोभव ॥ सचस्वानःस्वस्तये ॥ २ ॥ अग्निर्वैदेवानामवमोविष्णुःपरमः ॥अथमहाव्रतं॥
एषपंथाएतत्कर्म ॥ अथातःसंहितायाउपनिषत् ॥ विदामघवन्विदा॥महाव्रतस्यपंचविंशतिंसामिधेन्यः॥
इषेत्वोर्जेत्वा ॥ अग्नआयाहिवीतये ॥ शंनोदेवीरभिष्टये ॥ अथैतस्यसमाम्नायस्य ॥ समाम्नायःसमाम्ना



तः ॥ मयरसतजभनलगसंमितं ॥ गौःग्मा ॥ पंचसंवत्सरमयं ॥ अथशिक्षांप्रवक्ष्यामि ॥ वृद्धिरादैच् ॥
योगीश्वरंयाज्ञवल्क्यं ॥ नारायणंनमस्कृत्य ॥ अथातोधर्मंव्याख्यास्यामः ॥ अथातोधर्मजिज्ञासा ॥ अथा
तोब्रह्मजिज्ञासा ॥ तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वं
जिगातुभेषजं ॥ शन्नोअस्तुद्विपदेशंचतुष्पदे ॥ ॐ नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥
नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि ॥ ॐ नमोब्र०मि ॥ ॐ नमो० मि ॥ वृष्टिरसिवृश्चमे
पाप्मानमृतात्सत्यमुपागां ॥ सर्वैःसहउथ्थाय ॥ संज्ञानमुशनावदत्संज्ञानंवरुणोवदत् ॥ संज्ञानमिंद्रश्चा
ग्निश्चसंज्ञानंसवितावदत् ॥ उपाकृतावैवेदाः ॥ इत्युक्त्वाजलंस्पृशेयुःआचार्यःप्रायश्चित्तादिहोमशेषंसमा
प्य ॥ अयाश्चेत्यस्यविमदोयाळग्निःपंक्तिःप्रायश्चित्ताज्यहोमेविनियोगः॥ ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्य
मित्वमयाअसि ॥ अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा ॥ अयसेग्नयइदंनमम ॥
अतोदेवामेधातिथिर्देवागायत्री ॥ प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ अतोदेवाअवंतुनोयतोविष्णुर्विचक्र
मे ॥ पृथिव्याःसप्तधामभिःस्वाहा ॥ देवेभ्य० ॥ इदंविष्णुःकाण्वोमेधातिथिर्विष्णुर्गायत्री ॥ प्रायश्चित्ताज्य
होमेविनियोगः ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूळ्हमस्यपांसुरेस्वाहा ॥ विष्णवइदं० ॥
व्यस्तसमस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजप्रजापतयोग्निवायुसूर्यप्रजापतयोगायत्र्युष्णिगनुष्टुब्बृ

हत्यच्छंदांसि ॥ प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ भूःस्वाहा ॥ अग्नयइ० ॥ ॐ भुवःस्वाहा ॥ वाय
वइ० ॥ ॐ स्वःस्वाहा ॥ सूर्यायेदंनमम ॥ ॐ भूर्भुवःस्वःस्वाहा ॥ प्रजापतयइ० ॥ अनाज्ञातमितिमं
त्रद्वयस्यहिरण्यगर्भोग्निरनुष्टुप् ॥ ज्ञाताज्ञातदोषनिबर्हणार्थमाज्यहोमे० ॥ ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रि
यतेमिथु॥अग्नेतदस्यकल्पयत्व ँ हिवेत्थयथातथ ँस्वाहा॥अग्नयइदं० ॥ ॐपुरुषसंमितोयज्ञोयज्ञःपुरुषसंमि
तः॥अग्नेतदस्यकल्पयत्व ँ हिवेत्थयथातथ ँ स्वाहा ॥अग्नयइ०॥यत्पाकत्रेत्यास्यत्रितोग्निस्त्रिष्टुप् ॥ न्यूना
तिरिक्तपरिपूर्णार्थमाज्यहोमे० ॥ ॐ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्त्यासः ॥ अग्निष्टद्धोताक्रतु
विद्विजानन्यजिष्ठोदेवांऋतुशोयंजातिस्वाहा ॥ अग्नयइ० ॥ यद्वोदेवाअभितपामरुतस्त्रिष्टुप् ॥ मंत्रतंत्र
कर्मविपर्यासादिनियतनैमित्तिकप्रायश्चित्ताज्यहो० ॥ ॐ यद्वोदेवातिपातयानिबाचाचप्रयुतीदेवहेळनं ॥
अरावोअस्मांअभिदुच्छुनायतेन्यत्रास्मिन्मरुतस्तंनिधेतनस्वाहा ॥ मरुद्भ्यइ० ॥ होमसांगतासिद्ध्यर्थसर्वं
प्रायश्चित्तंक० ॥ ॐ भूर्भुवःस्वःस्वाहा ॥ प्रजापतयइ० ॥ ॐ विश्वेभ्योदेवेभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्य
इ० ॥ इतिसंस्रावंहुत्वा ॥ ततस्तंडुलकणान् ॥ समिद्दर्भशकलानद्भिःप्रोक्ष्याग्नौप्रहरेत् ॥ अथावभृथस्ना
नीयपूर्णपात्रजलेनमार्जनंकुर्यात् ॥ तद्यथा ॥ पूर्वासादितंपूर्णपात्रमास्तीर्णेबर्हिषिदक्षिणपाणिनानिधाय ॥
तत्रगंगादिपुण्यनदीःस्मरन्दक्षिणपाणिनास्पृशन् ॥ ॐ पूर्णमसिपूर्णमेभूयाःसुपूर्णमसिसुपूर्णमेभूयाःसद



सिसन्मेभूयाः सर्वमसिसर्वमेभूयाः ॥ अक्षितिरसिमामेक्षेष्ठाः ॥ इतिजपित्वाकुशाग्रैःप्रागादिपंचदिक्षुजलंमं
त्रैःसिंचेत् ॥ प्राच्यांदिशिदेवाऋत्विजोमार्जयंतां॥दक्षिणस्यांदिशिमासाःपितरोमार्जयंतां ॥अपउ०॥प्रतीच्यां
दिशिग्रहाःपशवोमार्जयंतां ॥ उदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतां ॥ ऊर्ध्वायांदिशियज्ञःसंवत्स
रःप्रजापतिर्मार्जयंतां ॥ कुशाग्रैःस्वशिरसिमार्जयेत् ॥ आपोअस्मानित्यस्यदेवश्रवाआपस्त्रिष्टुप् ॥ मार्ज
नेवि० ॐ आपोअस्मान्मातरःशुंधयंतुघृतेननोघृतप्वःपुनंतु ॥ विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापू
तएमि ॥ इदमापःसिंधुद्वीपआपोनुष्टुप् ॥ मार्जनेवि० ॥ इदमापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाहम
भिदुद्रोहयद्वाशेपउतानृतं ॥ सुमित्र्यानआपओषधयःसंतु ॥ दुर्मित्र्यास्तस्मैसंतु ॥ मार्जनंकृत्वा ॥ योस्मा
न्द्वेष्टियंचवयंद्विष्मस्तंहन्मि ॥ इतिनिर्ऋतिदेशेकुशाग्रैरपःसिंचेत् ॥ अथस्ववामपाणावुत्तानेबर्हिषिनि
धाय ॥ तत्रदक्षिणपाणिनापूर्णपात्रमादाय ॥ माहंप्रजांपरासिचंयानःसयावरीस्थन ॥ समुद्रेवोनिनयानिः
स्वंपाथोअपीथ ॥ ताआपःसमुद्रंगच्छंतीतिध्यात्वा ॥ पाणिस्थजलैरात्मानंशिष्यांश्चप्रोक्षयेत् ॥ भागीर
थिभागीरथि ॥ ततःकर्ताग्नेर्वायव्यास्थितःसंस्थाजपेनोपतिष्ठेत् ॥ अग्नेत्वंनइतिचतसृणांगौपायना ( लौ
पायनावा ) बंधुः सबंधुः श्रुतबंधुर्विप्रबंधुश्चैकर्चाऋषयः ॥अग्निर्देवता॥द्विपदाविराट्छंदः॥ अग्न्युपस्थाने

वि० ॥ ॐ अग्नेत्वन्नोअंतमउतत्राताशिवोभवावरूथ्यः ॥ वसुरग्निर्वसुश्रवाअच्छानाक्षिद्युमत्तमंरयिंदाः ॥ सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् ॥ तंत्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ॥ ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ स्वस्तिश्रद्धांमेधांयशः प्रज्ञांविद्यांबुद्धिंश्रियंबलंआयुष्यंतेजआरोग्यंदेहिमेहव्यवाहनदेहिमेव्यवाहनोन्नमः ॥ मानस्तोकइतिकत्सोरुद्रोजगती ॥ विभूतिग्रहणेविनियोगः ॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतः सदमित्वाहवामहे ॥ इतिस्रुवबिलपृष्ठेन विभूतिंगृहीत्वा ॥ ॐ त्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्यायुषमितिकंठे ॥ अगस्त्यस्यत्र्यायुषमितिनाभौ ॥ यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे ॥ तन्मेअस्तुत्र्यायुषमितिवामस्कंधे ॥ सर्वमस्तुशतायुषमितिशिरसिधारयेत् ॥ कर्तापरिस्तरणानिविसृज्यअग्निंपरिसमुह्यपरिषिच्यपुष्पादिभिरलंकृत्यनैवेद्यंतांबूलंचनिवेद्य ॥ ॐ अग्निस्तुविश्रवस्तमंतुब्रह्माणमुत्तमं ॥ अतूर्तंश्रावयत्पतिंपुत्रंददातिदाशुषे ॥ मंत्रपुष्पं० यस्यस्मृत्याचना० ॥ अनेनउपाकर्माख्येनकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ एतत्कर्मणःसांगतासिध्यर्थंयथासंभवंयथावकाशेनब्राह्मणभोजनंकरिष्ये ॥ नानानामगोत्रेभ्यःब्राह्मणेभ्यः भूयसींदक्षिणांदातुमहमुत्सृज्ये॥



रिमाणंतत्छंदः ॥ सूतिकाबालकयोःसर्वारिष्टशांत्यर्थंशांतिसूक्तपठनेविनियोगः ॥ ॐ ॥ आनोभद्राःक्रतवोयंतुविश्वतोदब्धासोअपरीतासउद्भिदः ॥ देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्ततां ॥ देवानांसख्यमुपसेदिमावयंदेवानआयुःप्रतिरंतुजीवसे॥ तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदितिंदक्षमस्रिधं ॥ अर्यमणंवरुणंसोममश्विनासरस्वतीनःसुभगामयस्करत् ॥ तंन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पितायौः ॥ तत्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतांधिष्ण्यायुवं ॥ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये॥१॥स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिस्वस्तिनोबृहस्पतिर्दधातु ॥ पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः ॥ अग्निजिव्हामनवःसूरचक्षसोविश्वेनोदेवाअवसागमन्निह ॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ शतमिन्नुशरदोअंतिदेवायत्रानश्चक्राजरसंतनूनां ॥ पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः ॥ अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः ॥ विश्वेदेवाअ

॥ ३९ ॥ ॥ अथ सभादीपदान विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ सभादीपदानं ॥ आचम्यदेशकालौसंकीर्त्यममइहजन्मनिजन्मांतरेचसौभाग्यपुत्रपौत्रादिसकलकामनासिध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंउपाकर्मसभायांब्राह्मणायसभादीपदानंकरिष्ये ॥ आदौनिर्विघ्नतासिध्यर्थंगणपतिपूजांकरिष्ये ॥ गणपतिंषोडशोपचारैःपूजयेत् ॥ वक्रतुंड॰ तदंगदीपपूजनंब्राह्मणपूजांकरिष्ये ॥ दीपदेवतायैनमःध्यानंस॰॥एवंषोडशोपचारैःपूजयित्वा ॥ ब्रह्मणेनमः ॥ इदमासनंस्वासनंअर्घ्यं॰ नमोस्त्वनंताय॰ ॥ श्रावण्यांश्रावणेऋक्षेसभायामग्निसंनिधौ ॥ सभादीपंप्रदास्यामिपुत्रसंतानहेतवे ॥ सदक्षिणःसतांबूलःसभादीपोयमुत्तमः ॥ अर्पितोदेवदेवायममसंतुमनोरथाः ॥ इदंसभादीपदानं अमुकशर्मणेब्राह्मणायसंप्रददेनममतेनश्रीपरमेश्वरःप्रीयतां ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ आचार्यः ॥ विश्वेत्तातेसवनेषुप्रवाच्यायाचकर्थमघवन्निंद्रसुन्वते ॥ पारावतंयत्पुरुसंभृतंवस्वपावृणोःशरभायऋषिबंधवे ॥ यांतुदेवगणाः सर्वे॰ ॥ ऋषीनुद्वासयेत् ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥ ॥ इति सभादीपदान विधिः समाप्तः ॥ ॥ ७ ॥

॥ ४० ॥ ॥ अथ शांतिपाठ प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ शांतिपाठ प्रारंभः ॥ ॐ यस्यवाक्यंसऋषिर्यातेनोच्यतेसादेवतायदक्षरप



भगःशमुंनःशंसोअस्तुशंनःपुरंधिःशमुसंतुरायः ॥ शंनःसत्यस्यसुयमस्यशंसःशंनोअर्यमापुरुजातोअस्तु ॥ शंनोधाताशमुधर्तानोअस्तुशंनउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशंनोअद्रिःशंनोदेवानांसुहवानिसंतु ॥ शंनोअग्निर्ज्योतिरनीकोअस्तुशंनोमित्रावरुणावश्विनाशं ॥ शंनःसुकृतांसुकृतानिसंतुशंनइषिरोअभिवातुवातः ॥ शंनोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोअस्तु ॥ शंनओषधीर्वनिनोभवंतुशंनोरजसस्पतिरस्तुजिष्णुः ॥ १ ॥ शंनइंद्रोवसुभिर्देवोअस्तुशमादित्येभिर्वरुणःसुशंसः ॥ शंनोरुद्रोरुद्रेभिर्जलाषःशंनस्त्वष्टाग्नाभिरिहशृणोतु ॥ शंनःसोमोभवतुब्रह्मशंनःशंनोग्रावाणःशमुसंतुयज्ञाः ॥ शंनःस्वरूणांमितयोभवंतुशंनःप्रस्वः शम्वस्तुवेदिः ॥ शंनःसूर्यउरुचक्षाउदेतुशंनश्चतस्रःप्रदिशोभवंतु ॥ शंनःपर्वताध्रुवयोभवंतुशंनःसिंधवःशमुसंत्वापः ॥ शंनोअदितिर्भवतुव्रतेभिःशंनोभवंतुमरुतःस्वर्काः ॥ शंनोविष्णुःशमुपूषानोअस्तुशंनोभवित्रंशम्वस्तुवायुः ॥ शंनोदेवःसवितात्रायमाणःशंनोभवंतूषसोविभातीः ॥ शंनःपर्जन्योभवतुप्रजाभ्यःशंनःक्षेत्रस्यपतिरस्तुशंभुः ॥ २ ॥ शंनोदेवाविश्वदेवाभवंतुशंसरस्वतीसहधीभिरस्तु ॥ शमभिषाचःशमुरातिषाचःशंनोदिव्याःपार्थिवाःशंनोअप्याः ॥ शंनःसत्यस्यपतयोभवंतुशंनोअर्वंतःशमुसंतुगावः ॥ शंनं

दितिः पंचजना अदितिर्जातमदितिर्जनित्वं ॥२॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ॥ स नः पर्ष
दति दुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः ॥ कया नश्चित्र आभुवदूती सदावृधः सखा ॥ कया शचिष्ठया वृ
ता ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदंधसः ॥ दृळ्हा चिदारुजे वसु ॥ अभी षुणः सखीनामविता जरितॄणां॥
शतं भवास्यूतिभिः ॥१॥ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ॥ स्वस्ति पूषा असुरो द
धातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ॥ बृहस्पतिं
सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवंतु नः॥ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ॥ देवा अवं
त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ॥ स्वस्ति न इंद्रश्चाग्निश्च स्वस्ति
नो अदिते कृधि॥ स्वस्ति पंथामनु चरेम सूर्याचंद्रमसाविव ॥ पुनर्ददताघ्नता जानता संगमेमहि ॥ स्वस्त्ययनं तार्क्ष्य
मरिष्टनेमिं महद्भूतं वायसं देवतानां ॥ असुरघ्नमिंद्रसखं समत्सु बृहद्यशो नावमिवा रुहेम ॥ अंहोमुचमांगिर
संगयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यं ॥ प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयं नो अस्तु ॥ शं न इंद्राग्नी
भवतामवोभिः शं न इंद्रावरुणा रातहव्या ॥ शमिंद्रासोमा सुविताय शंयोः शं न इंद्रापूषणा वाजसातौ ॥ शन्नो

ऋभवः सुकृतः सुहस्ताः शं नो भवंतु पितरो हवेषु ॥ शं नो अज एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः ॥ शं
नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥ आदित्या रुद्रा वसवो जुषंतेदं ब्रह्म क्रियमाणं नवीयः ॥
शृण्वंतु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋत
ज्ञाः ॥ ते नो रासंतामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥ शंवतीः पारयंत्येते तं पृच्छंति वचो युजा ॥
अभ्यारं तं यमाकें तुयएवेदमिति ब्रवन् ॥ भासाकेतुं परिस्नुतं भारती ब्रह्मवर्धनीः ॥ संजाना नामहीमाता य एवेद
मिति ब्रवत् ॥ इंद्रस्तं किं विभुप्रभुं भानुनेयं सरस्वती ॥ येन सूर्यमरोचयद्येनेमे रोदसी उभे ॥ जुषस्वाग्न अंगिरः
काण्वं मेध्यातिथिं ॥ मा त्वा सोमस्य बर्बृहत्सुतस्य मधुमत्तमः ॥ त्वमग्ने अंगिरः शोचस्व देववीतमः ॥ आ शंत
मशंतमाभिरभिष्टिभिः शांतिस्वस्तिमकुर्वत ॥ शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥ शं नो द्यावापृथिवी शं
प्रजाभ्यः शं न एधि द्विपदे शं चतुष्पदे ॥ ४ ॥ यत इंद्र भयामहे ततो नो अभयं कृधि ॥ मघवञ्छग्धि तव तन्न ऊति
भिर्वि द्विषो वि मृधो जहि ॥ त्वं हि राधस्पते राधसो महः क्षयस्यासि विधतः ॥ तं त्वा वयं मघवन्निंद्र गिर्वणः सुताव
तो हवामहे ॥ इंद्रः स्पळुत वृत्रहा परस्पा नो वरेण्यः ॥ स नो रक्षिषच्चरमं स मध्यमं स पश्चात्पातु नः पुरः ॥ ५ ॥ त्वं

नःपश्चादधरादुत्तरात्पुरइंद्रनिपाहिविश्वतः ॥ आरेअस्मत्कृणुहिदैव्यंभयमारेहेतीरदेवीः ॥ अद्याद्याश्वश्वइंद्रत्रास्वपरेचनः ॥ विश्वाचनोजरितॄन्त्सत्पतेअहादिवानक्तंचरक्षिषः ॥ प्रभंगीशूरोमघवातुवीमघःसंमिश्लोवीर्यायकं ॥ उभातेबाहूवृषणाशतक्रतोनियावज्रंमिमिक्षतुः ॥ भद्रंनोअपिवातयमनः ॥ ६ ॥ आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनां ॥ संक्रंदनोनिमिषएकवीरःशतंसेनाअजयत्साकमिंद्रः ॥ संक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥ सइषुहस्तैःसनिषंगिभिर्वशीसंस्रष्टासयुधइंद्रोगणेन ॥ संसृष्टजित्सोमपाबाहुशर्ध्यूग्रधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँअपबाधमानः ॥ प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविताररथानां ॥ बलविज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजाजैत्रमिंद्ररथमातिष्ठगोवित् ॥ गोत्रभिदंगोविदंवज्रबाहुंजयंतमज्मप्रमृणंतमोजसा ॥ इमंसजाताअनुवीरयध्वमिंद्रंसखायोअनुसंरभध्वं ॥ ८ ॥ अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिंद्रः ॥ दुश्च्यवनःपृतनाषाळयुध्योऽस्माकंसेनाअवतुप्रयुत्सु ॥ इंद्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः ॥ देवसेनानामभि



भंजतीनांजयंतीनांमरुतोयंत्वग्रं ॥ इंद्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रं ॥ महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमनांसि ॥ उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतांयंतुघोषाः ॥ ८ ॥ अस्माकमिंद्रः समृतेषुध्वजेष्वस्माकंयाइषवस्ताजयंतु ॥ अस्माकंवीराउत्तरेभवंत्वस्माँउदेवाअवताहवेषु ॥ अमीषांचित्तंप्रतिलोभयंतीगृहाणांगान्यप्वेपरेहि ॥ अभिप्रेहिनिर्दहहृत्सुशोकैरंधेनामित्रास्तमसासचंतां ॥ प्रेताजयतानरइंद्रोवःशर्मयच्छतु ॥ उग्रावःसंतुबाहवोनाधृष्यायथासथ ॥ ९ ॥ असौयासेनामरुतःपरेषामभ्यैतिनओजसास्पर्धमाना ॥ तांगूहततमसापव्रतेनयथामीषाअन्योअन्यंनजानात् ॥ अंधाअमित्राभवताशीर्षाणाअहयइव ॥ तेषांवोअग्निदग्धानामग्निमूळ्हानामिंद्रोहंतुवरंवरं ॥ रात्रीव्यख्यदायतीपुरुत्रादेव्यक्षभिः ॥ विश्वाअधिश्रियोधित ॥ ओर्वप्राअमर्त्यानिवतोदेव्युद्वतः ॥ ज्योतिषाबाधतेतमः ॥ निरुस्वसारमस्कृतोषसंदेव्यायती ॥ अपेदुहासतेतमः ॥ सानोअद्ययस्यावयंनितेयामन्नविक्ष्महि ॥ वृक्षेनवसतिंवयः ॥ निग्रामासोअविक्षितनिपद्वंतोनिपक्षिणः ॥ निश्येनासश्चिदर्थिनः ॥ यावयावृक्यंवृकंयवयस्तेनमूर्म्ये ॥ अथानःसुतराभव ॥ उपमापेपिशत्तमःकृष्णंव्यक्तमस्थित ॥ उषऋणेवयातय ॥ उपतेगाइवाकरंवृणीष्वदुहितर्दिवः ॥ रात्रिस्तोमनजिग्युषे ॥ आरात्रि

पार्थिवंरजःपितरःप्रायुधामभिः ॥ दिवःसदांसिबृहतीवितिष्ठसआत्वेषंबर्ततेतमः ॥ येतेरात्रीनृचक्षसो
युक्तासोनवतिर्नव ॥ अशीतिःसंत्वष्टाउतोतेसप्तसप्ततीः ॥ रात्रींप्रपद्येजननींसर्वभूतनिवेशनीं ॥ भद्रांभग
वतींकृष्णांविश्वस्यजगतोदिशां ॥ संवेशनींसंयमिनींगृहनक्षत्रमालिनीं ॥ प्रपन्नोहंशिवांरात्रींभद्रेपारमशी
महिभद्रेपारमशीमह्योंनमः ॥ स्तोष्यामिप्रयतोदेवींशरण्यांबव्हृचप्रियां ॥ सहस्रसंमितांदुर्गांजातवेदसेसुन
वामसोमं ॥ शांत्यर्थंतद्विजातीनामृषिभिःसोमपाश्रिताः ॥ ऋग्वेदेत्वंसमुत्पन्नामरातीयतोनिदहातिवेदः ॥
येत्वांदेविप्रपद्यंतिब्राह्मणाहव्यवाहनीः ॥ अविद्याबहुविद्यावासनःपर्षदतिदुर्गाणिविश्वा ॥ येअग्निवर्णांशु
भांसौम्यांकीर्तयिष्यंतियेद्विजाः ॥ तांतारयतिदुर्गाणिनावेवसिंधुंदुरितात्यग्निः ॥ दुर्गेषुविषमेघोरेसंग्रामेरि
पुसंकटे ॥ अग्निचोरनिपातेषुदुष्टग्रहनिवारणे ॥ दुर्गेषुविषमेषुत्वंसंग्रामेषुवनेषुच ॥ मोहयित्वाप्रपद्यंतेते
षांमेअभयंकुरुतेषांमेअभयंकुर्वोन्नमः ॥ केशिनींसर्वभूतानांपंचमीतिचनामच ॥ सामांसमानिशादेवींसर्व
तःपरिरक्षंतुसर्वतःपरिरक्षत्वोन्नमः ॥ तामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टां ॥ दुर्गांदेवींशरण
महंप्रपद्येसुतरसितरसेनमःसुतरसितरसेनमः ॥दुर्गादुर्गेषुस्थानेषुशंनोदेवीरभिष्टये॥यइमंदुर्गास्तवंपुण्यंरात्रौरा



त्रौसदापठेत् ॥ रात्रिःकुशिकसौभरोरात्रिस्तवोगायत्री ॥ रात्रींसूक्तंजपेन्नित्यंतत्कालउपपद्यते ॥ उलूकया
तुंशुशुलूकयातुंजहिश्वयातुमुतकोकयातुं ॥ सुपर्णयातुमुतगृध्रयातुंनृषदेवप्रमृणरक्षइंद्र ॥ पिशंगभृष्टि
मंभृणंपिशाचिमिंद्रसंमृण॥सर्वंरक्षोनिबर्हय ॥हिमस्यत्वाजरायुणाशालेपरिव्ययामसि ॥ उतन्हदोहिनोभुवो
ग्निर्ददातुभेषजं ॥ शिशीतन्हदोहिनोभुवोग्निर्ददातुभेषजं ॥ अंतिकामग्निमजनयद्बूदःशिशुलागमत् ॥
अजातपुत्रपक्षायान्हृदयंममहूयते ॥ विपुलंवनंबव्हाकासंचरंजातवेदःकामाय ॥ मांचरक्षपुत्रांश्वशरणंमम
भूत्तवं ॥ पिंगाक्षलोहितग्रीवकृष्णवर्णनमोस्तुते ॥ अस्यांन्निबर्हिरःश्येनांसागरस्योर्मयोयथा ॥ इंद्रःक्षत्रंद
दातुवरुणमभिषिंचतु ॥ शत्रवोनिधनंयांतुजयस्त्वंब्रह्मतेजसा ॥ कपिलजटांसर्वभक्षंचाग्निंप्रत्यक्षदैवतं ॥
वरुणंचमसान्यग्रेममपुत्रांश्वरक्षंतुममपुत्रांश्वरक्षत्वोन्नमः ॥ साग्रंवर्षशतंजीवपिबखादचमोदच ॥ दुःखि
तांस्तद्द्विजांश्चैवप्रजांचपशुपालय ॥ यावदादित्यस्तपतियावद्भ्राजतिचंद्रमाः ॥ यावद्रामकथालोकेतावद्रा
ज्यंविभीषणे ॥ यावच्चंद्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी ॥ यावद्वायुःप्रवायतितावज्जीवयजीवयोन्नमः ॥ ये
नकेनप्रकारेणकोविनामनुजीवति ॥ परेषामुपकारार्थयज्जीवतिसजीवति ॥ एतांवैश्वानरींसर्वदेवनमोस्तु

ते ॥ नचोरभयंनचसर्पभयंनचव्याघ्रभयंनचमृत्युभयं ॥ यस्यापमृत्युःसर्वंलभतेसर्वंजयते ॥ रक्षाणोअग्ने
तवरक्षणेभीरारक्षाणःसुमखप्रीणानः ॥ प्रतिष्फुरविरुजवीड्वंहोजहिरक्षोमहिचिद्वावृधानं ॥ ब्रह्मचतेजात
वेदोनमश्चेयंचगीःसदमिद्वर्धनीभूत् ॥ रक्षाणोअग्नेतनयानितोकारक्षोतनस्तन्वो३अप्रयुच्छन् ॥ गणानांत्वा
गणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसाद
नं ॥ क्षेत्रस्यपतिनावयंहितेनेवजयामसि ॥ गामश्वंपोषयित्न्वासनोमृळातीदृशे ॥ वास्तोष्पतेप्रतिजानी
ह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतर
णोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पते
शग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या ॥ पाहिक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानः ॥ अमी
वहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः ॥ यदर्जुनसारमेयदतःपिशंगयच्छसे ॥ वीव
भ्राजंतऋष्टयउपस्रक्केषुबप्सतोनिषुस्वप ॥ स्तेनंरायसारमेयतस्करंवापुनःसर ॥ स्तोतॄनिंद्रस्यरायसिकिम
स्मान्दुच्छुनायसेनिषुस्वप ॥ त्वंसूकरस्यदर्दृहितववदर्दर्तुसूकरः ॥ स्तोतॄनिंद्र० ॥ सस्तुमातासस्तुपितासस्तु

श्वासस्तुविश्पतिः ॥ ससंतुसर्वेज्ञातयःसस्त्वयमभितोजनः ॥ यआस्तेयश्चचरतियश्चपश्यतिनोजनः ॥
तेषांसंहन्मोअक्षाणियथेदंहर्म्यंतथा ॥ सहस्रशृंगोवृषभोयःसमुद्रादुदाचरत् ॥ तेनासहस्येनावयंनिजना
न्त्स्वापयामसि ॥ प्रोष्ठेशयावह्येशयानारीर्यास्तल्पशीवरीः ॥ स्त्रियोयाःपुण्यगंधास्ताःसर्वाःस्वापयामसि ॥
स्वप्नःस्वप्नाधिकरणेसर्वंनिष्वापयाजिनं ॥ आसूर्यमन्यान्त्स्वापयव्द्यूं३ष्वहंजाग्रियादहं॥ अजगरोनामसर्पः
सर्पिरविषोमहान् ॥ तस्मिन्हिसर्पःसुधितस्तेनत्वास्वापयामसि ॥ सर्पःसर्पोअजगरःसर्पिरविषोमहान् ॥
तस्यसर्पात्सिंधवस्तस्यगाधमशीमहि ॥ कालिकोनामसर्पोनवनागसहस्रबळः ॥ यमुनन्हदेसोजातो३यो
नारायणवाहनः ॥ यदिकालिकदूतस्ययदिकाःकालिकाद्भयात् ॥ जन्मभूमिमतिक्रांतोनिर्विषोयातिका
ळिकः ॥ आयाहींद्रपथिभिरिळितेभिर्यज्ञमिमंनोभागधेयंजुषस्व ॥ तृप्तांजहुर्मातुळस्येवयोषाभागस्तेपैतृ
ष्वसेयीवपामिव ॥ यशस्करंबलवंतंप्रभुत्वंतमेवराजाधिपतिर्बभूव ॥ संकीर्णनागाश्वपतिर्नराणांसुमंगल्यं
सततंदीर्घमायुः ॥ कर्कोटकोनागसर्पोयोदृष्टीविषउच्यते ॥ तस्यसर्पस्यसर्पत्वंतस्मैसर्पनमोस्तुते ॥ नमो
स्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ माविभेर्नमरिष्यसिपरित्वापामिसर्व
तः ॥ धनेनहंनिवृश्चिकमहंदंडेनागतं ॥ आदित्यरथवेगेनविष्णोर्बाहुबलेनच ॥ गरुडपक्षनिपातेनभूमिं

गच्छमहायशाः ॥ गरुडस्यजातमात्रेणत्रयोलोकाःप्रकंपिताः ॥ प्रकंपितामहीसर्वासशैलवनकानना ॥
गगनंनष्टचंद्रार्कंज्योतिषंनप्रकाशते ॥ देवताभयभीताश्चमारुतोनप्लवाय त्योनमः ॥ भोसर्पभद्रभद्रं
तेदूरंगच्छमहायशाः ॥ जन्मेजयस्ययज्ञांतेआस्तीकवचनंस्मर ॥ आस्तीकवचनंश्रुत्वायःसर्पोननिव
र्तते ॥ शतधाभिद्यतेमूर्ध्निशिंशवृक्षफलंयथा ॥ मुंचामित्वाहविषाजीवनायकमज्ञातयक्ष्मादुतराजयक्ष्मा
त् ॥ ग्राहिर्जग्राहयदिवैतदेनंतस्याइंद्राग्नीप्रमुमुक्तमेनं ॥ यदिक्षितायुर्यदिवापरेतोयदिमृत्योरंतिकन्नी
तएव ॥ तमाहरामिनिर्ऋतेरुपस्थादस्पार्षमेनंशतशारदाय ॥ सहस्राक्षेणशतशारदेनशतायुषाहविषा
हार्षमेनं ॥ शतंयथेमंशरदोनयातींद्रोविश्वस्यदुरितस्यपारं ॥ शतंजीवशरदोवर्धमानःशतंहेमंतान्छत
मुवसंतान् ॥ शतमिंद्राग्नीसविताबृहस्पतिः शतायुषाहविषेमंपुनर्दुः ॥ आहार्षत्वाविदंत्वापुनरागाःपुनर्न
व ॥ सर्वांगसर्वंतेचक्षुःसर्वमायुश्चतेविदं ॥ त्यमूषुवाजिनंदेवजूतंसहावानंतरुतारंरथानां ॥ अरिष्टनेमिंपृत
नाजमाशुंस्वस्तयेताक्ष्र्यमिहाहुवेम ॥ इंद्रस्येवरातिमाजोहुवानास्वस्तयेनावमिवारुहेम ॥ उर्वीनपृथ्वीबहु
लेगभीरेमावामेतौमापरेतौरिषाम ॥ सद्यश्चिद्यःशवसापंचकृष्टीःसूर्यइवज्योतिषापस्ततान ॥ सहस्रसाःशत
साअस्यरंहिर्नस्मावरंतेयुवतिंनशर्यां ॥ महित्रीणामवोस्तुद्युक्षंमित्रस्यार्यम्णः ॥ दुराधर्षंवरुणस्य ॥ नहिते



षाममाचननाध्वसुवारणेषु ॥ ईशेरिपुरघशंसः ॥ यस्मैपुत्रासोअदितिःप्रजीवसेमर्त्याय ॥ ज्योतिर्यच्छंत्यज
स्रं ॥ तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीःस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेष
जं ॥ शंनोअस्तुद्विपदेशंचतुष्पदे ॥ ॐनमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥ नमोवाचे
नमोवाचस्पतयेनमोविष्णवेमहतेकरोमि॥ॐशांतिःशांतिःशांतिः॥ तमर्वंतंनसानसिमरुषंनदिवः शिशुं ॥ मर्मृ
ज्यंतेदिवेदिवे ॥ बोधद्यन्माहरिभ्यांकुमारःसाहदेव्यः ॥ अच्छानहूतउदरं ॥ उतत्यायजताहरीकुमारा
त्साहदेव्यात् ॥ प्रयतासद्यआददे ॥ एषवांदेवावश्विनाकुमारःसाहदेव्यः ॥ दीर्घायुरस्तुसोमकः ॥ तंयु
वंदेवावश्विनाकुमारंसाहदेव्यं ॥ दीर्घायुषंकृणोतन ॥ सहस्राक्षेणशतशारदेनशतायुषाहविषाहार्षमेनं ॥
शतंयथेमंशरदोनयातींद्रोविश्वस्यदुरितस्यपारं ॥ शतंजीवशरदोवर्धमामःशतंहेमंतांच्छतमुवसंतान् ॥ शत
मिंद्राग्नीसविताबृहस्पतिःशतायुषाहविषेमंपुनर्दुः ॥ आहार्षत्वाविदंत्वापुनरागाःपुनर्नव ॥ सर्वांगसर्वंतेच
क्षुःसर्वमायुश्चतेविदं ॥ सर्वस्याप्त्यैसर्वस्यजित्यैसर्वमेवतेनाप्नोतिसर्वंजयति ॥ ॥ श्रीवर्चस्वमायुष्यमा
रोग्यमाविधाच्छुभमानंमहीयते ॥ धान्यंधनंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ स्वस्तिमंत्रार्थाःसफ
लाःसंतु ॥ सूतिकाबालकयोः आयुष्याभिवृद्धिरस्तु ॥ ॥ इति शांतिपाठः समाप्तः ॥ ॥ ७ ॥

॥ ४१ ॥ ॥ अथ यतेराराधना प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ द्वादशाहेत्रयोदशाहेवायथाचारमाराधनंकार्यम्॥तत्रायंप्रयोगः ॥गुरुचतुष्टयस्यके
शवादीनां चप्रत्येकमेकैकइत्येवंषोडशब्राह्मणपक्षमभिप्रेत्योच्यते ॥ प्रातर्होमोत्तरंब्रह्मीभूतस्यगुरोःसमाराध
ने गुर्वर्थेभवद्भिःक्षणःकर्तव्यः ॥ ॐ तथा इतिप्रतिवचनं एवंपरमगुर्वर्थेभ० परमेष्ठीगुर्वर्थेभ० ॥ परात्प
रगुर्वर्थेभ० यद्वा ॥ विश्वरूपधराचार्यार्थेभ० ॥ ततोगुरुत्रयमितिवाचतुरोब्राह्मणान्निमंत्र्य ॥ केशवार्थेभ०
नारायणार्थेभ० ॥ माधवार्थेभ० ॥ गोविंदार्थेभ० ॥ विष्ण्वर्थेभ० ॥ मधुसूदनार्थेभ० ॥ त्रिविक्रमार्थे
भ० ॥ वामनार्थेभ० ॥ श्रीधरार्थेभ० ॥ हृषीकेशार्थेभ० ॥ पद्मनाभार्थेभ० ॥ दामोदरार्थेभ० ॥१२॥
इतिशुक्लपक्षे ॥ कृष्णपक्षेतु ॥ संकर्षणार्थेभ० ॥ वासुदेवार्थेभ० ॥ प्रद्युम्नार्थेभ० ॥ अनिरुद्धार्थेभ० ॥
पुरुषोत्तमार्थेभ० ॥ अधोक्षजार्थेभ० ॥ नारसिंहार्थेभ० ॥ अच्युतार्थेभ० ॥ जनार्दनार्थेभ० ॥ उपेंद्रा
र्थेभ० हर्यर्थेभ० ॥ श्रीकृष्णार्थेभ०॥१२॥ एवंद्वादशविप्रान्निमंत्र्यमंध्यान्हेब्राह्मणानाहूय॥ कर्ता ॥शुचिः॥
आचम्यपवित्रपाणिः प्राणानायम्यदेशकालौसंकीर्त्यनारायणप्रीत्यर्थंब्रह्मीभूतस्यगुरोःसमाराधनंकरिष्ये इ
तिसंकल्प्य ॥ गंधाक्षततुलसीदलकर्पूरमिश्रजलेनवरणक्रमेणतेषांपादप्रक्षालनंकृत्वा तानाचमय्य स्वयं
द्विराचामेत् ॥ पादप्रक्षालनोदकंपात्रांतरेगृहीत्वातत्पादौसाक्षतगंधपुष्पतुलसीदलैरभ्यर्च्य ॥ आनंदमानं
दकरंप्रसन्नंज्ञानस्वरूपंनिजबोधरूपं ॥ योगींद्रवंद्यंभवरोगवैद्यंश्रीमद्गुरुंनित्यमहंनमामि ॥ इतिनमस्कुर्या

त् ॥ एवंसर्वेषांपूजांकृत्वागंधादिभिस्तत्पात्रमलंकृत्यदेवसन्निधौसंस्थाप्य ॥ कुशासनेषुप्राङ्मुखानुदङ्मु
खान्वाउपवेश्यपुरुषसूक्तेनप्रत्यृचं ॐ नमोनारायणेतिमंत्रसहितेनावाहनादिषोडशोपचारैः पदार्थानुसम
येनाभ्यर्चयेत् ॥ ततःसर्वेषुपात्रेषुपायसादिविशिष्टद्रव्यंसाज्यंव्यंजनसहितंचपरिवेष्यगायत्र्याप्रोक्ष्यगुरवेइ
दमन्नंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेःस्वाहा हव्यंनमम एवंसर्वत्रान्ननिवेदनंकृत्वा ॥ ॐ तद्ब्रह्म ॥ ॐ तद्वा
युः ॥ ॐ तदात्मा ॥ ॐ तत्सत्यं ॥ ॐ तत्सर्वं ॐ तत्पुरोर्नमः ॥ अंतश्चरतिभूतेषुगुहायांविश्वमूर्तिषु॥
त्वंयज्ञस्त्वंवषट्कारस्त्वमिंद्रस्त्व ँ रुद्रस्त्वंविष्णुस्त्वंब्रह्मत्वंप्रजापतिः ॥ त्वंतदापआपोज्योतीरसोमृतंब्रह्मभू
र्भुवःसुवरोम् ॥ इत्यनुवाकंपठित्वा ब्रह्मार्पणमितिचजपित्वा भुज्यमानेषुउपनिषन्मंत्रान्श्रावयेत् ॥ तृप्ते
षु ॐ तद्ब्रह्मेत्यनुवाकंपठित्वाउत्तरापोशनोत्तरमाचांतेषूपविष्टेषुविशिष्टतांबूलदक्षिणावस्त्रादिभिरभ्यर्च्यउप
विष्टेष्वेवतेषुगुर्वाराधनांगभूतंतीर्थपूजनंकरिष्यइतिसंकल्प्य ॥ चतुरस्रमंडलंगोमयेनोपलिप्यतत्ररंगवल्या
दिभिरलंकृत्यतन्मंडलेधान्योपरिपादोदककलशंसंस्थाप्यतत्रगंगादिसर्वतीर्थानिभावयित्वापुरुषसूक्तेनप्रत्यृ
चंतीर्थराजायनमइतिमंत्रेणषोडशोपचारैरभ्यर्च्यतत्पात्रंशिरसिधृत्वा ॥ लोकःसरस्वत्यायांत्येषवैदेवयानः
पंथास्तमेवान्वारोहंत्याक्रोशंतोयांत्यवर्तिमेवान्यास्मिन्प्रतिषज्यंप्रतिष्ठांगच्छंतियदादशंशतंकुर्वंत्यथैकमुत्था
न ँ शतायुःपुरुषःशतेंद्रियआयुष्येवेंद्रियेप्रतितिष्ठंतियदाशत ँ सहस्रंकुर्वंत्यथैकमुत्थान ँ सहस्रसंमितो

वाअसौलोकोमुमेवलोकमभिजयंतियदेषांप्रमीयेतंयदावाजीयेरन्नथैकमुत्थानंतद्धितीर्थं ॥ १ ॥ भीषास्मा द्वातःपवते ॥ भीषोदेतिसूर्यः ॥ भीषास्मादग्निश्चेंद्रश्च ॥ मृत्युर्धावतिपंचमइति ॥ सैषानंदस्यमीमांसाभ वति ॥ युवास्यात्साधुयुवाध्यायकः ॥ आशिष्टोद्रढिष्टोबलिष्ठः ॥ तस्येयंपृथिवीसर्वावित्तस्यपूर्णास्यात् ॥ सएकोमानुषआनंदः ॥ तेयेशतंमानुषाआनंदाः ॥ १ ॥ सएकोमनुष्यगंधर्वाणामानंदः ॥ श्रोत्रियस्यचा कामहतस्य ॥ तेयेशतंमनुष्यगंधर्वाणामानंदाः ॥ सएकोदेवगंधर्वाणामानंदः ॥ श्रोत्रियस्यचाकामहतस्य तेयेशतंदेवगंधर्वाणामानंदाः ॥ सएकःपितॄणांचिरलोकलोकानामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ ते येशतंपितॄणांचिरलोकलोकानामानंदाः ॥ सएकआजानजानांदेवानामानंदः ॥ २ ॥ श्रोत्रियस्यचाकाम हतस्य ॥ तेयेशतमाजानजानांदेवानामानंदाः ॥ सएकःकर्मदेवानांदेवानामानंदः ॥ येकर्मणादेवानपियं ति ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंकर्मदेवानांदेवानामानंदाः ॥ सएकोदेवानामानंदः ॥ श्रोत्रिय स्यचाकामहतस्य ॥ तेयेशतंदेवानामानंदाः ॥ सएकइंद्रस्यानंदः ॥ ३ ॥ श्रोत्रियस्यचाकामहतस्य ॥ ते येशतमिंद्रस्यानंदाः ॥ सएकोबृहस्पतेरानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंबृहस्पतेरानंदाः ॥ स एकःप्रजापतेरानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंप्रजापतेरानंदाः ॥ सएकोब्रह्मणआनंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ ४ ॥ सयश्चायंपुरुषे ॥ यश्चासावादित्ये ॥ सएकः ॥ सयएवंवित् ॥ अस्मा



ल्लोकात्प्रेत्य ॥ एतमन्नमयमात्मानमुपसंक्रामति ॥ एतंप्राणमयमात्मानमुपसंक्रामति ॥ एतंमनोमयमा त्मानमुपसंक्रामति ॥ एतंविज्ञानमयमात्मानमुपसंक्रामति ॥ एतमानंदमयमात्मानमुपसंक्रामति ॥ तद प्येषश्लोकोभवति ॥ यतोवाचोनिवर्तंते ॥ अप्राप्यमनसासह ॥५॥ आनंदंब्रह्मणोविद्वान् ॥ नबिभेतिकुतश्च नेति ॥ एत ँ हवावनतपति ॥ किमह ँ साधुनाकरवम् ॥ किमहंपापमकरवमिति ॥ सयएवंविद्वानेते आत्मान ँ स्पृणुते ॥ उभेह्येवैषएतेआत्मान ँ स्पृणुते ॥ यएवंवेद ॥ इत्युपनिषत् ॥ ६ ॥ हरिकीर्तनपु रःसरंसहर्षंनृत्यंकृत्वातत्पात्रंपुनर्मंडलेसंस्थाप्यचंदनाक्षतपुष्पाणिपूजाविशिष्टानिबंधुभिःसहधृत्वाविप्रान्प्र दक्षिणीकृत्य ॥ आनंदमानंदकरंप्रसन्नंज्ञानस्वरूपंनिजबोधरूपं ॥ योगींद्रमीड्यंभवरोगवैद्यंश्रीमद्गुरुंनि त्यमहंनमामि ॥ १ गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः ॥ गुरुःसाक्षात्परंब्रह्मतस्मैश्रीगुरवेनमः ॥ २ ॥ इतिमंत्रेणद्विजान्तीर्थराजंचनमस्कृत्य गुर्वर्थविप्रहस्तेपादोदकपात्रंदत्त्वातदाज्ञयातत्तीर्थंमंत्रेणगृण्हीयात् तत्रमंत्रः ॥ अविद्यामूलशमनंसर्वपापप्रणाशनं ॥ गुरुपादोदकंतीर्थंसंसारद्रुमनाशनं ॥ पुत्रादिकामनायां तु ॥ शोषणंपापपंकस्यदीपनंज्ञानतेजसः ॥ गुरोःपादोदकंचित्रंपुत्रपौत्रप्रवर्धनम् ॥ ॥ इतिगृण्हीयात् ॥ तान्पुनःप्रणम्यतानन्यांश्चदक्षिणादिभिस्तोषयित्वासन्मानपुरःसरंताननुव्रज्यकर्मेश्वरार्पणंकुर्यात् ॥ पश्चा

त्सुद्द्युतोभुंजीत ॥ इत्थंकरणाशक्तौयथाशक्तियतीन्यथाशक्तिब्राह्मणान्वाहूयपादप्रक्षालनपूर्वकंगंधादिभि रभ्यर्च्यभोजयेत् ॥ ॥ इतियतेराराधनाविधिःसमाप्तः ॥ ॥ छ ॥ ॥ श्री ॥ ॥ छ ॥

॥ ४२ ॥ ॥ अथ आम श्राद्ध विधि प्रारंभः ॥ ॥

श्रीगणेशायनमः ॥ ॥ अथआमश्राद्धविधिप्रारंभः ॥ तत्रकेनचित्संकटेनपाकासंभवेजातकर्मणिचग्रहणनिमित्तकश्रात्धेचामश्राद्धंकार्यं ॥ सपिंडीश्राद्धंमासिकंप्रतिवार्षिकंमहालयाष्टकान्वष्टकादिश्राद्धं चामेन कार्यं ॥ शूद्रस्यतुदशाहपिंडादिश्राद्धमात्रमामेननकदापिपाकेनतत्रपितॄनुद्दिश्यामुकश्रात्धंसदैवंसपिंडमामेनहविषाकरिष्ये ॥ इतिसंकल्पः ॥ अन्यःप्रयोगःपूर्वोक्तएव ॥ पाकप्रोक्षणस्थानेआमप्रोक्षणं ॥ आवाहनेउशंतस्त्वेतिमंत्रेहविषेअत्तवेइत्यत्रहविषेस्वीकर्तवेइत्यूहः ॥ भस्ममर्यादांतंप्राग्वत् ॥ विप्रहस्तेषुतंडुलैरग्नौकरणं ॥ अन्नाच्चतुर्गुणंद्विगुणंसमंवातत्तदामंपात्रेषुसंस्थाप्यपाणिहोमशेषंपिंडार्थंसंस्थाप्यपात्रेषुदत्वापृथ्वीतेपात्रमित्यादि॰ इदमामंहव्यंकव्यमित्यादिइदमाममम्रृतरूपंस्वाहेत्यादियथाधर्ममध्वित्यंतंप्राकृतंयथासुखंजुषध्वमित्यस्यापोशानप्राणाहुतितृप्तिप्रश्नानांलोपःसंपन्नवाचनांतेंन्नशेषप्रश्नलोप ः सर्वमतेतंडुलैः सक्तुभिर्वापिंडदानंकेचिद्गृहसित्धान्नेनपायसेनवापिंडदानमाहुः ॥ एवंविप्रसमीपेपिंडदानांतेनमोवःपितरइषेइत्यत्रोपस्थानमंत्रेइषेस्थानेआमद्रव्यायेत्यूहःपिंडोद्वासनांतेपिंडजातीयद्रव्येणाविकिरदानंआमश्रात्धेस्वस्तीतिब्रूतेतिवर्ज्यंवाजेवाजेइतिमंत्रेतृप्तायातेतिस्थानेतर्पिष्यमाणायातेत्यूहःततःप्राग्वच्छेषंसमापयेत् ॥ आ

मश्रात्धंद्विजैःपूर्वाह्णेकार्यं शूद्रैरपराह्णएवआमान्नाभावेहिरण्यश्रात्धमप्येवमेवसंकल्पादौहिरण्यपदमामस्थानेयोज्यं ॥ आमवत्धेमप्रोक्षणम् ॥ अत्तव इत्यादिमंत्रत्रयोहःप्राग्वदेव तंडुलादिभिर्हस्तेग्नौकरणं हिरण्यमन्नादष्टगुणंचतुर्गुणंद्विगुणंसमंवादेयंहिरण्यश्रात्धेपिदक्षिणास्त्येवश्रात्धीयमामंहेमंवाद्विजदत्तंयथेष्टंविनियोज्यं शूद्रदत्तंतुभोजनादन्यत्रविनियोज्यं श्रात्धीयामेनपंचयज्ञाःश्रात्धंचनकार्यं ॥ १ ॥ हेमश्रात्धेआमश्रात्धेचपिंडदानेविकल्पात्सांकल्पविधिनाप्येतद्द्वयं ॥ सांकल्पिकेचसमंत्रकावाहनार्घ्याग्नौकरणपिंडदानविकिराक्षय्यस्वधावाचनप्रश्नाइत्येतत्सप्तकंवर्ज्यं ॥ तत्रामुकश्रात्धंआमेनहविषाहिरण्येनवासांकल्पविधिनाकरिष्यइतिसंकल्पः ॥ शूद्रगृहेऽन्यदीयमपिक्षीराद्यपिनभक्ष्यंकिमुतदीयमामादितद्गृहेपक्वान्नंनभोक्ष्यमिति ॥ तस्माच्छूद्राल्लब्धंचगृहेपक्काभक्ष्यम् ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ इत्यामश्रात्धविधिःसमाप्तः ॥ ॥ छ ॥ ॥ श्रीदत्तात्रेयार्पणमस्तु ॥ ॥ भवानीशंकर ॥ ॥ ६ ॥

॥ ४३ ॥ ॥ अथ भरणी श्रात्ध निर्णय प्रारंभः ॥ ॥

श्रीगणेशायनमः ॥ ॥ अथभरणीश्रात्धनिर्णयप्रारंभः ॥ ॥ तत्रापरपक्षेभरणीश्रात्धाद्वयाप्राप्तिः ॥ भरणीश्रात्धमपिंडकंषड्दैवतंसांकल्पविधिनाकार्यंदेवाधूरिलोचनौपुरूरवाद्रौंवाभरणीश्रात्धंकाम्यंगया श्रात्धफलकामेनप्रतिवर्षंकार्यं ॥ केचित्पित्रादिमरणोत्तरंप्रथमवर्षेएवकुर्वंति ॥ द्वितीयादिवर्षेनकुर्वंतितत्रमूलंचिंत्यंममतुनदैवंनापिवापित्र्यंयावत्पूर्णोनवत्सरइत्याद्युक्त्यासर्वस्यापिदर्शादिश्रात्धस्यप्रथमाब्देनिषेधाद्वर्षांतए

वपितृत्वप्राप्तेश्चद्वितीयादिवर्षएवकर्तुंयुक्तमितिभाति ॥ यत्तुपितृभिन्नोयोयोम्रियतेतस्यप्रथमाब्देभरणीश्रा
द्धंक्रियतेतत्रापिमूलंनपश्यामः गयाश्राद्धफलार्थमाचारमनुस्मृत्यक्रियतेचेत्मृताद्येकमेवपार्वणमुद्दिश्यसदै
वंकार्यं ॥ अद्यदेशकालौस्मृत्वाद्यपूर्वोच्चरितएवंगुणविशेषेणावि॰ प्राप्त्यर्थंगयाश्राद्धफलप्राप्त्यर्थंभरणीश्रा
द्धंकरिष्ये ॥ इतिसंकल्पः शेषंसांकल्प विधि नैव कार्यं ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ इति भरणी
श्राद्धनिर्णयविधिः समाप्तः ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥

॥ ४४ ॥ ॥ अथ अक्षय्यतृतीया युगादि श्राद्ध निर्णय विधि प्रारंभः ॥ ॥

श्रीगणेशायनमः ॥ ॥ अथअक्षय्यतृतीयानिर्णयविधिप्रारंभः ॥ अस्यांतृतीयायांयत्किंचिज्जपहोमापि
तृतर्पणंदानादिचक्रियतेतत्सर्वमक्षयम् इयंरोहिणीबुधयोगेमहापुंण्या अस्यांजपहोमादिकृत्येपिवक्ष्यमाणयु
गादिवन्निर्णयः इयंकृतयुगस्यादिः अत्रयुगादिश्राद्धमपिंडकमनुष्ठेयं श्राद्धासंभवेतिलतर्पणमप्यत्रकार्यं
मत्रासंभवेऽपराह्णेपि कृष्णयुगादिकार्यंत्वपराण्हइत्यादिमन्वादिप्रकरणोक्तनिर्णयः ॥ द्वेधाविभक्तंदिनपू
र्वार्धैकदेशव्यापिनीदिनद्वयेचेत्त्रिमुहूर्ताधिकव्याप्तिसत्वेपरात्रिमुहूर्तान्न्यूनत्वेपूर्वामन्वादौचग्रहणेचंद्रसूर्ययोः
व्यतिपातेवैधृतौचतत्काल व्यापिनीक्रियेतिवचनेनसांकल्पव्याप्तिवाक्यानांअपवादात् श्राद्धादिकं वतृती
यामध्येएवकर्तव्यं ॥ पुरुषार्थचिंतामणौतुसप्तमाष्टमनवममुहूर्तानांगांधर्वकुतुपरौहिणसंज्ञकानांयुगादिश्रा
द्धकालत्वात्शुक्लेमध्यमदिनमानेत्रयोदश्यादिपंचदश्यंतघटित्रयव्यापिन्यांश्राद्धंकृष्णेतुषोडशीमारभ्यघटि

कात्रयेउभयत्रतादृशघटित्रयव्याप्तौसत्यामसत्यांवाशुक्लापरायदातुपरेद्युस्त्रयोदशघटितःपूर्वंसमाप्तापूर्वेद्युस्त्र
योदश्यादिघटित्रयेतदेकदेशेवाविद्यतेतदाकर्मकालशास्त्रबाहुल्यात्पूर्वैवग्राह्येत्युक्तंइदमेवयुक्तमितिभाति ॥
अत्रदेवतोद्देशेनापित्रुद्देशेनचोदकुंभदानमुक्तं ॥तत्रसंकल्पः॥ श्रीपरमेश्वरप्रीत्यर्थंवसंतमाधवदेवताप्रीत्यर्थंपि
तृप्रीत्यर्थंचब्राह्मणायोदकुंभदानमहंकरिष्ये ॥ तदंगकुंभपूजनंब्राह्मणपूजनंचकरिष्ये ॥ इतिसंकल्प्यसूत्र
वेष्टितंगधफलयवाद्युपेतंकलशंपंचोपचारैर्ब्राह्मणंचसंपूज्य ॥ तत्रमंत्रः ॥ एषधर्मघटोदत्तोब्रह्मविष्णुशिवा
त्मकः ॥ अस्यप्रदानात्सकलाममसंतुमनोरथाइतिमंत्रेणदद्यात् ॥ पित्रुद्देशेतुपितृणामक्षय्यतृप्त्यर्थंउदकुंभ
दानंकरिष्येइतिसंकल्प्यपूर्ववत्कुंभब्राह्मणौसंपूज्योदकुंभेगंधतिलफलादिनिक्षिप्यएषधर्मघटोदत्तोब्रह्मावि
ष्णुशिवात्मकः ॥ अस्यप्रदानात्तृप्यंतुपितरोऽपिपितामहाः ॥ गंधोदकतिलैर्मिश्रंसान्नंकुंभंफलान्वितं ॥ पि
तृभ्यःसंप्रदास्यामिअक्षय्यमुपतिष्ठत्वितिमंत्रेणदद्यात् ॥ युगादौसमुद्रस्नानंमहाफलं वैशाखस्याधिमासत्वेयु
गादिश्राद्धंमासद्वयेपिकार्यंयुगादिषूपवासोमहाफलः ॥ युगादिमन्वादौरात्रिभोजनेअभिस्वघृष्टिमितिमंत्र
जपः ॥ युगादिश्राद्धलोपमन्यप्रत्यवायपरिहारार्थंमृग्विधानोक्तंप्रायश्चित्तंकरिष्येइतिसंकल्प्यनयसद्यावेत्यृ
चंशतवारंजपेत् ॥ अयंनिर्णयःसर्वयुगादौज्ञेयः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ इत्यक्षय्यतृ
तीयानिर्णयविधिःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ४५ ॥ ॥ अथ महालयश्रात्धसंकल्पविधिप्रारंभः ॥ ॥

श्रीगणेशायनमः ॥ ॥ अथमहालयश्राद्धसंकल्पविधिप्रारंभः ॥ तातांबात्रितयंसपत्नजननीमातामहादित्रयंसस्त्रिस्त्रीतनयादितातजननीस्वभ्रातरःसस्त्रियः ॥ तातांबात्मभगिन्यपत्यधवयुक्जायापितासद्गुरुःशिष्याप्ताःपितरोमहालयविधौतीर्थैतथातर्पणे ॥ आचम्यऊर्ध्वकेशी॰ ॥ अपसर्पंतु॰ ॥ अपक्रामंतु॰ ॥ सर्वेषामविरोधेनश्रात्धकर्मसमारभेत् ॥ पवित्रंते॰ ॥ पवित्रंधृत्वा ॥ प्राणानायम्य ॥ पितृदेवताभ्योनमः ॥ विष्णवेनमः ॥ ३ ॥ श्रीमद्भगवतो॰ पुण्यतिथौममआत्मनःश्रुतिस्मृतिपुराणोक्तफप्राप्त्यर्थंधूरिलोचनसंज्ञकानांविश्वेषांदेवानांविश्वेषांदेवानां ॥ ॥ प्राचीनावीती ॥ ॥ अस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणां ॥ मातृपितामहीप्रपितामहीनांअमुकदानांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांसापत्नमातुः अमुकदायाः अमुकगोत्रायाः वसुरूपायाः मातामहमातुः पितामहमातुःप्रपितामहानांअमुकशर्मणांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणां मातामहीमातुःपितामहीमातुः प्रपितामहीनांअमुकदानांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणां पत्न्याः अमुकदायाः अमुकगोत्रायाः वसुरूपायाः पुत्रस्य अमुक॰ अमुकगोत्र॰ वसुरूपस्य पितृव्यस्यअमुकशर्मणः अमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्यमातुलस्यअमुकशर्मणः अमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्य भ्रातुः अमुक॰ अमुकगोत्रस्यसपत्नीकस्यससु॰ वसुरूपस्यपितृभगिन्याः अमुकदायाः अमुकगोत्रायाः

सभर्तृकायाः ससुता॰ वसुरूपायाःमातृभगिन्याः अमुकदायाः अमुकगोत्रायाः सभर्तृकायाः ससुतायाः वसुरूपायाःआत्मभगिन्याः अमुकदायाः अमुकगोत्रायाः सभर्तृकायाः ससुतायाः वसुरूपायाः श्वशुरस्यअमुकशर्मणः अमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्यगुरोः अमुकशर्मणःअमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्यशिष्यस्यअमु॰ अमुकगोत्रस्यवसुरूपस्यआप्तस्य॰ अ॰ अ॰ एतेषांएतासांचश्रेयोर्थंमोक्षार्थंतृप्त्यर्थंममपितुः कन्यागतेसवितरिसकृन्महालयापरपक्षिकश्राद्धंसदैवंसपिंडंसाग्नौकरणंपार्वणैकोद्दिष्टाविधिनाअन्नेनहविषासद्यः करिष्येअथवाममपितुः सकृन्महालयापरपक्षश्राद्धंब्रह्मार्पणेनविधिनाअन्नेनहविषासद्यः करिष्येइतिवासंकल्पः ॥ कुरुष्व॥ तदंगेनआदौआत्मशुत्ध्यर्थंगृहशुध्यर्थंभांडभाजनशुध्यर्थंप्रायश्चित्तार्थंवैश्वदेवसूक्तजाप्यमहंकरिष्ये ॥ तदंगयवोदकंतिलोदकंचकरिष्ये ॥ कुरुष्व ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ इतिमहालयसंकल्पःसमाप्तः ॥ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ४६ ॥ ॥ अथ प्रतिसांवत्सरिकश्रात्धसंकल्प प्रारंभः॥ ॥

श्रीगणेशायनमः ॥ ॥ अथप्रतिसांवत्सरिकश्रात्धसंकल्पप्रारंभः ॥ आचम्य ॥ पवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्राणिपर्येषिविश्वतः ॥ अतप्ततनूर्नतदामोऽअश्नुतेशृतासइद्वहंतस्तत्समाशत ॥ पवित्रंधृत्वा ॥ ऊर्ध्वकेशीविरूपाक्षीमांसशोणितभक्षणे ॥ तिष्ठदेविशिखाबद्धेचामुंडेह्यपराजिते ॥ अपसर्पंतुयेभू

तायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनश्राद्धकर्मसमारभेत् ॥ प्राणानायम्य ॥ पितृदेवताभ्योनमः ॥ विष्णुर्विष्णुःश्रीमद्भगवतोमहापुरुषस्यइत्यादिसंकल्पंकृत्वाश्रीपरमेश्वरप्रीत्यर्थंपुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवाना ॥ प्राचीनावीती ॥ अस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांसव्यं ॥ एतेषांचश्रेयोर्थंमोक्षार्थंतृप्त्यर्थंममपितुःप्रतिसांवत्सरिकश्राद्धाख्यंसदैवंसपिंडंसाग्नौकरणंपार्वणेनविधिना अन्नेनहविषासद्यःकरिष्ये ॥ मातृश्राद्धेएतासांचश्रेयोर्थंमो॰ ॥ आदौआत्मशुध्यर्थंगृहशुध्यर्थंभांडभाजनशुध्यर्थंप्रायश्चित्तार्थंवैश्वदेवसूक्तजाप्यमहंकरिष्ये ॥ तदंगतिलोदकंयवोदकंचकारिष्ये ॥ कुरुष्व ॥ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ इतिपात्रेउदकंनिक्षिप्य ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं इतिगंधं ॥ शरासःकुशरासोदर्भासःसैर्याउत ॥ मौंजाअदृष्टाबैरिणाःसर्वेसाकन्यलिप्सत ॥ इतिकूर्चंनिक्षिप्य ॥ यवोसिधान्यराजोवावारुणोमधुसंयुतः ॥ निर्णोदःसर्वपापानांपवित्रमृषिभिःस्मृतं ॥ इतियवान् ॥ तिलोसिसोमदेवत्योगोसवेदेवानिर्मितः ॥ प्रत्नवद्भिःप्रत्तस्वधयापितृनिमान्लोकान्प्रीणयाहिनस्स्वधानमः ॥ इतितिलान् ॥ माकाकंबीरमुद्वृहोवनस्पतिमशस्तीर्विहिनीनशः ॥ मोतसूरोअहएवाचनग्रीवाआदधंतेवेः ॥भृं



गिराजपत्रंनिक्षिप्य ॥ याःफलिनीर्याऽअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचत्वंहसः॥इतिपूगीफलं॥हिरण्यरूपःसहिरण्यसंदृगपांनपात्सेदुहिरण्यवर्णः ॥ हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै॥इतिहिरण्यं॥ युवासुवा ॰॥गंधपुष्पैःप्रच्छाद्य॥ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात्॥सभूमींविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ तस्माद्विराळजायतविराजोऽअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥१॥यत्पुरुषेणहविषादेवायज्ञमतन्वत॥ वसंतोऽअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः॥तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाऽअयजंतसाध्याऽऋषयश्चये ॥ तस्माद्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यं ॥ पशूंतांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥२॥यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू

काऊरूपादाउच्येते ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोऽअजायत ॥
चंद्रमामनसोजातश्चक्षोःसूर्योऽअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षं
शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकांऽअकल्पयन् ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमि
धःकृताः ॥ देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंपशुं ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥
तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ३ ॥ ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेधानास्तन्वंपुषेम ॥
मह्यंनमंतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेम ॥ ममदेवाविहवेसंतुसर्वइंद्रवंतोमरुतोविष्णुरग्निः॥ममांत
रिक्षमुरुलोकमस्तुमह्यंवातःपवतांकामेऽअस्मिन् ॥ मयिदेवाद्रविणमायजंतांमय्याशीरस्तुमयिदेवहूतिः ॥
दैव्याहोतारोवनुषंतपूर्वेरिष्टास्यामतन्वासुवीराः ॥ मह्यंयजंतुममयानिहव्याकूतिःसत्यामनसोमेअस्तु ॥ ए
नोमानिगांकतमच्चनाहंविश्वेदेवासोऽअधिवोचतानः ॥ देवीःषळुर्वीरुरुनःकृणोतविश्वेदेवासइहवीरयध्वं ॥
माहास्महिप्रजयामातनूभिर्मारधामद्विषतेसोमराजन् ॥ १ ॥ अग्नेमन्युंप्रतिनुदन्परेषामदब्धोगोपाःपरिपा
हिनस्त्वं ॥ प्रत्यंचोयंतुनिगुतःपुनस्ते ३ मैषांचित्तंप्रबुधांविनेशत् ॥ धाताधातॄणांभुवनस्ययस्पतिर्देवंत्रातारम
भिमातिषाहं ॥ इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपांतुयजमानन्यर्थात् ॥ उरुव्यचानोमहिषःशर्मयंसदस्मि

न्हवेपुरुहूतःपुरुक्षुः ॥ सनःप्रजायैहर्यश्वमृळयेंद्रमानोरीरिषोमापरादाः ॥ येनःसपत्नाअपतेभवंत्विंद्राग्निभ्या
मवबाधामहेतान् ॥ वसवोरुद्राऽआदित्याउपरिस्पृशंमोग्रंचेत्तारमधिराजमक्रन् ॥ अर्वांचमिंद्रममुतोहवाम
हेयोगोजिद्धनजिदश्वजिद्यः ॥ इमंनोयज्ञंविहवेजुषस्वास्यकुर्मोहरिवोमेदिनंत्वा॥ २॥ तरत्समंदीधावतिधारा
सुतस्यांधसः ॥ तरत्समंदीधावति ॥ उस्रावेदवसूनांमर्तस्यदेव्यवसः ॥ तरत्समंदीधावति ॥ ध्वस्रयोःपु
रुषंत्योरासहस्राणिदद्महे ॥ तरत्समंदीधावति ॥ आययोस्त्रिंशतंतनासहस्राणिचदद्महे ॥ तरत्समंदीधाव
ति ॥ हंसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअ
द्रिजाऋतं ॥ नतमंहोनदुरितंदेवासोअष्टमर्त्यं ॥सजोषसोयमर्यमामित्रोनयंतिवरुणोऽअतिद्विषः ॥तद्धिवयंवृ
णीमहेवरुणामित्रार्यमन्॥येनानिरंहसोयूयंपाथनेथाचमर्त्यमतिद्विषः ॥तेनूनंनोयमूतयेवरुणोमित्रोअर्यमा ॥ न
यिष्ठाउनोनेषणिपर्षिष्ठाउनःपर्षण्यतिद्विषः ॥ यूयंविश्वंपरिपाथवरुणोमित्रोऽअर्यमा ॥ युष्माकंशर्मणि
प्रियेस्यामसुप्रणीतयोतिद्विषः ॥ आदित्यासोऽअतिस्रिधोवरुणोमित्रोऽअर्यमा ॥ उग्रंमरुद्भीरुद्रंहुवेमेंद्रम
ग्निंस्वस्तयेतिद्विषः ॥ नेतारऊषुणस्तिरोवरुणोमित्रोअर्यमा ॥ अतिविश्वानिदुरिताराजानश्चर्षणीनामतिद्वि
षः ॥ शुनमस्मभ्यमूतयेवरुणोमित्रोऽअर्यमा ॥ शर्मयच्छंतुसप्रथआदित्यासोयदीमहेअतिद्विषः ॥ यथाह

त्यद्वैसवोगौर्यंचित्पदिषितामर्मुंचतायजत्राः ॥ एवोष्व१स्मन्मुंचताव्यंहः प्रतार्यग्नेप्रतरंनऽआयुः ॥ यत्किंचेदं वरुणदैव्येजनेभिद्रोहंमनुष्या३श्चरामसि ॥ अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः ॥ ॐभूर्भुवःस्वः तत्सवितु० ॥ शुचीवोहव्यामरुतःशुचीनांशुचिंहिनोम्यध्वरंशुचिंभ्यः ॥ ऋतेनसत्यमृतस पआयंञ्छुचिजन्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः ॥ शुचीरोचतआहुतः ॥ उदग्नेशुचय स्तवशुक्राभ्राजंतईरते ॥ तवज्योतींष्यर्चयः ॥ एतोन्विंद्रंस्तवामशुद्धंशुद्धेनसाम्ना ॥ शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु ॥ इंद्रशुद्धोनऽआगहिशुद्धःशुद्धाभिरूतिभिः ॥ शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः ॥ इंद्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे ॥ शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ सर्वाणिस्थलानिशुचीनिभवंतु ॥ ब्राह्मणैःअस्तुशुचिमत् ॥ ततःप्रदक्षिणात्रयंकुर्यात् ॥ तत्रब्रह्मदंडार्थंसतिलकुशाहिरण्यंनिक्षिप्य ॥ ॐभूर्भुवःस्वः ॥ समस्तसंपत्समवाप्तिहेतवःसमुत्थितापत्कुलधूमकेतवः ॥ अपारसंसारसमुद्रसेतवःपुनंतुमांब्राह्मणपादपांसवः ॥ आपद्घनध्वांतसहस्रभानवःसमीहितार्थार्पणकामधेनवः ॥ समस्ततीर्थांबुपवित्रमूर्तयोरक्षंतुमांब्राह्मणपादपांसवः ॥ विप्रौघदर्शनात्क्षिप्रंक्षीयंतेपापराशयः ॥ वंदनान्मंग



लावाप्तिरर्चनादच्युतंपदं ॥ अधिव्याधिहरंनृणांमृत्युदारिद्र्यनाशनं ॥ श्रीपुष्टिःकीर्तिदंवंदेविप्रश्रीपादपंकजं ॥ यावतीर्वैदेवतास्ताःसर्वाविदविदिब्राह्मणवसंतितस्माद्ब्राह्मणेभ्योवेदविद्भ्योदिवेदिवेनमः स्कुर्यान्नाश्लीलंकीर्तयेदेताएवदेवताःप्रीणाति ॥ द्वौनमस्कारौकृत्वा ॥ प्राचीनावीती ॥ अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्चमयाचश्राद्धकारिणा ॥ ॥ अद्यतिथौअस्मत्पितॄनुद्दिश्य प्रतिसांवत्सरिकश्राद्धंकर्तुंममअधिकारसंपदस्त्वितिभवंतोब्रुवंतु ॥ ब्राह्मणैःअस्तुश्राद्धाधिकारसंपत् ॥ एवंसर्वत्र ॥ सव्यं ॥ कालस्यमुख्यःकालोस्त्वितिभवंतोब्रुवंतु ॥ कालस्यमुख्यःकालोस्तु ॥ पाकादीनांहविर्योग्यतास्त्वितिभवंतोब्रुवंतु ॥ पाकादीनांहविर्योग्यतास्तु ॥ नमोदेवेभ्यःस्वधापितृभ्यःक्षणपाद्यासनंचकरिष्ये ॥ कुरुष्व॥ पुरूरवार्द्रवसंज्ञकविश्वेदेवस्थानेक्षणंदत्वाभवद्भिःप्रसादःकर्तव्यः सुकर्तव्यः ॥द्वितीयविश्वेदेवस्थानेक्षणंदत्वा भवद्भिःप्रसादःकर्तव्यः ॥ सुकर्तव्यः ॥ प्राचीनावीती ॥ अस्मत् पितृपितामहप्रपितामहस्थानेक्षणंदत्वा भवद्भिःप्रसादःकर्तव्यः ॥ सुकर्तव्यः ॥ मंडलंकुर्यात् ॥ प्रादेशमात्रंदेवानांमंडलंचतुरस्रकं ॥ वितस्तिमात्रंपितृमंडलंवर्तुलंकुर्यात् ॥ सव्यं ॥ देवपाद्यासनेइदमासनं ॥ अत्रंनमः ॥ गंधःनमः ॥ पुष्पंनमः ॥ सर्वोपचाराः यवैःसंपूर्णाःसंतु ॥ अपसव्यं ॥ पितृपाद्यासनेइदमासनं ॥ अत्रंनमः ॥ गंधःनमः ॥ पुष्पंनमः ॥ सर्वोपचाराःतिलैःसंपूर्णाःसंतु ॥ सव्यं ॥ देवाःस्वागतंसुस्वागतं ॥ पुरूरवार्द्रवसंज्ञकाविश्वेदेवाः ब्रह्मणेभूर्भुवःस्वःइदंवःपाद्यं ॥ सुपाद्यं ॥ एवंद्वितीयः॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवं

तुनः ॥ ॥ इतिमंत्रेणब्राह्मणानांशुद्धोदकेनपादक्षालनंकुर्यात् ॥ अपसव्यं ॥ पितःस्वागतं ॥ सुस्वागतं ॥ पितःअमुकशर्मन् ॥ अमुकगोत्रवसुरूपब्रह्मणेभूर्भुवःस्वःइदंतेपाद्यं ॥ सुपाद्यं ॥ एवंपितामह ॥ प्रपितामह ॥ शंनोदेवीतिपूर्ववत् ॥ मंडलात्पूर्वतोदेवैःपितृभिश्चतथोत्तरे ॥ कर्ताचैवतुईशान्यामेवमाचमनंस्मृतं ॥ सव्यं ॥ सर्वेषांस्वागतं ॥ सुस्वागतं ॥ देवाःसमाध्वं ॥ सुसमास्महे ॥ प्राचीनावीती ॥ अस्मत्पितृपितामहप्रपितामहाःसमाध्वं ॥ सुसमास्महे ॥ सव्यं ॥ उपक्रांतं ॥ प्रतिसांवत्सरिकश्राद्धाख्यंकर्मकरिष्ये ॥ कुरुष्व ॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ यवोसियवयास्मद्वेषोयवयाअरातीः ॥ प्राचीनावीती ॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ अपहतासुरारक्षांसिपिशाचायेक्षयंतिपृथिवीमनु ॥ अन्यत्रैतोगच्छंतुयत्रैतेषांगतंमनः ॥ तिलारक्षंत्वसुरान्दर्भारक्षंतुराक्षसान्॥पंक्तिंवैश्रोत्रियोरक्षेदतिथिःसर्वरक्षकः ॥ सुरक्षकः॥ रक्षोहणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म ॥ शिशानोअग्निःक्रतुभिःसमिद्धःसनोदिवासरिषःपातुनक्तं ॥ अष्टौवसवएकादशरुद्राद्वादशादित्याःश्राद्धद्वारेवैष्णवीरक्षागयेयंभूमिः ॥ सुभूमिः ॥ सव्यं ॥ पाकप्रोक्षणं ॥ त्रिभिष्टुंदेवसवितर्वर्षिष्ठैःसोमधामभिः ॥ अग्नेदक्षैःपुनीहिनः ॥ पुनंतुमांदेवजनाःपुनंतुवसवोधिया ॥ विश्वेदेवाःपुनीतमाजातवेदःपुनीहिमा ॥ प्रप्यायस्वप्रस्यंदस्वसोमविश्वेभिरंशुभिः ॥ देवेभ्यउत्तमंहविः ॥ ॐभूर्भुवः स्वः ॥ तत्सवितु० ॥ गायत्र्यापाकादीनांपवित्रतास्तु ॥ सर्वेपाकाःशुचयोभवंतु ॥ पाकप्रोक्षणविधिवदस्तु ॥ अस्तुविधिवत् ॥ आगच्छंतुमहाभागाविश्वेदेवामहाबलाः ॥ येअत्रविहिताश्राद्धेसावधानाभवंतुते ॥ सावधानोस्मि ॥ प्राचीनावीती ॥ श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंगदाधरं ॥ वस्वादींश्चपितृंन्ध्यात्वाततःश्रात्धंप्रवर्तते ॥ प्रवर्तय ॥ सव्यं ॥ अपोदत्वा ॥ पुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांब्रह्मणेभूर्भुवस्वरिदमासनं ॥ स्वासनं ॥ एवंद्वितीयदेवे ॥ अत्रास्यतांधर्मोसि ॥ अत्रास्यामः ॥ प्रतिसांवत्सरिकश्रात्धेदैवेआसनेक्षणःक्रीयतां ॥ ओंतथा ॥ प्राप्नोतुभवान् ॥ प्राप्नवानि ॥ अर्घ्यमासाद्य ॥ प्रोक्षितायांभुवि ॥ पात्रद्वयंनिधाय ॥ गायत्र्याप्रोक्ष्य ॥ उद्धृत्य ॥ पुनःप्रोक्ष्य ॥ पूर्वाग्रकूर्चौनिधायअपआसिच्य ॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ इतिसकृदभिमंत्र्य ॥ यवोसिधान्यराजोवावारुणोमधुसंयुतः ॥ निर्णोदःसर्वपापानांपवित्रमृषिभिःस्मृतं ॥ देवार्घ्यपात्रयोःअन्नंनमः ॥ गंधंनमः ॥ पुष्पंनमः ॥ सर्वोपचाराःयवैःसंपूर्णाःसंतु ॥ देवार्घ्यपात्रेसंपन्ने ॥ सुसंपन्ने ॥ स्वाहाअर्घ्याःपः ॥ अस्तुस्वाहा ॥ अत्र ॥ पुरूरवार्द्रवसंज्ञकान्विश्वान्देवान्भवत्सुयथायथंआवाहयिष्ये ॥ आवाहय ॥ विश्वेदेवासआगंतशृणुतामइमंहवं ॥ एदंबर्हिर्निषीदत ॥ विश्वेदेवाःशृणुतेमंहवंमेयेअंतरिक्षेयउपद्यविष्ठ ॥ येऽअग्निजिव्हाउतवायजत्रा

आसद्यास्मिन्बर्हिषिमादयध्वं ॥ विश्वान्देवान्आवाहयामि ॥ आवाहय ॥ अत्र ॥ पूरूरवार्द्रवसंज्ञका विश्वेदेवाःब्राह्मणेभूर्भुवःस्वःइदंवोअर्घ्यंस्वाहा ॥ अस्त्वर्घ्यं ॥ यादिव्याआपःपृथिवीसंबभूवुर्याअंतरिक्षया उतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानआपःशंस्योनाभवंतु ॥ पूरूरवार्द्रवसंज्ञकेभ्योविश्वेभ्योदेवेभ्यःइ दमर्घ्यंदत्तंनमम ॥ एवंद्वितीयदेवे ॥ अत्र ॥ पूरूरवार्द्रवसंज्ञकाविश्वेदेवाःयथाभागशःअमीवोगंधाः ॥ सुगंधाः स्वाहानमोनमम ॥ इमानिविष्णोर्निर्माल्यतुलसीपत्राणि ॥ सुपत्राणि ॥ स्वाहानमोनमम ॥ मा ल्यार्थेइमानिपुष्पाणि ॥ सुपुष्पाणि ॥ स्वाहानमोनमम ॥ पूजार्थेएषवोधूपः ॥ सुधूपः ॥ स्वाहान० ॥ एषवोदीपः ॥ सुदीपः ॥ स्वाहान० ॥ आच्छादनार्थेकिंचिद्व्यवहारिकद्रव्यं ॥ अस्तुस्वाच्छादनं ॥ अनु लेपनार्थेगोपीचंदनं ॥ धारणार्थेयज्ञोपवीतं ॥ पवित्रार्थेइमौकुशौ ॥ अस्तुपवित्रं ॥ प्रत्येकंप्रत्येकंस्वाहा नमोनमम ॥ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाध्यो मनसादेवयंतः ॥ देवेभ्यःएतेअत्रगंधपत्रपुष्पधूपदीपअर्चनाच्छादनांतोपचाराःसर्वेपरिपूर्णाभवंतु ॥ अर्च नविधेष्वर्चितमस्तु ॥ न्यूनातिरिक्तंविधिवदस्तु ॥ अस्तुविधिवत् ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञाक्रिया दिषु ॥ न्यूनंसंपूर्णतांयातुसद्योवंदेतमच्युतं ॥ अच्युतायनमः ॥ गंगायैनमः ॥ गदाधरायनमः ॥ पुंडरी काक्षायनमः ॥ युष्मदनुज्ञयापित्राद्यर्चनंकरिष्ये ॥ कुरुष्व ॥ प्राचीनावीती ॥ अस्मत्पितृपितामहप्रपि



स्योनाभवंतु ॥ प्राचीनावीती ॥ पितृपितामहप्रपितामहाइदमर्घ्यंदत्तंनमम ॥ अस्तुदत्तंप्रथमपात्रेसंस्रवा न्समवनीय ॥ पितृभ्यःस्थानमसि ॥ स्थानमसिप्रणीतायैनमः ॥ इदमासनं ॥ अत्रंन० ॥ गंधं० ॥ पुं ष्पं० ॥ सर्वोपचाराःतिलैःसंपूर्णाःसंतु ॥ स्थानमसिप्रच्छाद्य ॥ सव्यं ॥ ताभिरद्भिःपुत्रकामोमुखमनक्ति॥ पुत्रवान्भव ॥ अपउपस्पृश्य ॥ अपसव्यं ॥ अस्मत्पितृपितामहप्रपितामहाः ॥ शर्माणः ॥ गोत्राः ॥ व सुरुद्रादित्यस्वरूपाःयथाभागशःअमीवोगंधाःसुगंधाःस्वधानमोनमम ॥ अस्मत्पितृपितामहप्रपितामहाः अमुकशर्माणःअमुकगोत्राःवसुरुद्रादित्यस्वरूपाःमाल्यार्थेपुष्पंतुलसीपत्रंभृंगिराजपत्रसाहितंच सुपत्रंसुपु ष्पंस्वधानमोनमम ॥ अस्मत्पितृपितामहप्रपितामहाःअमुकशर्माणःअमुकगोत्राःवसुरुद्रादित्यस्वरूपाःपूजा र्थेइमौधूपदीपौ ॥ सुधूपदीपौस्वधानमोनमम ॥ आच्छादनार्थेकिंचित्व्यवहारिकद्रव्यं ॥ अस्त्वाच्छाद नं ॥ अनुलेपनार्थेगोपीचंदनं ॥ सुचंदनं ॥ धारणार्थेयज्ञोपवीतंसूपवीतं ॥ फलार्थेपूगीफलं ॥ सुफलं ॥ पवित्रार्थेइमेकुशाः ॥ अस्तुपवित्रं ॥ प्रत्येकंस्वधानमोनमम ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरा सईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ पितृभ्यःएतेआसनाद्यत्रगंधपुष्पधूपदीपअर्च नाच्छादनांताःपंचोपचाराःसर्वेपरिपूर्णाभवंतु ॥ अर्चनविधेष्वर्चितमस्तु ॥ यस्यस्मृत्या० ॥ युष्मदनुद यामंडलादिपात्रासादनंकरिष्ये ॥ कुरुष्व ॥ देवपात्रेचतुष्कोणंमंडलंकृत्वा ॥ पितृपात्रेवर्तुलाकारंकृत्वा ॥

तामहानांअमुकशर्मणांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांब्रह्मणेभुर्भुवःस्वःइदमासनं ॥ स्वासनं ॥
अत्रास्यतांधर्मोसि ॥ अत्रास्यामः ॥ प्रतिसांवत्सरिकश्राद्धेपित्रेआसनेक्षणः क्रीयतां ॥ ॐतथाप्राप्नोतुभ
वान्प्राप्नवानि ॥ अर्घ्यमासाद्य ॥ प्रोक्षितायांभुवि ॥ पात्रत्रयंनिधाय ॥ गायत्र्याप्रोक्ष्य ॥ उत्धृत्य ॥ पुनः
प्रोक्ष्य ॥ दक्षिणाग्रकूर्चान्निधाय ॥ पितृभ्यःओजिष्टंगृण्हामि ॥ पितामहेभ्यःओजिष्टंगृण्हामि ॥ प्रपिता
महेभ्यः ओजिष्टंगृण्हामि ॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥शंयोरभिस्त्रवंतुनः ॥ तिलोसिसोमदेव
त्योगोसवेदेवनिर्मितः ॥ प्रत्नवद्भिःप्रत्तस्वधयापितृनिमांल्लोकान्प्रीणयाहिनःस्वधानमः ॥ इतिमंत्रेणतिला
न्पृथक्पात्रेषुप्रक्षिप्य ॥ पित्राद्यर्घ्यपात्रेषु ॥ अत्रंनमः ॥ गंधं० ॥ पुष्पं० ॥ भृंगिराजप० ॥ सर्वेउपचा
राःतिलैःसंपूर्णाःसंतु ॥ पित्रर्घ्यपात्राणिसंपन्नानि ॥ सुसंपन्नानि ॥ स्वधार्घ्यापःअस्तुस्वधा ॥ अस्मत्पितृ
पितामहप्रपितामहान्अमुकशर्मणःअमुकगोत्रान्वसुरुद्रादित्यस्वरूपान्भवत्सुयथायथंआवाहयिष्ये ॥ आ
वाहय ॥ उशंतस्त्वानिधीमत्युशंतःसमिधीमहि ॥ उशंनुशतआवहपितॄन्हविषेअत्तवे ॥ आयंतुनःपितरः
सोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदंत्वधिब्रुवंतुतेवंत्वस्मान् ॥ पितृपितामहप्रपिताम
हान्आवाहयामि ॥ आवाहय ॥ अत्र सव्यं॥अस्मत्पितरिदंतेअर्घ्यं॥अस्त्व० पितामहेदंतेअर्घ्यं॥अ० प्रपिता०
अस्त्वर्घ्यं ॥ यादिव्याआपःपृथिवीसंबभूवुर्याअंतरिक्षयाउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानआपःशं

देवस्यपात्रेसप्तांकितं ॥ पितृपात्रेनवांकितं ॥ भोजनपात्राणिस्थापयित्वा ॥ प्राचीनावीती ॥ पिशं
गंभृष्टिमंभृणंपिशाचिंमिंद्रसंभृण ॥ सर्वंरक्षोनिबर्हय ॥ सव्यं ॥ रक्षांणोअग्नेतवरक्षणेभीरारक्षाणःसुम
खप्रीणानः ॥ प्रतिंष्फुरविरुंजवीड्वंहोजहिरक्षोमहिंचिद्वावृधानं ॥ ब्रह्मंचतेजातवेदोनमःश्चेयंचगीःसद
मिद्वर्धनीभूत् ॥ रक्षांणोअग्नेतनंयानितोकारक्षोतनंस्तन्वो अप्रंयुच्छन् ॥ ॥ यथाचक्रधरोविष्णुस्त्रैलोक्यं
परिरक्षति ॥ एवंमंडलमस्माकंसर्वभूतानिरक्षतु ॥ सर्वेषांपापदृष्टीनांचक्षुर्बध्नातिकेशवः ॥ भस्मनामंडलं
कुर्यात्पंक्तिदोषोनविद्यते ॥ करशुद्धिरपोशानंपितृपूर्वाणिकारयेत्॥सव्यं भवत्स्वेवभवदनुज्ञयाविप्रपाणावग्नौ
करणंकरिष्ये ॥ क्रियतां ॥ करशुद्धिः ॥ अपसव्यं ॥ घृताक्तमोदनंपात्रेसंस्थाप्यभागद्वयंकृत्वा ॥ इ
दंसोमायपितृमतइदमग्नयेकव्यवाहनाय ॥ सव्यं ॥ देवानांकरशुद्धिंकृत्वा ॥ वामहस्तेनदक्षिणहस्तमुप
स्तीर्य ॥ मध्यात्पूर्वार्धादवदाय ॥ पात्रस्थमवत्तंचाभिघार्य ॥ सोमायपितृमतेस्वधानमः ॥ सोमायपितृम
तइदंनमम ॥ तथा ॥ अग्नयेकव्यवाहनायस्वधानमःअग्नयेकव्यवाहनायइदंनमम ॥ सव्येनउदकोप
स्पर्शनं ॥ ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥
स्वस्तिश्रद्धांमेधांयशः प्रज्ञांविद्याबुद्धिंश्रियंबलं आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ पाणौहुतं ॥ सु
हुतं ॥ पात्राभिघारंकृत्वा ॥ मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निं ॥ कविंसम्राजमति

थिंजनानामासंनापात्रंजनयंतदेवाः ॥ अपसव्यं ॥ आमासुपक्वमैरयमासूर्यंरोहयोदिवि ॥ घर्मंनसामंतप
तासुवृक्तिभिर्जुष्टंगिर्वणसेबृहत् ॥ सोमोधेनुंसोमोअर्वंतमाशुंसोमोवीरंकर्मण्यंददाति ॥ सादन्यंविदथ्यंस
भेयंपितृश्रवणंयोददाशदस्मै ॥ उपह्वयेसुदुघांधेनुमेतांसुहस्तोगोधुगुतदोहदेनां ॥ श्रेष्ठंसवंसवितासाविषं
नोभीद्धोघर्मस्तदुषुप्रवोचं ॥ हिंकृण्वतीवसुपत्नीवसूनांवत्समिच्छंतीमनसाभ्यागात् ॥ दुहामश्विभ्यांपयो
अघ्न्येयंसावर्धतांमहतेसौभगाय ॥ इंद्रदृह्यंयामकोशाअभूवन्यज्ञायंशिक्षगृणतेसखिभ्यः ॥ दुर्मायवोदुरेवा
मर्त्यासोनिषंगिणोरिपवोहंत्वासः ॥ वाशीमंतऋष्टिमंतोमनीषिणःसुधन्वानइषुमंतोनिषंगिणः ॥ स्वश्वास्थ
सुरथाः पृश्निमातरःस्वायुधामरुतोयाथनाशुभं ॥ चतुष्कपर्दायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते ॥ त
स्यांसुपर्णावृषणानिषेदतुर्यत्रदेवादधिरेभागधेयं ॥ एकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंविचष्टे ॥ तं
पाकेनमनसापश्यमंतितस्तंमातारेळ्हिसउरेळ्हिमातरं ॥ सुपर्णंविप्राःकवयोवचोभिरेकंसंतंबहुधाकल्पयं
ति ॥ छंदांसिचदधतोअध्वरेषुग्रहान्त्सोमस्यमिमतेद्वादश ॥ पितुंनुस्तोषंमहोधर्माणंतविषीं ॥ यस्यत्रि
तोव्योजसावृत्रंविपर्वमर्दयत् ॥ स्वादोपितोमधोपितोवयंत्वावृणीमहे ॥ अस्माकमविताभव ॥ उपनःपितवाच



रशिवःशिवाभिरूतिभिः ॥ मयोभुरद्विषेण्यःसखासुशेवोअद्वयाः ॥ तवत्येपितोरसारजांस्यनुविष्ठि
ताः ॥ दिविवाताइवश्रिताः ॥ तवत्येपितोददतस्तवस्वादिष्ठतेपितो ॥ प्रस्वाद्मानोरसानांतुविग्रीवाइवे
रते ॥ त्वेपितोमहानांदेवानांमनोहितं ॥ अकारिचारुकेतुनातवाहिमवसावधीत् ॥ यददोपितोअजग
न्विवस्वपर्वतानां ॥ अत्राचिन्नोमधोपितोरंभक्षायगम्याः ॥ यदपामोषधीनांपरिंशमारिशामहे ॥ वातापेपी
इद्भव ॥ यत्तेसोमगवाशिरोयवाशिरोभजामहे ॥ वातापेपीवइद्भव ॥ करंभओषधेभवपीवोवृक्कउदा
यिः ॥ वातापेपीवइद्भव ॥ तंत्वावयंपितोवचोभिर्गावोनहव्यासुषूदिम ॥ देवेभ्यस्त्वासधमादमस्मभ्यं
त्वासधमादं ॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ कस्त्वासत्योमदानां
मंहिष्ठोमत्सदंधसः ॥ दृळ्हाचिदारुजेवसु ॥ अभीषुणःसखीनामविताजरितॄणां ॥ शतंभवास्यूतिभिः ॥
स्वादोरभक्षिवयसःसुमेधाःस्वाध्योवरिवोवित्तरस्य ॥ विश्वेयंदेवाउतमर्त्यासोमधुब्रुवंतोअभिसंचरंति ॥ अं
तश्चप्रागाअदितिर्भवास्यवयाताहरसोदैव्यस्य ॥ इंदविंद्रस्यसख्यंजुषाणःश्रौष्टीवधुरमनुरायऋध्याः ॥ अ
पामसोममममृताअभूमागन्मज्योतिरविदामदेवान् ॥ किंनूनमस्मान्कृणवदरातिःकिमुधूर्तिरमृतमर्त्यस्य ॥
शन्नोभवहृदआपीतइंदोपितेवसोमसूनवेसुशेवः ॥ सखेवसख्यउरुशंसधीरःप्रणआयुर्जीवसेसोमतारीः ॥

इमेमापीतायशसंउरुष्यवोरथंनगावःसमनाहपर्वसु ॥ तेमारक्षंतुविस्रसश्चरित्रादुतमास्रामायवयंत्विंदवः ॥
॥ १ ॥ अग्निंनमामथितंसंदिदीपःप्रचक्षयकृणुहिवस्यसोनः ॥ अथाहितेमदआसोममन्येरेवांइवप्रचरापुष्टि
मच्छ ॥ इषिरेणतेमनसासुतस्यभक्षीमहिपित्र्यस्येवरायः ॥ सोमराजन्प्रणआयूंषितारीरहानीवसूर्योवासरा
णि ॥ सोमराजन्मृळयानःस्वस्तितवस्मसिव्रत्यास्तस्यविद्धि ॥ अलर्तिदक्षउतमन्युरिंदोमानोअर्योअनुका
मंपरादाः ॥ त्वंहिनस्तन्वःसोमगोपागात्रेगात्रेनिषसत्थानृचक्षाः ॥ यत्तेवयंप्रमिनामव्रतानिसनोमृळसुषखा
देववस्यः ॥ ऋदूदरेणसख्यासचेययोमानरिष्येद्धर्यश्वपीतः ॥ अयंयःसोमोन्यधाय्यस्मेतस्माइंद्रंप्रतिरमेम्या
युः ॥२॥ अपत्याअस्थुरनिराअमीवानिरत्रसंतमिषीचीरभैषुः ॥ आसोमोऽअस्माअरुहद्विहायाअगन्मयत्रप्र
तिरंतआयुः ॥ योनइंदुःपितरोहृत्सुपीतोमर्त्योमर्त्यांआविवेश ॥ तस्मैसोमायहविषाविधेममृळीकेअस्यसु
मतौस्याम ॥ त्वंसोमपितृभिःसंविदानोनुद्यावापृथिवीआततंथ ॥ तस्मैतइंदोहविषाविधेमवयंस्यामपतयो
रयीणां ॥ त्रातारोदेवाअधिवोचतानोमानोनिद्राईशतमोतजल्पिः ॥ वयंसोमस्यविश्वहप्रियासःसुवीरासोवि
दथमावदेम ॥ त्वंनःसोमविश्वतोवयोधास्त्वंस्वर्विदाविशानृचक्षाः ॥ त्वंनइंदऊतिभिःसजोषाःपाहिपश्चा

तादुतवापुरस्तात् ॥ ३ ॥ नवाउदेवाःक्षुधमिद्वधंददुरुताशितमुपगच्छंतिमृत्यवः ॥ उतोरयिःपृणतोनोपदस्य
त्युतापृणन्मर्डितारंनविंदते ॥ यआध्रायचकमानायपित्वोऽन्नवान्त्सन्रपितायोपजग्मुषे ॥ स्थिरंमनःकृणु
सेवतेपुरोतोचित्समर्डितारंनविंदते ॥ सइद्भोजोयोगृहवेददात्यन्नकामायचरतेकृशाय ॥ अरमस्मैभवति
यामहूताउतापरीषुकृणुतेसखायं ॥ नससखायोनददातिसख्येसचाभुवेसचमानायपित्वः ॥ अपास्मात्प्रेया
न्नतदोकोअस्तिपृणंतमन्यमरणंचिदिच्छेत् ॥ पृणीयादिन्नाधमानायतव्यान्द्राघीयांसमनुपश्येतपंथां ॥ ओ
हिवर्ततेरथ्येवचक्रान्यमन्यमुपतिष्ठंतरायः ॥१॥मोघमन्नंविंदतेअप्रचेताःसत्यंब्रवीमिवधइत्सतस्य ॥ नार्यम
णंपुष्यतिनोसखायंकेवलाघोभवतिकेवलादी ॥ कृषन्नित्फालआशितंकृणोतियन्नध्वानमपवृंक्तेचरित्रैः ॥
वदन्ब्रह्मावदतोवनीयान्पृणन्नापिरपृणंतमभिष्यात् ॥ एकपाद्भूयोद्विपदोविचक्रमेद्विपात्त्रिपादमभ्येतिपश्चा
त् ॥ चतुष्पादेतिद्विपदामभिस्वरेसंपश्यन्पंक्तीरुपतिष्ठमानः ॥ समौचिद्धस्तौनसमंविविष्टःसम्मातराचिन्नस
मन्दुहाते ॥ यमयोश्चिन्नसमावीर्याणिज्ञातीचित्संतौनसमंपृणीतः ॥ २ ॥ ॥ छ ॥ ॥ छ ॥
देवताभ्यः पितृभ्यश्चमहायोगिभ्यएवच ॥ नमस्वाहायैस्वधायैनित्यमेवनमोनमः ॥ सव्यं ॥ गायत्रीमं
त्रेणअन्नप्रोक्षणं ॥ दक्षिणजानुंपातयित्वा ॥ तूष्णींपरिषेचनं ॥ सत्यंत्वर्तेन॰ पृथिवीतेपात्रंद्यौरपिधानंब्रा

ह्मणस्यमुखेअमृतंजुहोमिस्वाहा ॥ ब्राह्मणानांत्वाविद्यावतांप्राणापानयोर्जुहोम्यक्षितमसिमामेक्षेष्ठाः॥अत्रामुष्मिल्लोके ॥ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याःसप्तधामभिः ॥ पुरूरवार्द्रव० देवताइदंवोअन्नंइयंभूःश्रीगयागदाधरोभोक्ता॥अहंब्रह्मअन्नंब्रह्मणोब्राह्मणस्त्वाहवनीयार्थेसुवर्णपात्रस्थितामिदमन्नंअक्षय्यवटच्छायेयं ॥ पुरूरवार्द्र० देवेभ्यः इदमन्नंहव्यंपरिविष्टंपरिवेक्ष्यमाणं चदत्तं चदास्यमानंचअस्यब्राह्मणस्यआतृप्तिपर्यंतंगयस्थंपरब्रह्मअमृतरूपेणसंपद्यतांस्वाहाहव्यंनमम ॥ तत्सद्गयायांविष्णुपदादिचतुर्दशपदेषुदत्तमन्नमक्षय्यमस्तु ॥ गयागदाधरःप्रीयतां ॥ गयागदाधरःप्रीतोभवतु ॥ येदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमंजुषध्वं ॥ नमोदेवेभ्यः प्रीयतां ॥ देवानुज्ञयापित्राद्यन्ननिवेदनंकरिष्ये ॥ कुरुष्व ॥ अपसव्यं ॥ सत्यंत्वर्त्तेन० पृथिवीतेपात्रंद्योरपिधानंब्राह्मणस्यमुखेअमृतंजुहोमिस्वाहा ॥ अमुष्मिन्लोके ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूळ्हमस्यपांसुरे॥ पितृपितामहप्रपितामहादेवताः इदंवोअन्नंइयंभूःश्रीगयागदाधरोभोक्ताअहंब्रह्मअन्नंब्राह्मणोब्रह्मणस्त्वाहवनीयार्थेकल्पितरजतपात्रस्थितामिदमन्नंअक्षय्यवटच्छायेयं ॥ अस्मत्पितृपितामहप्रपितामहेभ्यःअमुकशर्मभ्यःअमुकगोत्रेभ्यःवसुरुद्रादित्यस्वरूपेभ्यःइदमन्नंकव्यंपरिविष्टंपरिवेक्ष्यमाणंचदत्तंचदास्यमानंचअस्यब्राह्मणस्यआतृप्तिपर्यंतंगयस्थंपरब्रह्मअमृतरूपेणसंपद्यतांस्वधाकव्यंनमम ॥ तत्सत्गयायांरुद्रपदादि



चतुर्दशपदेषुदत्तमन्नमक्षय्यमस्तु ॥ गयागदाधरःप्रीयतांप्रीतोभवतु ॥ येचेहपितरोयेचनेहयांश्चविद्मयांउचनप्रविद्म ॥ त्वंवेत्थयातितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुषस्व ॥ पितृभ्यःसांकल्पितःप्रीयतां ॥ सव्यं ॥ ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतं ॥ ब्रह्मैवतेनगंतव्यंब्रह्मकर्मसमाधिना ॥ हरिर्दाताहरिर्भोक्ताहरिरन्नंप्रजापतिः ॥ हरिर्विप्रशरीरस्थोभुंक्तेभोजयतेहरिः ॥ त्वांयोगिनश्चिंतयंतित्वांयजंतिचयज्वनः ॥ हव्यकव्यभुगेकस्त्वंपितृदेवस्वरूपधृक् ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ अपसव्यं ॥ ईशानविष्णुकमलासनकार्तिकेयवन्हित्रयार्करजनीशगणेश्वराणां ॥ क्रौंचामरेंद्रकलशोद्भवकश्यपानांपादान्नमामिसततंपितृमुक्तिहेतून् ॥ पंचक्रोशंगयाक्षेत्रंक्रोशमेकंगयाशिरः ॥ यत्रयत्रस्मरिष्यंतिपितृणांदत्तमक्षयं ॥ काशीविश्वेश्वरायनमः ॥ पुंडरीकाक्षायनमः ॥ गयागदाधरायनमः ॥ सव्यं ॥ मधुमतीश्रावयिष्ये ॥ श्रावय ॥ मधुवाताऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः ॥ मधुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्पतिर्मधुमांअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनःमधुमधुमधुसर्वान्नंमधु ॥ अपसव्यं ॥ एकोविष्णुर्महद्भूतंपृथक्भूतान्यनेकशः ॥ त्रीन्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेनापितुःप्रतिसांवत्सरिकश्राद्धेब्राह्मणायअन्नदानेनभगवान्पितृपितामहप्रपितामहस्वरूपीजनार्दनवासुदेवःप्रीयतां ॥ प्रीतोभवतु ॥ सत्सद्ब्रह्म

मणमस्तु ॥ सर्व्वं ॥ यथासुखंजुषध्वं ॥ अमृतंभुंजीत ॥ अमृतऋषिःसत्येदेवता गायत्रीच्छंदः ॥ अमृतोपस्तरणमसि ॥ श्रद्धायांप्राणेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदाय ॥ प्राणायस्वाहा ॥ श्रद्धायामपानेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदाय ॥ अपानायस्वाहा ॥ श्रद्धायांव्यानेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदाय ॥ व्यानायस्वाहा ॥ श्रद्धायामुदानेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदाय ॥ उदानायस्वाहा ॥ श्रद्धायाꣳसमानेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदाय ॥ समानायस्वाहा ॥ ब्रह्मणेस्वाहा ॥ ब्रह्मणिमात्मानममृतत्वाय ॥ गायत्रीजपंकृत्वा ॥ अपेक्षितंयाचितव्यंत्याज्यंचैवानपेक्षितं ॥ उपविश्यसुखेनैवभोक्तव्यंस्वस्थमानसैः ॥ विद्यमानशाकपाकेषुयद्रोचतेतद्ग्राह्यंयन्नरोचतेतत्त्याज्यं ॥ सुखेनैवभोक्तव्यं ॥ जुषामहे ॥ रक्षोघ्नसूक्तानिश्रावयिष्ये ॥ श्रावय ॥

अथ राक्षोघ्नसूक्त प्रारंभः ॥ कृणुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाँइभेन ॥ तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ तवभ्रमासआशुयापतंत्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्नेजुह्वापतंगानसंदितोविसृजविष्वगुल्काः ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोअस्याअदब्धः ॥ योनोदूरेअघशंसोयोअंत्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्य१मित्रांओषतात्तिग्महेते ॥ योनोअरातिंसमिधानचक्रेनीचातंधक्ष्यतसंनशुष्कं ॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनांजामिमजामिंप्रमृणीहिशत्रून् ॥ १ ॥ सतेजानातिसुमतिंयविष्ठयईवतेब्रह्मणेगातुमैरत् ॥ विश्वान्यस्मैसुदिनानिरायोद्युम्नान्यर्योविदुरोअभिद्यौत् ॥ सेदग्नेअस्तुसुभगःसुदानुर्यस्त्वानित्येनहविषायउक्थैः ॥ पिप्रीषतिस्वआयुषिदुरोणेविश्वेदस्मैसुदिनासासदिष्टिः ॥ अर्चामितेसुमतिंघोष्यर्वाक्संतेवावाताजरतामियंगीः ॥ स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्राणिधारयेरनुद्यून् ॥ इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनुद्यून् ॥ क्रीळंतस्त्वासुमनसःसपेमाभिद्युम्नातस्थिवांसोजनानां ॥ यस्त्वास्वश्वःसुहिरण्योअग्नउपयातिवसुमतारथेन ॥ तस्यत्राताभवसितस्यसखायस्तआतिथ्यमानुषग्जुजोषत् ॥ २ ॥ महोरुजामिबंधुतावचोभिस्तन्मापितुर्गोतमादन्वियाय ॥ त्वंनोअस्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूनाः ॥ अस्वप्नजस्तरणयःसुशेवाअतंद्रासोऽवृकाअश्रमिष्ठाः ॥ तेपायवःसध्र्यंचोनिषद्याग्नेतवनःपांत्वमूर ॥ येपायवोमामतेयंतेअग्नेपश्यंतोअंधंदुरितादरक्षन् ॥ ररक्षतान्त्सुकृतोविश्ववेदादिप्संतइद्रिपवोनाहदेभुः ॥ त्वयावयंसधन्य१स्त्वोतास्तवप्रणीत्यश्यामवाजान् ॥ उभाशंसासूदयसत्यतातेनुष्ठुयाकृणुह्यन्ह्याण ॥ अयातेअग्नेसमिधाविधेमप्रतिस्तोमंशस्यमानंगृभाय ॥ दहाशसोरक्षसःपाह्य१स्मान्द्रुहोनिदोमित्रमहोअवद्यात् ॥ ३ ॥

ऋ० ब्र०

॥१०॥

रक्षोहणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म ॥ शिशानोअग्निःक्रतुभिःसमिद्धःसनोदिवासरिषःपातुन
क्तं ॥ अयोदंष्ट्रोअर्चिषायातुधानानुपस्पृशजातवेदःसमिद्धः ॥ आजिव्हयामूरदेवान्रभस्वक्रव्यादोवृक्त्व्य
पिधत्स्वासन् ॥ उभोभयाविन्नुपधेहिदंष्ट्राहिंस्रःशिशानोवरंपरंच ॥ उतांतरिक्षेपरियाहिराजंजंभैःसंधेह्यभि
यातुधानान् ॥ यज्ञैरिषूःसंनममानोअग्नेवाचाशल्यॉअशनिभिर्दिहानः ॥ ताभिर्विध्यहृदयेयातुधानान्प्रतीचोबा
हून्प्रतिभङ्ध्येषां ॥ अग्नेत्वचंयातुधानस्यभिंधिहिंस्राशनिर्हरसाहंत्वेनं ॥ प्रपर्वाणिजातवेदःशृणीहिक्रव्यात्क्रवि
ष्णुर्विचिनोतुवृक्णं ॥ १ ॥ यत्रेदानींपश्यसिजातवेदस्तिष्ठंतमग्नउतवाचरंतं ॥ यद्वांतरिक्षेपथिभिःपतंतं
मस्तांविध्यशर्वाशिशानः ॥ उतालब्धंस्पृणुहिजातवेदआलेभानादृष्टिभिर्यातुधानात् ॥ अग्नेपूर्वोनिजहिशो
शुचानआमादःक्ष्विंकास्तमदंत्वेनीः ॥ इहप्रब्रूहियतमःसोअग्नेयोयातुधानोयइदंकृणोति ॥ तमारभस्वस
मिधायविष्ठनृचक्षसश्चक्षुषेरंधयैनं ॥ तीक्ष्णेनाग्नेचक्षुषारक्षयज्ञंप्रांचंवसुभ्यःप्रणयप्रचेतः ॥ हिंस्रंरक्षांस्यभि
शोशुचानंमात्वादभन्यातुधानानृचक्षः ॥ नृचक्षारक्षःपरिपश्यविक्षुतस्यत्रीणिप्रतिशृणीह्यग्रा ॥ तस्याग्नेपृष्टी
र्हरसाशृणीहित्रेधामूलंयातुधानस्यवृश्च ॥ २ ॥ त्रिर्यातुधानःप्रसितिंतएत्वृतंयोअग्नेअनृतेनहंति ॥ तमर्चिषास्फू

श्रा०

॥१०॥

र्जयंजातवेदःसमक्षमेनंगृणतेनिवृंङ्धि ॥ तदग्नेचक्षुःप्रतिधेहिरेभेशफारुजंयेनपश्यसियातुधानं ॥ अथर्ववज्
ज्योतिषादैव्येनसत्यंधूर्वंतमचितंन्योष ॥ यदग्नेअद्यमिथुनाशपातोयद्वाचस्तृष्टंजनयंतरेभाः ॥ मन्योर्मनसः
शरव्या३जायतेयातयाविध्यहृदयेयातुधानान् ॥ पराशृणीहितपसायातुधानान्पराग्नेरक्षोहरसाशृणीहि ॥ प
रार्चिषामूरदेवाञ्छृणीहिपरासुतृपोअभिशोशुचानः ॥ परायदेवावृजिनंशृणंतुप्रत्यगेनंशपथायंतुतृष्टाः ॥ वा
चास्तेनंशरवऋच्छंतुमर्मन्विश्वस्यैतुप्रसितिंयातुधानः ॥ ३ ॥ यःपौरुषेयेणक्रविषासमंक्तेयोअश्व्येनपशुनायातु
धानः ॥ योअघ्न्यायाभरतिक्षीरमग्नेतेषांशीर्षाणिहरसापिवृश्च ॥ संवत्सरीणंपयउस्रियायास्तस्यमाशीद्या
तुधानोनृचक्षः ॥ पीयूषमग्नेयतमस्तितृप्सात्तंप्रत्यंचमर्चिषाविध्यमर्मन् ॥ विषंगवांयातुधानाःपिबंत्वावृ
श्च्यंतामदितयेदुरेवाः ॥ परैनान्देवःसवितादंदातुपराभागमोषधीनांजयंतां ॥ सनादग्नेमृणसियातुधानान्न
त्वारक्षांसिपृतनासुजिग्युः ॥ अनुदहसहमूरान्क्रव्यादोमातेहेत्यामुक्षतदैव्यायाः ॥ त्वन्नोअग्नेअधरादुद
क्तात्त्वंपश्चादुतरक्षापुरस्तात् ॥ प्रतितेतेअजरासस्तपिष्ठा अघशंसंशोशुचतोदहंतु ॥ ४ ॥ पश्चात्पुरस्तादधरादुद
क्तात्कविःकाव्येनपरिपाहिराजन् ॥ सखेसखायमजरोजरिम्णेऽग्नेमर्ताँअमर्त्यस्त्वंनः ॥ परित्वाग्नेपुरंवयंवि

प्रसहस्यधीमहि ॥ धृषद्वर्णंदिवेदिवेहंतारंभंगुरावतां ॥ विषेणभंगुरावतःप्रतिष्मरक्षसोदह ॥ अग्नेतिग्मेन
शोचिषातपुरग्राभिर्ऋष्टिभिः ॥ प्रत्यग्नेमिथुनादहयातुधानांकिमीदिना ॥ संत्वाशिशामिजागृह्यदब्धंविप्र
मन्मभिः ॥ प्रत्यग्नेहरसाहरःशृणीहिविश्वतःप्रति ॥ यातुधानस्यरक्षसोबलंविरुजवीर्यं ॥ ५ ॥ ॥ ७ ॥
इंद्रासोमातपतंरक्षउब्जतंन्यर्पयतंवृषणातमोवृधः ॥ पराशृणीतमचितोन्योषतंहतंनुदेथांनिशिशीतमत्रिणः॥
इंद्रासोमासमघशंसमभ्या१घंतपुर्ययस्तुचरुरग्निवांइव ॥ ब्रह्मद्विषेक्रव्यादेघोरचक्षसेद्वेषोधत्तमनवायंकि
मीदिने ॥ इंद्रासोमादुष्कृतोवव्रेअंतरनारंभणेतमसिप्रविध्यतं ॥ यथानातःपुनरेकश्चनोदयत्तद्वामस्तुसहसे
मन्युमच्छवः ॥ इंद्रासोमावर्तयतंदिवोवधंसंपृथिव्याअघशंसायतर्हणं ॥ उत्तक्षतंस्वर्यं१पर्वतेभ्योयेनरक्षो
वावृधानंनिजूर्वथः ॥ इंद्रासोमावर्तयतंदिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः ॥ तपुर्वधेभिरजरेभिरत्रिणो
निपर्शानेविध्यतंयंतुनिस्वरं ॥ १ ॥ इंद्रासोमापरिवांभूतुविश्वतइयंमतिःकक्ष्याश्वेववाजिना ॥ यां
वांहोत्रांपरिहिनोमिमेधयेमाब्रह्माणिनृपतीवजिन्वतं ॥ प्रतिस्मरेथांतुजयद्भिरेवैर्हतंद्रुहोरक्षसोभंगुरावतः ॥
इंद्रासोमादुष्कृतेमासुगंभूद्योनःकदाचिदभिदासतिद्रुहा ॥ योमापाकेनमनसाचरंतमभिचष्टेअनृतेभिर्व





चोभिः ॥ आपइवकाशिनासंगृभीताअसन्नस्त्वासतइंद्रवक्ता ॥ येपाकशंसंविहरंतएवैर्येवाभद्रंदूषयंतिस्वव
धाभिः ॥ अहयेवातान्प्रददातुसोमआवादधातुनिर्ऋतेरुपस्थे ॥ योनोरसंदिप्सतिपित्वोअग्नेयोअश्वानांयोग
वांयस्तनूनां ॥ रिपुस्तेनःस्तेयकृद्दभ्रमेतुनिषहीयतांतन्वा३तनाच ॥ २ ॥ परःसोअस्तुतन्वा३तना
चतिस्रःपृथिवीरधोअस्तुविश्वाः ॥ प्रतिशिष्यतुयशोअस्यदेवायोनोदिवादिप्सतियश्चनक्तं ॥ सुविज्ञानंचि
कितुषेजनायसच्चासच्चवचसीपस्पृधाते ॥ तयोर्यत्सत्यंयतरदृजीयस्तदित्सोमोवतिहंत्यासत् ॥ नवाउसोमो
वृजिनंहिनोतिनक्षत्रियंमिथुयाधारयंतं ॥ हंतिरक्षोहंत्यासद्वदंतमुभाविंद्रस्यप्रसितौशयाते ॥ यदिवाहमनृ
तदेवआसमोघंवादेवांअप्यूहेअग्ने ॥ किमस्मभ्यंजातवेदोहृणीषेद्रोघवाचस्तेनिर्ऋथंसचंतां ॥ अद्यामुरी
ययदियातुधानोअस्मियदिवायुस्ततपपूरुषस्य ॥ अधासवीरैर्दशभिर्वियूयायोमामोघंयातुधानेत्याह ॥ ३ ॥
योमायातुंयातुधानेत्याहयोवारक्षाःशुचिरस्मीत्याह ॥ इंद्रस्तंहंतुमहतावधेनविश्वस्यजंतोरधमस्पदीष्ट॥ प्रया
जिगातिखर्गलेवनक्तमपद्रुहातन्वं१गूहमाना ॥ वव्रांअनंतांअवसापदीष्टग्रावाणोघ्नंतुरक्षसउपब्दैः ॥
वितिष्ठध्वंमरुतोविक्ष्वी१च्छतगृभायतरक्षसःसंपिनष्टन ॥ वयोयेभूत्वीपतयंतिनक्तभिर्येवारिपोदधिरेदेवेअ

ध्वरे ॥ प्रवर्तयदिवोअश्मानमिंद्रसोमशितंमघवन्त्संशिशाधि ॥ प्राक्तादपाक्तादधरादुदक्तादभिजहिरक्षसःप
र्वतेन ॥ एतउत्येपतयंतिश्वयातवइंद्रंदिप्संतिदिप्सवोदाभ्यं ॥ शिशीतेशक्रःपिशुनेभ्योवधंनूनंसृजदशनिं
यातुमद्भ्यः ॥ ४ ॥ इंद्रोयातूनामभवत्पराशरोहविर्मथीनामभ्या३विवासतां ॥ अभीदुशक्रःपरशुर्यथावनं
पात्रेवभिंदन्त्सतएतिरक्षसः ॥ उलूकयातुंशुशुलूकयातुंजहिश्वयातुमुतकोकयातुं ॥ सुपर्णयातुमुतगृध्रयातुं
दृषदेवप्रमृणरक्षइंद्र ॥ मानोरक्षोअभिनड्यातुमावतामपोच्छतुमिथुनायाकिमीदिना ॥ पृथिवीनःपार्थिवा
त्पात्वंहसोऽतरिक्षंदिव्यात्पात्वस्मान् ॥ इंद्रंजहिपुमांसंयातुधानमुतस्त्रियंमाययाशाशदाना ॥ विग्रीवासोमू
रदेवाऋदंतुमातेदृशन्त्सूर्यमुच्चरंतं ॥ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं ॥ रक्षोभ्योवधमस्यतमशनिंयातुम
द्भ्यः ॥ ५ ॥ अग्नेहंसिन्य१त्रिणंदीद्यन्मर्त्येष्वा ॥ स्वेक्षयेशुचिव्रत ॥ उत्तिष्ठसिस्वाहुतोघृतानिप्रतिमोद
से ॥ यत्त्वास्रुचःसमस्थिरन् ॥ सआहुतोविरोचतेग्निरीळेन्योगिरा ॥ स्रुचाप्रतीकमज्यते ॥ घृतेनाग्निःस
मज्यतेमधुप्रतीकआहुतः ॥ रोचमानोविभावसुः ॥ जरमाणःसमिध्यसेदेवेभ्योहव्यवाहन ॥ तंत्वाहवंतम
र्त्याः ॥१॥ तंमर्ताअमर्त्यंघृतेनाग्निंसपर्यत ॥ अदाभ्यंगृहपतिं ॥ अदाभ्येनशोचिषाग्नेरक्षस्त्वंदह ॥ गोपाकृत



स्यदीदिहि ॥ सत्वमग्नेप्रतीकेनप्रत्योषयातुधान्यः ॥ उरुक्षयेषुदीद्यत् ॥ तंत्वागीर्भिरुरुक्षयाहव्यवाहंसमी
धिरे ॥ यजिष्ठंमानुषेजने ॥ २ ॥ ब्रह्मणाग्निःसंविदानोरक्षोहाबाधतामितः ॥ अमीवायस्तेगर्भंदुर्णामायो
निमाशये ॥ यस्तेगर्भममीवादुर्णामायोनिमाशये ॥ अग्निष्टंब्रह्मणासहनिष्क्रव्यादमनीनशत् ॥ यस्ते
हंतिपतयंतंनिषत्स्नुंयःसरीसृपं ॥ जातंयस्तेजिघांसतितमितोनाशयामसि ॥ यस्तऊरूविहरत्यंतरादंपतीश
ये ॥ योनिंयोअंतरारेळ्हितामितोनाशयामसि ॥ यस्त्वाभ्रातापतिर्भूत्वाजारोभूत्वानिपद्यते ॥ प्रजांयस्तेजिघां
सतितमितोनाशयामसि ॥ यस्त्वास्वप्नेनतमसामोहयित्वानिपद्यते ॥ प्रजांयस्तेजिघांसतितमितोनाशयामसि
॥१॥ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ इदं
पितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ आहंपितृन्त्सु
विदत्रांअवित्सिनपातंचविक्रमणंचविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजंतपित्वस्तइहागमिष्ठाः ॥ बर्हिषदःपि
तरऊत्य१र्वागिमावोहव्याचकृमाजुषध्वं ॥ तआगतावसाशंतमेनाथानःशंयोररपोदधात ॥ उपहूताःपितरःसो
म्यासोबर्हिष्येषुनिधिषुप्रियेषु ॥ तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेऽवंत्वस्मान् ॥१॥ आच्याजानुदक्षिणतोनिषद्ये

मेयज्ञमभिगृणंतिविश्वे ॥ माहिंसिष्टपितरःकेनचिन्नोयद्वआगःपुरुषताकराम ॥ आसीनासोअरुणी
नामुपस्थेरयिंधत्तदाशुषेमर्त्याय ॥ पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छततइहोर्जंदधात ॥ येनःपूर्वेपितरः
सोम्यासोऽनूहिरेसोमपीथंवसिष्ठाः ॥ तेभिर्यमःसंरराणोहवींष्युशन्नुशद्भिःप्रतिकाममत्तु ॥ येतातृषुर्देव
त्राजेहमानाहोत्राविदःस्तोमतष्टासोअर्कैः ॥ आग्नेयाहिसुविदत्रेभिरर्वाङ्सत्यैःकव्यैःपितृभिर्घर्मसद्भिः ॥
येसत्यासोहविरदोहविष्पाइंद्रेणदेवैःसरथंदधानाः ॥ आग्नेयाहिसहस्रंदेववंदैःपरैःपूर्वैःपितृभिर्घर्मसद्भिः॥२॥
अग्निष्वात्ताःपितरएहगच्छतसदःसदःसदतसुप्रणीतयः ॥ अत्ताहवींषिप्रयतानिबर्हिष्यथारयिंसर्ववीरंदधा
तन ॥ त्वमग्नईळितोजातवेदोऽवाड्ढव्यानिसुरभीणिकृत्वी ॥ प्रादाःपितृभ्यःस्वधयातेअक्षन्नद्धित्वंदेवप्रयता
हवींषि ॥ येचेहपितरोयेचनेहयांश्चविद्मयाँउचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुष
स्व ॥ येअग्निदग्धायेअनग्निदग्धामध्येदिवःस्वधयामादयंते ॥ तेभिःस्वराळसुनीतिमेतांयथावशंतन्वंकल्पयस्व
॥ ३॥ देवानांपत्नीःशंसत्यनूचीरग्निंगृहपतिंतस्मादनूचीपत्नीगार्हपत्यमास्तेतदाहूराकांपूर्वांशंसेज्जाम्यैवैपूर्व
पेयमितितत्तन्नादृत्यंदेवानामेवपत्नीःपूर्वाःशंसेदेषहवाएतत्पत्नीषुरेतोदधातियदग्निर्गार्हपत्योग्निनैवासुतद्गार्ह
पत्येनपत्नीषुप्रत्यक्षाद्रेतोदधातिप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदतस्मात्समानोदर्यास्वसान्योदर्यायैजा
यायाअनुजीविनीजीवतिराकांशंसतिराकाहवाएतांपुरुषस्यसेवनींसीव्यतियैषाशिश्नेधिपुंमांसोस्यपुत्राजायं



तेयएवंवेदपावीरवींशंसतिवाग्वैसरस्वतीपावीरवीवाच्येवतद्वाचंदधातितंदाहुर्यामींपूर्वांशंसेत् ॥ पित्र्यांइ
ति ॥ यामीमेवपूर्वांशंसेदिमंयमप्रस्तरमाहिसीदेतिराज्ञोवैपूर्वंपेयंतस्माद्यामीमेवपूर्वांशंसेन्मातलीकव्यैर्यमो
अंगिरोभिरितिकाव्यानामनूचींशंसत्यवरेणैववैदेवान्काव्याःपरेणैवपितृंस्तस्मात्काव्यानामनूचींशंसत्युदीर
तामवरउत्परासइतिपित्र्याःशंसत्युन्मध्यमाःपितरःसोम्यासइतियेचैवावमायेचपरमायेचमध्यमास्तांस्सर्वा
ननंतरायंप्रीणात्याहंपितॄन्त्सुविदत्राँअवित्सीतिद्वितीयांशंसतिबर्हिषदोयेस्वधयासुतस्येत्येतद्वाएषांप्रियंधाम
यद्बर्हिषदइतिप्रियेणैवैनंस्तद्धाम्नासमर्धयतिप्रियेणधाम्नासमृध्यतेयएवंवेदेदंपितृभ्योनमोअस्त्वद्येतिनमस्का
रवतीमंततःशंसतितस्मादंततःपितृभ्योनमस्क्रियतेतदाहुर्व्याहावंपित्र्याःशंसेत् ॥ अव्याहाऽवाँऽइति
॥ व्याहावमेवशंसेदसंस्थितंवैपितृयज्ञस्यसाध्वसंस्थितंवाएषपितृयज्ञंसंस्थापयतियोव्याहावंशंसतितस्मा
द्व्याहावमेवशंस्तव्यं ॥ १ ॥ स्वादुष्किलायंमधुमाँउतायमितींद्रस्यैंद्रीरनुपानीयाःशंसत्येताभिर्वाइंद्रस्तृती
यसवनमन्वपिबत्तदनुपानीयानामनुपानीयात्वंमाद्यंतीववैतर्हिदेवतायदेताहोताशंसतितस्मादेतासुमद्वत्प्रति
गीर्यंययोरोजसास्कभितारजांसीतिवैष्णुवारुणीमृचंशंसतिविष्णुर्वैयज्ञस्यदुरिष्टंपातिवरुणःस्विष्टंतयोरुभयो
रेवशांत्यैविष्णोर्नुकंवीर्याणिप्रवोचमितिवैष्णवींशंसतियथावैमत्यमेवंयज्ञस्यविष्णुस्तद्यथादुष्कृष्टंदुर्मतीकृतं
सुकृष्टंसुमतीकृतंकुर्वन्नियादेवमेवैतद्यज्ञस्यदुष्टुतंदुःशस्तंसुष्टुतंसुशस्तंकुर्वन्नेतियदेतांहोताशंसतितंतुंतन्वन्र
जसोभानुमन्विहीतिप्राजापत्यांशंसतिप्रजावैतंतुःप्रजामेवास्माएतत्संतनोतिज्योतिष्मतःपथोरक्षधियाकृता

नितिदेवयानावैज्योतिष्मंतः पंथानस्तानेवास्माएतद्वितनोत्यनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजन
मित्यैवैनंतन्मनोःप्रजयासंतनोतिप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदैवानइंद्रोमघवाविरप्शीत्युत्तमयापरि
दधातीयंवाइंद्रोमघवाविरप्शीकरत्सत्या चर्षणीधृदनर्वेतीयंवैसत्याचर्षणीधृदनर्वा ॥ त्वंराजाजनुषांधेह्यस्मे
इतीयंवैराजाजनुषामधिश्रवोमाहिनंयज्जरित्रइतीयंवैमाहिनंयज्ञश्रवोयजमानोजरितायजमानायैवैतामाशिष
माशास्तेतदुस्पृशंन्भूमिंपरिदध्यात्तघस्यामेवयज्ञंसंभरतितस्यामेवैनंतदंततःप्रतिष्ठापयत्यग्नेमरुद्भिः शुभयद्भि
रृक्वभिरित्याग्निमारुतमुक्थंशस्त्वाग्निमारुतय यजातियथाभागंतद्देवताःप्रीणातिप्रीणाति ॥ इत्यादिसूक्तानि
॥ किंचिद्दध्योदनंगंगामृत्सर्वंसंपूर्णं ॥ सिद्धस्यहविषोर्मध्येयद्रोचतेतयाचयध्वं ॥अलं ॥ मधुमतीश्रावयिष्ये ॥
श्रावय ॥ मधुवाताऋतायतेमधुंक्षरंतिसिंधवः ॥ साध्वीर्नःसंत्वोषधीः ॥मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः ॥ म
धुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्पतिर्मधुमांअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ अपसव्यं ॥ अक्षन्नमीमदंत
ह्यवप्रियाअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विंद्रतेहरी ॥अमुकश्राद्धंसंपन्नं ॥सुसंपन्नं ॥
सव्यं ॥ विश्वेदेवाःतृप्तास्छ ॥ तृप्तास्मः ॥ अपसव्यं ॥ पितृपितामहप्रपितामहाःतृप्तास्थ ॥ तृप्तास्मः ॥ शे
षमन्नंकिंक्रियतां ॥ इष्टैःसहभोज्यतां ॥ सव्यं ॥ अद्यपूर्वो० ॥ प्रतिसांवत्सरिकश्राद्धेतिलोदकपिंडप्रदा
नंकरिष्ये ॥ कुरुष्व ॥ उच्छिष्टभागेभ्योन्नंदीयतां ॥ यजमानकुलेजातादासादास्योन्नकांक्षिणः ॥ तेस



र्वेतृप्तिमायांतुमयादत्तेनभूतले ॥ अमृतापिधानमसि ॥ रौरवेपूयनिलयेपद्म र्बुदनिवासिनां ॥ अर्थिनामुद
कंदत्ताअक्षय्यमुपतिष्ठतु ॥ अपसव्यं ॥ अपहतासुरारक्षांसिवेदिषदः ॥ तामभ्युक्ष्य ॥सकृदाच्छिन्नैर्दर्भैर
वस्तीर्य ॥ शुंधंतांपितरःशुंधंतांपितामहाःशुंधंतांप्रपितामहाःशुंधंतांएवंमात्रादि ॥ एतत्तेअस्मत्पितःअमु
कशर्मन्अमुकगोत्रवसुरूपयेचत्वामत्रानुअयंपिंडस्वधा ॥ अस्मत्पित्रेअमुकशर्मणेअमुकगोत्रायवसुरूपाय
अयंपिंडस्वधानमः ॥ तेभ्यश्च ॥ अयंपिंडोगयस्थोदत्तोनमम ॥ काश्यांविश्वेश्वरपादेदत्तमन्नमक्षय्य
मस्तु ॥ तत्सद्गयायांविष्णुपदादिचतुर्दशपदेषुदत्तमक्षय्यमस्तु ॥ अस्मत्पितामह० शर्मन् गोत्र रुद्ररूप
येचत्वा० पितामहाय शर्मणे० ॥ अस्मत्प्रपितामह० अ० श० गो० आदित्यरू० अस्मत्प्रपिताम
हाय० ॥ महालयेमात्रादिसर्वेषांपिंडदानंकुर्यात् ॥ ततः ॥ आब्रह्मणोयेपितृवंशजातामातुस्तथावंशभवा
मदीयाः ॥ वंशद्वयेस्मिन्ममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥१ ॥ मित्राणिसख्यःपशवश्चवृक्षादृष्टाश्च
पृष्टाश्चकृतोपकाराः ॥जन्मांतरंयेममसंगताश्चतेभ्यःस्वधापिंडमहंददामि ॥२॥ पितृवंशेमृतायेचमातृवंशेतथै
वच ॥ गुरुश्वशुरबंधूनायेचान्येबांधवास्मृताः ॥ ३ ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालो
पगताश्चैवजात्यंधाःपंगवस्तथा ॥ ४ ॥ विरूपाआमगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ धर्मपिंडोमयादत्तोह्यक्ष
य्यमुपतिष्ठतु ॥५॥ असिपत्रवनेघोरेकुंभीपाकेचयेगताः ॥ तेषामुध्दरणार्थायइमंपिंडंददाम्यहं ॥६॥ उत्स
न्नकुलवंशानांयेषांदाताकुलेनहि ॥ धर्मपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ ७ ॥ अत्रपितरोमादयध्वंय

थ भागमावृषायध्वं ॥ अमीमदंतपितरोयथाभागमावृषायीषत ॥चरोःप्राणभक्षंभक्षयेत् ॥ असौत्वभ्यंक्ष्व॥
पितःअभ्यंक्ष्व ॥ पितःअंक्ष्वेतिसर्वत्र ॥ पिंडेष्वंजनाभ्यंजनवासांसिदद्यात् ॥ दशामूर्णास्तुकांत्रा एतद्वःपि
तरोवासोमानोतोन्यत्पितरोयुङ्ध्वं ॥ कुलाभिवृद्ध्यर्थंसव्येनपिंडपूजांकरिष्ये ॥ पिंडस्थाःपितरःपाद्यंस्व
धा० अर्घ्यंस्वधा० आचमनीयं० स्नानं० ॥ गंधंस्वधा ॥ पुष्पं० ॥ भृंगिराज० धूपं० ॥ दीपं० ॥ नै
वेद्यं० ॥ तांबूलं० ॥ दक्षिणां० ॥ अपसव्यं० ॥ उपस्थाय ॥ इत्यथैनानुपतिष्ठेत ॥ ॥ नमोवःपित
रइषेनमोवःपितरऊर्जेनमोवःपितरःशुष्मायनमोवःपितरोघोरायनमोवः पितरोजीवायनमोवः पितरोरसाय ॥
॥ स्वधावःपितरोनमोवःपितरोनमएतायुष्माकंपितरइमाअस्माकंजीवावोजीवंतइहसंतस्याम ॥ ॥ मनो
न्वाहुवामहेनाराशंसेनसोमेन ॥ ॥ पितृणांचमन्मभिः ॥ आतएतुमनःपुनःक्रत्वेदक्षायजीवसे ॥ ज्यो
क्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥ जीवंव्रातंसचेमहि ॥ सव्यं ॥ पिंडान्नमस्कृत्य ॥
अपसव्यं ॥ ऊर्जंवहंतिरमृतघृतंपयःकिलालंतंतरिस्तुतं ॥ स्वधास्थतर्पयतमेपितॄन्तृप्यततृप्यत ॥ परेत
नःपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्व्यणेभिः ॥ दत्वायास्मभ्यंद्रविणेहभद्रंरयिंचनःसर्ववीरंनियच्छत ॥
पिंडांश्चालयित्वा ॥ वीरंमेदत्तपितरः ॥ ३ ॥ गयायांधर्मपृष्ठेषुसदसिब्रह्मणस्पते ॥ गयाशीर्षवटेचैवपितॄ
णांदत्तमक्षयं ॥ गयायांपितृरूपेणस्वयमेवजनार्दनः ॥ तंदृष्ट्वापुंडरीकाक्षंमुच्यतेचऋणत्रयात् ॥ शमीपत्र



प्रमाणेनपिंडंदद्याद्गयाशिरे ॥ उद्धरेत्सप्तगोत्राणिकुलमेकोत्तरंशतं ॥ सव्यं ॥ असोमपाश्चयेदेवायज्ञभाग
विवर्जिताः ॥ तेषामन्नंप्रदास्यामिविकिरंवैश्वदेविकं ॥ असोमपेभ्योविश्वेभ्योदेवेभ्यःइदंविकिरान्नंदत्तंनम
म ॥ अपसव्यं ॥ असंस्कृतप्रमीतायेत्यागिन्योयाःकुलस्त्रियः ॥ दास्यामितेभ्योविकिरमन्नंताभ्यश्चपैतृ
कं ॥ कुमारकुमारिभ्यःगर्भादिनिःसृतेभ्यःइदंप्रकिरान्नंदत्तंनमम ॥ येअग्निदग्धायेअनग्निदग्धामध्येदिवःस्व
धयामादयंते ॥ तेभिःस्वराळसुनीतिमेतांयथावशंतन्वंकल्पयस्व ॥ येअग्निदग्धेभ्यःयेअनग्निदग्धेभ्यःअस्म
त्कुलप्रसूतेभ्योजीवेभ्यःउच्छिष्टपिंडोगयस्थोदत्तोनमम ॥ तिलोदकंदत्वा ॥ सव्यंपवित्रंविसृज्याच
म्य ॥ पवित्रंवंतःपरिवाचमासतेपितैषांप्रत्नोअभिरक्षतिव्रतं ॥ महःसमुद्रंवरुणस्तिरोदधेधीराइच्छेकुर्धरुणे
ष्वारभं ॥ अनेनमंत्रेणपवित्रंधृत्वा ॥ शिवाआपःसंतु ॥ सतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौम
नीयं ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतमरिष्टंच ॥ स्वस्तिभवंतोब्रुवंतु ॥ आयुष्मतेस्वास्ति ॥ अपस
व्यं ॥ शिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनीयं ॥ तिलाःपांतु ॥ पांतुति
लाः ॥ स्वस्तिभवंतोब्रुवंतु ॥ आयुष्मतेस्वस्ति ॥ अस्मत्गोत्रंवर्धतांगोत्रस्याभिवृद्धिरस्तु ॥ पिंडानामर्च
नविधिष्वर्चितमस्तु ॥ सव्यं ॥ भोजनपात्राण्युच्चालयिष्ये ॥ उच्चालय ॥ देवाःस्वस्तीतिब्रूत ॥ सर्वेस्व
स्ति ॥ अपसव्यं ॥ पित्रादिसंकल्पमुच्चार्य ॥ ममपितुःयद्दत्तंप्रतिसांवत्सरिकश्राद्धीयमन्नमुदकादितदक्ष

य्यमस्त्वितिभवंतोब्रुवंतु ॥ अस्त्वक्षय्यं ॥ सव्यं ॥ पुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांयद्दत्तंप्रतिसांव
त्सरिकश्रद्धीयमन्नमुदकादितदक्षय्यमस्त्वितिभवंतोब्रुवंतु ॥ अस्त्वक्षय्यं ॥ देवानांस्वर्णी ॥ पितॄणांरज
तं ॥ श्राद्धभुंक्तेभ्योब्राह्मणेभ्यःदक्षिणाःपांतु ॥ पांतुदक्षिणाः ॥ स्वधांवाचयिष्ये ॥ वाच्यतां ॥ अप
सव्यं ॥ पितुःस्वधोच्यतां पितामहःस्वधोच्यतांप्रपितामहस्वधोच्यतां ॥ अस्तुस्वधा ॥ पिंडोपरितिलो
दकंदद्यात् ॥ स्वधासंपद्यंतामितिभवंतोब्रुवंतु ॥ संपद्यंतांस्वधा ॥ सव्यं ॥ अग्निपुरोगाविश्वेदेवाःप्रीयं
तामितिभवंतोब्रुवंतु ॥ प्रीयंतांविश्वेदेवाः ॥ अपसव्यं ॥ वसुपुरोगाःपितरःप्रीयंतामितिभवंतोब्रुवंतु ॥
प्रीयंतांपितरः ॥ सव्यं ॥ संकल्पसिद्धिरस्त्वितिभवंतोब्रुवंतु ॥ अस्तुसंकल्पसिद्धिः ॥ शाकपाकाःपितृ
प्रियाः ॥ उत्तमोत्तमाः ॥ आत्मालंकारः ॥ पिंडान्नमस्कृत्य ॥ पिंडोद्धारणंकरिष्ये ॥ उद्धारय ॥ तद्वि
ष्णोःपरमंपदंसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततं ॥ तद्विप्रासोविपन्यवोजागृवांसःसमिंधते ॥ विष्णोर्य
त्परमंपदं ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिका ॥ पुरीद्वारावतीचैवसप्तैतामोक्षदायकाः ॥ पिंड
स्थानेशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ स्वस्थानेवासः ॥ वसिष्ठऋषिः ॥ वाजिन्येदेवता ॥ कूर्चविसर्जनेविनि
योगः ॥ वाजेवाजेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभि
र्देवयानैः ॥ उत्तिष्ठंतुपितरःसव्येनविश्वेदेवैःसह ॥ आमावाजस्यप्रसवोजगम्यादाद्यावापृथिवीविश्वशंभूः॥



तिभवंतोब्रुवंतु ॥ ब्राह्मणवचनात्सर्वसंपूर्णमस्तु ॥ वसिष्ठासःपितृवद्वाचमक्रतदेवांईळानाऋषिवत्स्वस्तये॥
प्रीताईवज्ञातयःकाममेत्यास्मेदेवासोवधूनुतावसु ॥ देवान्वसिष्ठोअमृतान्ववंदेयेविश्वाभुवनाभिप्रतस्थुः ॥
तेनोरासंतामुरुगायमद्ययूयंपातःस्वस्तिभिःसदानः ॥ इदंपितृभ्योनमोअस्त्वद्येतिनमस्कारवतीमंततःशंस
तितस्मादंततःपितृभ्योनमस्क्रियतेतदाहुर्व्याहावंपित्र्याःशंसेत् ॥ अव्याहावां ३ इति ॥ व्याहावमेवशं
सेदसंस्थितंवैपितृयज्ञस्यसाध्वसंस्थितंवाएषपितृयज्ञंसंस्थापयातियोव्याहावंशंसतितस्माव्याहावमेवशंस्त
व्यं ॥ आसीमांतमनुव्रजेत् ॥ अनुव्रज ॥ जपच्छिद्रंतपच्छिद्रंयच्छिद्रंश्राद्धकर्मणि ॥ सर्वंभवतुमेछिद्रं
ब्राह्मणानांप्रसादतः ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातुसद्योवंदेतम
च्युतं ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंद्विजोत्तमाः ॥ श्राद्धंसंपूर्णतांयातुप्रसादाद्भवतांमम ॥ अनेन
पितुःप्रतिसांवत्सरिकश्राद्धयज्ञेनपितृपितामहप्रपितामहस्वरूपीजनार्दनवासुदेवःप्रीयतां ॥ एषपितृयज्ञः ॥
तत्सद्ब्रह्मार्पणमस्तु ॥ वषट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपिविष्टहव्यं ॥ वर्धंतुत्वासुष्टुतयोगिरोमेयूयं
पातःस्वस्तिभिःसदानः ॥ विष्णवेनमोविष्णवेनमोविष्णवेनमः ॥ अर्घ्यमावाहनंचैवद्विजांगुष्ठनिवेशनं ॥
तृप्तिप्रश्नंचविकिरंतीर्थेपंचविवर्जयेत् ॥ संकल्पासनयोःषष्ठीद्वितीयावाहनेतथा ॥ अन्नदानेचतुर्थीस्याच्छे
षंसंबोधनंस्मृतं ॥ इति प्रतिसांवत्सरिकसमंत्रकश्राद्धसंकल्पः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

आमागंतांपितरामातराचामासोमोअमृतत्वायगम्यात् ॥ दातारोनोभिवर्धतांवेदाःसंततिरेवनः ॥ श्रद्धाच नोमाव्यगमत्बहुदेयंचनोस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचतारश्चनःसंतुमाचयाचिष्म कंचन ॥ प्रतिवचनं ॥ दातारोवोभिवर्धतांवेदाःसंततिरेववः ॥ श्रद्धाचवोमाव्यगमत्बहुदेयंचवोस्तु ॥ अन्नंचवोबहुभवेदतिथींश्चलभध्वं ॥ याचतारश्चवःसंतुमाचयाचिढ्वंकंचन ॥ स्वादुषंसदःपितरोवयोधाः कृच्छ्रेश्रितःशक्तीवंतोगभीराः ॥ चित्रसेनाइषुबलाअमृध्राःसतोवीराउरवोव्रातसाहाः ॥ ब्राह्मणासःपितरःसो म्यासःशिवेनोद्यावापृथिवीअनेहसा ॥ पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोअघशंसईशत ॥ इहैवस्तंमा वियौष्टंविश्वमायुर्व्यश्नुतं ॥ क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे ॥ आयुःप्रजांधनंविद्यांस्वर्गमोक्षंसुखानिच॥ प्रयच्छंतुतथाराज्यंपितानृणांपितामहाः ॥ एताःसत्याःआशिषःसंतु ॥ प्रतिसांवत्सरिकश्राद्धंगयाकृतश्रा द्धफलमस्तु ॥ पितॄणामक्षय्यातृप्तिरस्तु ॥ पितृप्रसादोस्तु ॥ अद्यमेसफलंजन्मभवत्पादाब्जवंदनात् ॥ अद्यमेवंशजाःसर्वेयातावोनुग्रहाद्दिवं ॥ यत्तुशाकादिदानेनक्लेशितायूयमीदृशाः ॥ तत्क्लेशजातंचित्तेतुविस्मृ त्यक्षंतुमर्हथ ॥ विस्मृत्यक्षमामः ॥ अद्यसूर्यपर्वसदृशीतिथिःव्यासवसिष्ठवामदेवसदृशाब्राह्मणाःमयायत्कृतं पितुःप्रतिसांवत्सरिकश्राद्धंतन्मध्येआसनभोजनमंत्रतंत्रद्रव्यक्षिणाःसर्वन्यूनंब्राह्मणवचनात्सर्वसंपूर्णमस्त्वि





णांएतासांचश्रेयोर्थंमोक्षार्थअविधवानवमीश्राद्धाख्यंकर्मकरिष्ये ॥ कुरुष्व ॥ ॥ इति अविधवान वमी श्राद्धसंकल्पः समाप्तः ॥ ॥ ७ ॥ ॥ ५० ॥ ॥ अथ सूर्यस्तुति प्रारंभः ॥



श्रीगणेशायनमः ॥ ॥ श्रीसूर्यनारायणायनमः ॥ ॥ जयाचारथाएकचीचक्रपाहीं ॥ नसेभूमिआका शआधारकांहीं ॥ असेसारथीपांगुळाजारथासी ॥ नमस्कारत्यासूर्यनारायणासी ॥ १ ॥ करींपद्ममाथां किरीटीझळाळी ॥ प्रभाकुंडलांचीशरीरानिराळी ॥ पहारश्मिजाचीत्रिलोकासिकैसी ॥ नमस्कार० ॥२॥ सहस्रद्वयेंदोनशेंआणिदोन ॥ क्रमीयोजनेंजोनिमिष्यार्द्धतेन ॥ मनाकल्पवेनाजयाच्यात्वरेसी ॥ नमस्का र० ॥ ३ ॥ विधीवेदकर्मासिआधारकर्ता ॥ स्वधाकारस्वाहादिसर्वत्रभोक्ता ॥ असेअन्नदातासमस्तांजना सीं ॥ नमस्कार० ॥४॥ युगेंमंत्रकल्पांतज्याचेनिहातीं ॥ हरिब्रह्मरुद्रादिज्यावोलिजेती ॥ क्षयांतींमहाका ळरूपाप्रकाशी ॥ नमस्कारत्या० ॥५॥ शशीतारगोऊनियांजोग्रहातें ॥ त्वरेंमेरुवेष्टोनियांपूर्वपंथें ॥ भ्रमे जोसदांलोकरक्षावयासी ॥ नमस्कार० ॥६॥ समस्तांसुरांमाजितूंजाणचर्या ॥ म्हणोनीचतूंश्रेष्ठत्यानामसू र्या ॥ दुजादेवतोदाखवीस्वप्रकाशीं ॥ नमस्कार० ॥ ७ ॥ महामोहअंधकारासिनाशी ॥ प्रभाशुद्धसत्वा कुअज्ञाननाशी ॥ अनाथाकृपाजोकरीनित्यऐशी ॥ नमस्कार० ॥८॥ कृपाज्यावरीहोयत्याभास्कराची॥ नपाहूंशकेशत्रुत्यालाविरंची ॥ उभ्याराहतीसिद्धिहोऊनिदासी ॥ नमस्कार० ॥९॥ फुलेंचंदनआणिपुष्पें करोनी ॥ पुजावेंबरेंएकनिष्ठाधरोनी ॥ मनींइच्छिलेंपाविजेत्यासुखासी ॥ नमस्कार० ॥ १० ॥ नमस्का

॥ ४७ ॥ ॥ अथ दौहित्र श्राद्ध निर्णय प्रारंभः

श्रीगणेशायनमः ॥ ॥ आश्विनशुक्लप्रतिपदिदौहित्रेणानुपनीतेनापिसपत्नीकमातामहस्यपार्वणंमातुले
सत्यपिअवश्यंकार्यं ॥ मातामहीसत्वेकेवलमातामहपार्वणं ॥ इदंजीवत्पितृकणैवकार्यं ॥ इदंसपिंडकम
पिंडकंवा अत्रपुरूरवार्द्रवसंज्ञकाविश्वेदेवाःधूरिलोचनाइतिकेचित् ॥ इयंप्रतिपदपराण्हव्यापिनीग्राह्येति
बहवः ॥ संगवव्यापिनीतिकेचित्॥केशवादिनामानितिथ्यादिसंकीर्त्यअद्यपूर्वोच्चरितएवं॰ श्रुतिस्मृतिपु॰
र्थंमातामहश्राद्धंकरिष्ये इतिसंकल्पः ॥ इति दौहित्रश्राद्धनिर्णयःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ ४८ ॥ ॥ अथ दर्शश्राद्धसंकल्प प्रारंभः ॥ ॥ आचम्य ॥ पवित्रंधृत्वा ॥ प्राणायामंकृत्वादेशका
लौसंकीर्त्यममआत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंपुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांविश्वेषांदेवा
नांअपसव्यंअस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांअमुकगोत्राणांसपत्नीकानांवसुरुद्रादित्यस्वरू
पाणांमातामहमातुःपितामहमातुःप्रपितामहानांअमुकशर्मणांअमुकगोत्राणांसपत्नीकानांवसुरुद्रादित्यस्व
रूपाणांएतेषांएतासांचश्रेयोर्थंमोक्षार्थंतृप्त्यर्थंदर्शश्राद्धंकरिष्ये॥ इति दर्शश्राद्धे संकल्पः समाप्तः ॥ छ ॥

॥ ४९ ॥ ॥ ॥ अथ अविधवानवमीश्राद्धसंकल्प प्रारंभः ॥ आचम्य ॥ पवित्रंधृत्वा ॥ प्राणानाय
म्यदेशकालौसंकीर्त्यममआत्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंपुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांवि
श्वेषांदेवानांअपसव्यंअस्मत्मातृपितामहीप्रपितामहीनांअमुकदानांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपा

रसाष्टांगबापास्वभावें ॥ करोनीतयाभास्कराळागिंध्यावें ॥ दरिद्रेंसहस्त्रादिजोक्लेशनाशी ॥ नम॰ ॥११॥
वरीसूर्यआदित्यमित्रादिभानू ॥ विवस्वानइत्यादिहीपादरेणू ॥ सदावांछितीपूज्यतेशंकरासी ॥ नमस्का
रत्यासूर्यनारायणासी ॥ १२ ॥ ॥ छ ॥ ॥ इतिश्री वामनकृता सूर्यस्तुतिः समाप्ता ॥ ॥ छ ॥

॥ ५१ ॥ ॥ अथ मारुति स्तोत्र प्रारंभः ॥

श्रीगणेशायनमः ॥ अथ श्रीमारुतिस्तोत्रप्रारंभः ॥ अद्यपूर्वोच्चारितवर्तमानएवंगुण॰ वि॰शु॰ तिथौममअ
भीप्सितकामनासिद्ध्यर्थंमारुतिस्तोत्रजपमहंकरिष्ये ॥ अथध्यानं ॥ मनोजवंमारुततुल्यवेगंजितेंद्रियंबु
द्धिमतांवरिष्ठं ॥ वातात्मजंवानरयूथमुख्यंश्रीरामदूतंशरणंप्रपद्ये ॥ १ ॥ मानसोपचारैःसंपूज्य ॥ भीमरू
पीमहारुद्रावज्रहनुमानमारुति ॥ वनारीअंजनीसुतारामदूताप्रभंजना ॥ १ ॥ महाबळीप्राणदातासकळां
उठवीबळें ॥ सौख्यकारीदुःखहारीदूतवैष्णवगायका ॥ २ ॥ दीननाथहरिरूपासुंदराजगदंतरा ॥ पाता
ळदेवताहंताभव्यसिंदूरलेपना ॥ ३ ॥ लोकनाथाजगन्नाथाप्राणनाथापुरातना ॥ पुण्यवंतापुण्यशीला
पावनापरितोषका ॥ ४ ॥ ध्वजाग्रींउचलीबाहूआवेशेंलोटलापुढें ॥ कालाग्नीकालरुद्राग्नीदेखतां
कांपतीभयें ॥ ५ ॥ ब्रह्मांडमाइलेंनेणाआंवाळेदंतपंगती ॥ नेत्राग्नीचालिल्याज्वाळाभ्रुकुटीत्राहाटिल्याब
ळें ॥ ६ ॥ पुच्छतेंमुरडिलेंमाथांकिरीटीकुंडलेंबरीं ॥ सुवर्णकटिकांसोटीघंटाकिंकिणिनागरा ॥ ७ ॥ ट
कारेपर्वताऐसानेटकासडपातळा ॥ चपळांगपाहतांमोठेंमहाविद्युल्लतेपरी ॥ ८ ॥ कोटिचाकोटिउड्डाणेंझें

पावेउत्तरेकडे ॥ मंदराद्रिसारिखाद्रोणक्रोधेंउत्पाटिलाबळें ॥ ९ ॥ आणिलामागुतींनेलागेलाआलामनोगतें ॥ मनासिटाकिलेंमागेंगतीसितुलनानसे ॥ १० ॥ अणूपासोनिब्रह्मांडाएवढाहोतजातसे ॥ तयासितुलनाकैंचीमेरुमांदारधाकुटे ॥ ११ ॥ ब्रांह्मडाभोंवतेवेढेआपुल्यापुच्छींघालित ॥ तयासिउपमाद्यावयाब्रह्मांडींपाहतांनसे ॥ १२ ॥ आरक्तपाहतांडोळांग्रासिलेंसूर्यमंडळा ॥ भूतप्रेतसमंधादीरोगव्याधिसमस्तहि ॥ १३ ॥ धनधान्यपशुवृद्धिपुत्रपौत्रसमस्तहि ॥ पावतीरूपविद्यादिस्तोत्रपाठेंकरूनियां ॥ १४ ॥ ऐसेंहेंस्तोत्रमाहात्म्यपठतीजपतीसदा ॥ मारुतीच्याप्रसादानेंभुक्तिमुक्तिसदावसे ॥ १५ ॥ नासतीतुटतीचिंताआनंदेंभीमदर्शनें ॥ हीधरापंधराश्लोकीलाभलीशोभलीबरी ॥ १६ ॥ दृढदेहींनसंदेहसंख्याचंद्रकलागुणें ॥ रामदासींअग्रगण्यकपिकूलासिमंडण ॥ रामरूपीअंतरात्मादर्शनेंदोषनासती ॥ १७ ॥ इतिश्रीरामदासकृतमारुतिस्तोत्रंसंपूर्णम् ॥ ॥ ५२ ॥

॥ अथ शिवमानसपूजा प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथशिवमानसपूजाप्रारंभः ॥ रत्नैःकल्पितमासनंहिमजलैःस्नानंचदिव्यांबरंनानारत्नविभूषितंमृगमदामोदांकितंचंदनं ॥ जातीचंपकबिल्वपत्ररचितंपुष्पंचधूपंतथादीपंदेवदयानिधेपशुपतेहृत्कल्पितंगृह्यताम् ॥ १ ॥ सौवर्णेमणिखंडरत्नरचितेपात्रेघृतंपायसंभक्ष्यंपंचविधंपयोदधियुतंरंभाफलंमानसं ॥ शाकानामयुतंजलंरुचिकरंकर्पूरखंडोज्वलंतांबूलंमनसामयाविरचितंभक्त्याप्रभोस्वीकुरु ॥ ॥ २ ॥ छत्रंचामरयोर्युगंव्यजनकंचादर्शनंनिर्मलंवीणाभेरिमृदंगकाहलकलागीतंचनृत्यंतथा ॥ साष्टांगंप्रणतिस्तुतिर्बहुविधाएतत्समस्तंमयासंकल्पेनसमर्पितंतवविभोपूजांगृहाणप्रभो ॥ ३ ॥ आत्मात्वंगिरिजापतिःसहचराःप्राणाःशरीरंगृहंपूजातेविषयोपभोगरचनानिद्रासमाधिस्थितिः ॥ संचारःपदयोःप्रदक्षिणविधिःस्तोत्राणिसर्वागिरोयद्यत्कर्मकरोमितत्तदखिलंशंभोतवाराधनम् ॥ ४ ॥ करचरणकृतंवाकायजंकर्मजंवाश्रवणनयनजंवामानसंवापराधम् ॥ विहितमविहितंवासर्वमेतत्क्षमस्वजयजयकरुणाब्धेश्रीमहादेवशंभो ॥ ५ ॥ ॥ इति शिवमानसपूजा समाप्ता ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥

॥ ५३ ॥ ॥ अथ ज्वरस्तोत्र प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ विद्राविते भूतगणेज्वरस्तुत्रिशिरास्त्रिपात् ॥ अभ्यधावततदाशार्हंदहन्निवदिशोदश ॥ अथ नारायणोदेवस्तंदृष्ट्वाव्यसृजज्ज्वरं ॥ १ ॥ माहेश्वरोवैष्णवश्चयुयुधातेज्वरावुभौ ॥ माहेश्वरःसमाक्रंदन्वैष्णवेनबलार्दितः ॥ २ ॥ अलब्ध्वाभयमन्यत्रभीतोमाहेश्वरोज्वरः ॥ शरणार्थीहृषीकेशंतुष्टावप्रयतांजलिः ॥ ३ ॥ ॥ ज्वरउवाच ॥ ॥ नमामित्वानंतशक्तिंपरेशंसर्वात्मानंकेवलंज्ञप्तिमात्रं ॥ विश्वोत्पत्तिस्थानसंरोधहेतुंयत्तद्ब्रह्मब्रह्मलिंगंप्रशांतं ॥ ४ ॥ कालोदैवंकर्मजीवः स्वभावोद्रव्यंक्षेत्रंप्राणआत्माविकारः ॥ तत्संघातोबीजरोहप्रवाहस्त्वन्मायैषात्वन्निषेधंप्रपद्ये ॥ ५ ॥ नानाभावैर्लीलयैवोपपन्नैर्देवान् साधून्लोकसेतून्बिभर्षि ॥ हंस्युन्मार्गान्हिंसयावर्तमानान्जन्मैतत्तेभारहारायभूमेः ॥ ६ ॥ तप्तोहंतेतेजसादुःसहेनशांतोग्रेणात्युल्बणेनज्वरेण ॥ तावत्तापोदेहिनांतेंघ्रिमूलंनोसेवेरन्यावदाशानुबद्धाः ॥ ७ ॥ श्रीभगवा

नुवाच ॥ ॥ त्रिशिरस्तेप्रसन्नोस्मिव्येतुतेमज्वराद्भयम् ॥ योनौस्मरातिसंवादंतस्यत्वन्नभवेद्भयम् ॥ ८ ॥
इत्युक्तोच्युतमानम्यगतोमाहेश्वरोज्वरः ॥ बाणस्तुरथमारूढःप्रागाद्योत्स्यन्जनार्दनम् ॥ ९ ॥ ॥ इतिश्री
मद्भागवतेमहापुराणेदशमस्कंधेमाहेश्वरज्वरकृतश्रीकृष्णस्तोत्रंसंपूर्णम् ॥ ॥ छ ॥ ॥ छ ॥

॥ ५४ ॥ ॥ अथ गणेशाष्टक प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ एकदंतंमहाकायंतप्तकांचनसंनिभं ॥ लंबोदरंविशालाक्षंवंदेहंगणनायकं ॥ १ ॥
मौंजीकृष्णाजिनधरंनागयज्ञोपवीतकं ॥ बालेंदुःसकलामौलिंवंदेहं० ॥ २ ॥ अंबिकाह्रुदयानंदंमातृभिः
परिवेष्टितं ॥ भक्तिप्रियंप्रदोन्मत्तंवंदेहं० ॥ ३ ॥ यक्षकिन्नरगंधर्वसिद्धविद्याधरैःसदा ॥ स्तूयमानंमहाबा
हुंवंदेहं० ॥ ४ ॥ मूषकोत्तममारुह्यदेवासुरमहाहवे ॥ ऊर्ध्वकायंमहावीर्यंवंदेहं० ॥ ५ ॥ सर्वसिद्धिकरं
देवंसर्वविघ्नविवर्जितं ॥ सर्वसिद्धिप्रदातारंवंदेहं० ॥ ६ ॥ गजवक्रंसुरश्रेष्ठंकर्णचामरभूषितं ॥ पाशांकु
शधरंदेवंवंदेहं० ॥ ७ ॥ चित्ररत्नविचित्रांगंचित्रमालाविभूषितं ॥ कामरूपधरंदेवं० ॥ ८ ॥ गणाष्टक
मिदंपुण्यंयःपठेत्सततंनरः ॥ सर्वान्कामानवाप्नोतिसर्वसिद्धिफलंलभेत् ॥ ९ ॥ ॥ छ ॥

॥ ५५ ॥ ॥ अथ दत्तात्रेयस्तोत्र प्रारंभः ॥

श्रीगणेशायनमः ॥ जटाधरंपांडुरंगंशूलहस्तंकृपानिधिम् ॥ सर्वरोगहरंदेवंदत्तात्रेयमहंभजे ॥ १ ॥ अ
स्यश्रीदत्तात्रेयस्तोत्रमंत्रस्य ॥ भगवान्नारदऋषिः ॥ अनुष्टुप्छंदः ॥ श्रीदत्तपरमात्मादेवता ॥ श्रीदत्तप्री



त्यर्थंजपोविनियोगः ॥ जगदुत्पत्तिकर्त्रेचस्थितिसंहारहेतवे ॥ भवपाशविमुक्तायदत्तात्रेयनमोस्तुते ॥ १ ॥
जराजन्मविनाशायदेहशुद्धिकरायच ॥ दिगंबरदयामूर्तेदत्तात्रेयनमोस्तुते ॥ २ ॥ कर्पूरकांतिदेहायब्रह्ममू
र्तिधरायच ॥ वेदशास्त्रपरिज्ञायदत्तात्रेयन० ॥ ३ ॥ ऱ्हस्वदीर्घकृशस्थूलनामगोत्रविवर्जित ॥ पंचभूतक
दीप्तायदत्तात्रेयन० ॥ ४ ॥ यज्ञभोक्त्रेचयज्ञाययज्ञरूपधरायच ॥ यज्ञप्रियायसिद्धायदत्तात्रेयन० ॥ ५ ॥
आदौब्रह्मामध्येविष्णुरंतेदेवःसदाशिवः ॥ मूर्त्तित्रयस्वरूपायदत्तात्रेयन० ॥ ६ ॥ भोगालयायभोगाययोग्य
योग्यायधारिणे ॥ जितेंद्रियजितज्ञायदत्तात्रेयन० ॥ ७ ॥ दिगंबरायदिव्यायदिव्यरूपधरायच ॥ सदोदि
तपरब्रह्मदत्तात्रेयनमोस्तुते ॥ ८ ॥ जंबुद्वीपेमहाक्षेत्रमातापुरनिवासिने ॥ जयमानसतांदेवदत्तात्रेय०॥९॥
भिक्षाटणंगृहेग्रामेपात्रंहेममयंकरे ॥ नानास्वादमयीभिक्षादत्तात्रेयन० ॥ १० ॥ ब्रह्मज्ञानमयीमुद्रावस्त्रमा
काशभूतले ॥ प्रज्ञानघनबोधायदत्तात्रेय० ॥ ११ ॥ अवधूतसदानंदपरब्रह्मस्वरूपिणे ॥ विदेहदेहरूपा
यदत्तात्रेय० ॥ १२ ॥ सत्यरूपसदाचारसत्यधर्मपरायण ॥ सत्याश्रयपरोक्षायदत्तात्रेय० ॥ १३ ॥ शूल
हस्तगदापाणिवनमालासुकंधर ॥ यज्ञसूत्रधरब्रह्मदत्तात्रेयन० ॥ १४॥ क्षराक्षरस्वरूपायपरात्परतरायच ॥
दत्तमुक्तिपरस्तोत्रदत्तात्रेय० ॥ १५ ॥ दत्तविद्यायलक्ष्मीशदत्तस्वात्मस्वरूपिणे ॥ गुणनिर्गुणरूपायदत्ता
त्रेय० ॥ १६ ॥ शत्रुनाशकरंस्तोत्रंज्ञानविज्ञानदायकम् ॥ सर्वपापंशमंयातिदत्तात्रेय० ॥ १७ ॥ इदंस्तो
त्रंमहद्दिव्यंदत्तप्रत्यक्षकारकम् ॥ दत्तात्रेयप्रसादाच्चनारदेनप्रकीर्तितम् ॥ १८ ॥ इतिश्रीनारदपुराणेनारद

विरचितंदत्तात्रेयस्तोत्रंसंपूर्णम् ॥ छ ॥ ५६ ॥ अथ शनिस्तोत्र प्रारंभः ॥ श्रीगणेशायनमः ॥ अस्यश्री
शनैश्चरस्तोत्रमंत्रस्य ॥ दशरथऋषिः ॥ शनैश्चरोदेवता ॥ त्रिष्टुप्छंदः ॥ शनैश्चरप्रीत्यर्थेजपे विनियो
गः ॥ दशरथउवाच ॥ कोणोंतकोरौद्रयमोथबभ्रुःकृष्णोशनिःपिंगलमंदसौरिः ॥ नित्यंस्मृतोयोहरतेचपी
डांतस्मैनमःश्रीरविनंदनाय ॥ १ ॥ सुरासुराःकिंपुरुषागणेंद्रागंधर्वविद्याधरपन्नगाश्च ॥ पीड्यंतिसर्वेविष
मस्थितेनतस्मैनमः श्रीरविनंदनाय ॥ २ ॥ नरानरेंद्राःपशवोमृगेंद्रावन्याश्चयेकीटपतंगभृंगाः ॥ पीड्यंति
सर्वेविषमस्थितेनतस्मै० ॥ ३ ॥ देशाश्चदुर्गाणिवनानियत्रसेनानिवेशाःपुरपत्तनानि ॥ पीड्यंतिसर्वेविषम
स्थितेनतस्मै० ॥ ४ ॥ तिलैर्यवैर्माषगुडान्नदानैर्लोहेननीलांबरदानतोवा ॥ प्रीणातिमंत्रैर्निजवासरेचतस्मै
नमःश्रीरविनंदनाय ॥ ५ ॥ प्रयागकूलेयमुनातटेचसरस्वतीपुण्यजलेगुहायां ॥ योयोगिनांध्यानगतोपिसू
क्ष्मस्तस्मैनमः श्रीरविनंदनाय ॥ ६ ॥ अन्यप्रदेशात्स्वगृहंप्रविष्टस्त्वदीयवारेसनरःसुखीस्यात् ॥ गृहाद्गतो
योनपुनःप्रयातिस्तस्मै० ॥ ७ ॥ स्रष्टास्वयंभूर्भुवनत्रयस्यत्राताहरीशोहरतेपिनाकी ॥ एकस्त्रिधाऋग्यजुः
साममूर्तिस्तस्मैनमःश्रीरविनंदनाय ॥ ८ ॥ शन्यष्टकंयःप्रयतःप्रभातेनित्यंसपुत्रैःपशुबांधवैश्च ॥ पठेत्तुसौ
ख्यंभुविभोगयुक्तंप्राप्नोतिनिर्वाणपदंपरंते ॥ ९ ॥ कोणस्थःपिंगलोबभ्रुःकृष्णोरौद्रोंतकोयमः ॥ सौरिःशनै
श्चरोमंदःपिप्पलादेनसंस्तुतः ॥ १० ॥ एतानिदशनामानिप्रातरुत्थाययःपठेत् ॥ शनैश्चरकृतापीडानक
दाचिद्भविष्यति ॥ ११ ॥ इतिश्रीदशरथप्रोक्तंशनैश्चरस्तोत्रंसंपूर्णम् ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥

॥ ५७ ॥ ॥ गीतामहात्म्यंलिख्यते ॥ धरोवाच ॥ भगवन्परमेशानभक्तिरव्यभिचारिणी ॥ प्रारब्धं
भुज्यमानस्यकथंभवतिहेप्रभो ॥ १ ॥ विष्णुरुवाच ॥ प्रारब्धंभुज्यमानोहिगीताभ्यासरतःसदा ॥ समुक्तः
समुखीलोकेकर्मणानोपलिप्यते ॥ २ ॥ महापापादिपापानिगीताध्यानंकरोतिचेत् ॥ क्वचित्स्पर्शंनकुर्वं
तिनलिनीदलमंभसा ॥ ३ ॥ गीतायाःपुस्तकंयत्रयत्रपाठःप्रवर्तते ॥ तत्रसर्वाणितीर्थानिप्रयागादीनितत्रवै
॥ ४ ॥ सर्वेदेवाश्चऋषयोयोगिनःपन्नगाश्चये ॥ गोपालागोपिकावापिनारदोद्धवपार्षदैः ॥ ५ ॥ सहायो
जायतेशीघ्रंयत्रगीताप्रवर्तते ॥ यत्रगीताविचारंचपठनंपाठनंश्रुतं ॥ तत्राहंनिश्चितंपृथ्वीनिवसामिसदैवहि
॥ ६ ॥ गीताश्रयेहंतिष्ठामिगीतामेचोत्तमंगृहं ॥ गीताज्ञानमुपाश्रित्यत्रींल्लोकान्पालयाम्यहं ॥ ७ ॥ गी
तामेपरमाविद्याब्रह्मरूपानसंशयः ॥ अर्धमात्राक्षरानित्यास्वनिर्वाच्यपदात्मिका ॥ ८ ॥ चिदानंदघनकृष्णे
नोक्तास्वमुखतोर्जुनं ॥ वेदत्रयीपरानंदातत्वार्थज्ञानमंजसा ॥ ९ ॥ योष्टादशजपेन्नित्यंनरोनिश्चलमानसः॥
ज्ञानसिद्धिंसलभतेततोयातिपरंपदं ॥ १० ॥ पाठेऽसमर्थःसंपूर्णेतदर्धंपाठमाचरेत् ॥ तदागोदानजंपुण्यं
लभतेनात्रसंशयः ॥ ११ ॥ त्रिभागंपठमानस्तुगंगास्नानफलंलभेत् ॥ षडंशंजपमानस्तुसोमयागफलं
लभेत् ॥ १२ ॥ एकाध्यायंतुयोनित्यंपठतेभक्तिसंयुतः ॥ रुद्रलोकमवाप्नोतिगणोभूत्वावसेच्चिरं ॥ १३ ॥
अध्यायंश्लोकपादंवानित्यंयःपठतेनरः ॥ सयातिनरतांयावन्मन्वंतरंवसुंधरे ॥ १४ ॥ गीतायाःश्लोकदशकं
सप्तपंचचतुष्टयं ॥ द्वावेकंचतदर्धंवाश्लोकानांयःपठेन्नरः ॥ १५ ॥ चंद्रलोकमवाप्नोतिवर्षाणामयुतंध्रुवं ॥

गीतापाठसमायुक्तोमृतोमानुषतांव्रजेत् ॥ १६ ॥ गीताभ्यासंपुनःकृत्वालभतेमुक्तिमुत्तमां ॥ गीतेत्युच्चारसंयुक्तोम्रियमाणोगतिंलभेत् ॥ १७ ॥ गीतार्थश्रवणासक्तोमहापापयुतोपिवा ॥ वैकुंठंसमवाप्नोतिविष्णुनासहमोदते ॥१८॥ गीतार्थंध्यायतेनित्यंकृत्वाकर्माणिभूरिशः ॥ जीवन्मुक्तःसविज्ञेयोदेहांतेपरमंपदं ॥१९॥ गीतामाश्रित्यबहवोभूभुजोजनकादयः ॥ निर्धूतकल्पषालोकेगीतायांतिपरंपदं ॥२०॥ गीतायाःपठनंकृत्वामहात्म्यंनैवयःपठेत् ॥ वृथापाठोभवेत्तस्यश्रमएवउदाहृतः ॥२१॥ इतिश्रीवराहपुराणेगीतामाहात्म्यंसंपूर्णं॥

॥ ५८ ॥ ॥ चतुश्लोकीभागवत प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ श्रीभगवानुवाच ॥ ॥ ज्ञानंपरमगुह्यंमेयद्विज्ञानसमन्वितं ॥ सरहस्यंतदंगंचगृहाणगदितंमया ॥१॥ यावानहंयथाभावोयद्रूपगुणकर्मकः ॥ तथैवतत्वविज्ञानमस्तुतेमदनुग्रहात् ॥२॥ अहमेवासमेवाग्रेनान्यद्यत्सदसत्परं ॥ पश्चादहंयदेतच्चयोवशिष्येतसोस्म्यहं ॥ ३ ॥ ऋतेर्थंयत्प्रतीयेतनप्रतीयेतचात्मनि ॥ तद्विद्यादात्मनोमायांयथाभासोयथातमः ॥ ४ ॥ यथामहांतिभूतानिभूतेषूच्चावचेष्वनु ॥ प्रविष्टान्यप्रविष्टानितथातेषुनतेष्वहं ॥ ५ ॥ एतावदेवजिज्ञास्यंतत्वजिज्ञासुनात्मनः ॥ अन्वयव्यतिरेकाभ्यांयत्स्यात्सर्वत्रसर्वदा ॥ ६ ॥ एतन्मतंसमातिष्ठपरमेणसमाधिना ॥ भवान्कल्पविकल्पेषुनहिमुह्यतिकर्हिचित् ॥ ७ ॥ इतिश्रीभागवतेमहापुराणेष्टादशसाहस्र्यांसंहितायांवैय्यासिक्यांद्वितीयस्कंधेभगवद्ब्रह्मसंवादेचतुःश्लोकीभागवतंसमाप्तम् ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥



॥ ५९ ॥ ॥ अथ शिवपार्थिवपूजा प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथलिंगार्चनचंद्रिकायांशिवपार्थिवपूजाविधिः तत्रादौकृतावश्यककियःस्नानादिनाशुचिर्भूत्वाधृतत्रिपुंड्ररुद्राक्षमालः प्रयतः शुक्लवस्त्रंपरिधायउदीचींदिशंगत्वाशुचौदेशेपाषाणकीटकेशास्थिवालुकादिदोषरहितांमृदंदृष्ट्वातत्रगंधाद्युपचारैः भूमिंसंपूज्यनत्वाईशानकोणगतांमृदंशस्त्रेणोत्कीर्यअष्टांगुलमृदमपाकृष्य भूमिंप्रार्थयेत् उद्धृतासिवराहेणकृष्णेनशतबाहुना॥मृत्तिकेत्वांचगृह्णामिप्रजयाचधनेनच इतिमंत्रेणशुद्धांमृदमादायअंत्यजादिस्पर्शरहितोमौनीगृहमागत्य शुचिस्थलेतांस्थापयेत् आचम्य चैलाजिनकुशोत्तरेआसनेउदङ्मुखउपविशेत् आसनविधिंकृत्वा गौरसर्षपान् चतुर्दिक्षुविकिरेत् श्रीमन्महागणाधिपतयेनमःलक्ष्मीनारायणाभ्यां० उमामहेश्वराभ्यां० शचीपुरंदराभ्यां० इष्टदेवताभ्यो० कुलदेवताभ्यो ग्रामदेवताभ्यो० स्थानदेवताभ्यो० वास्तुदेवताभ्यो० आदित्यादिनवग्रहदेवताभ्यो० सर्वेभ्योदेवेभ्यो० सर्वेभ्योब्राह्मणेभ्यो० अविघ्नमस्तु सुमुखश्चैकदंतश्चकपिलोगजकर्णकः लंबोदरश्चविकटोविघ्ननाशोगणाधिपः धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगजाननः द्वादशैतानिनामानियःपठेच्छृणुयादपि विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा संग्रामेसंकटेचैवविघ्नस्तस्यनजायते॥शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजं प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते विनायकंगुरुंभानुंब्रह्मविष्णुमहेश्वरान् सरस्वतींप्रणम्यादौसर्वकार्यार्थसिद्धये अभीप्सितार्थसिध्यर्थंपूजितोयःसुरासुरैः सर्ववि

ग्रहरस्तस्मैगणाधिपतयेनमः सर्वेष्वारंभकार्येषुत्रयस्त्रिभुवनेश्वराः देवादिशंतुनःसिद्धिंब्रह्मेशानजनार्दनाः तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि लाभस्तेषांजय स्तेषांकुतस्तेषांपराजयः येषामिंदीवरश्यामोहृदयस्थोजनार्दनः अद्यशुभाभ्यांशुभेशोभनेमुहूर्तेश्रीश्वेतवारा हकल्पेवैवस्वतमन्वंतरेअष्टाविंशेयुगचतुष्केकलियुगेप्रथमचरणेजंबुद्वीपेभरतवर्षेभरतखंडेबौद्धावतारेदंड कारण्येदेशेशालीवाहनशकेसंध्यावर्तमानेगोदावर्याःदक्षिणेतीरेअमुकसंवत्सरे अयनमासपक्षतिथिवारनक्ष त्रयोगकरणेअमुकराशिस्थितचंद्रसूर्यगुरुषुशेषेषुग्रहेषुयथायथंराशिस्थानस्थितेषुसत्सुशुभनामयोगेएवंगुण विशिष्टायांपुण्यतिथौममसकलमनोरथसिद्ध्यर्थंदुरितक्षयद्वाराश्रीभवानीशंकरप्रीत्यर्थं शिवपार्थिवपूजनं क रिष्ये त०क० घं० पू० क० कलशोदकेनपूजासंभारानात्मानंचप्रोक्ष्यहरायनमःमृच्चूर्णंकुर्यात् वामदेवा य० जलसेचनं महेश्वराय० संघट्टनं तत्पुरुषाय० पिंडीकरणं समस्ताघनाशनेतिअभ्यपूतेवामपाणौवेदि कायांताम्रपात्रेबाबिल्वपत्रंनिधायतदुपरिसाक्षतपुष्पंलिंगंसंस्थाप्यप्राणप्रतिष्ठांकुर्यात् अस्यश्रीप्राणप्रतिष्ठा मंत्रस्यब्रह्मविष्णुरुद्राऋषयःप्राणाख्यादेवताः पार्थिवलिंगप्राणप्रतिष्ठापनेविनियोगःशिवस्यप्राणाःवाक्चक्षु श्रोत्रजिह्वाघ्राणत्वक्पाणिपादपायूपस्थानिसर्वेंद्रियाणिइहागत्यसुखंचिरंतिष्ठंतु शिवेहागच्छेहतिष्ठमपूजां गृहाण स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं तावत्त्वंप्रीतिभावेनलिंगेस्मिन्सन्निधोभव इतिसंप्रार्थ्य ओंन मःशिवायेति मूलमंत्रेणषडंगंन्यासंकुर्यात् ध्यानं दक्षोत्संगनिषण्णकुंजरमुखंप्रेम्णाकरेणस्पृशन्वामांकेस्थि

वत्सुमांकललितंस्कंदंकरेणस्पृशन् इष्टाभीतिमनोहरंकरयुगंबिभ्रत्प्रसन्नाननोभूयान्नःशरदिंदुसुंदरतनुःश्रेय स्करःशंकरः आत्मानंरुद्ररूपंध्यात्वा ध्यानंसमर्पयामि शूलपाणयेनमः आवाहनं० पिनाकधृषे० आसनं० भ वोद्भवाय० अर्घ्यं० वामदेवाय० आचमनीयं० ज्येष्ठाय० मधुपर्कस्ना० ईश्वराय० पयस्ना० शिवाय० दधिस्ना० गिरीशा० घृतस्ना० उमाधवाय० मधुस्ना० शिवाय० शर्करास्ना० महेश्वराय० अभिषेकं० श्रेष्ठाय० वस्त्रं० रुद्राय० उपवीतं० कालाय० चंदनं० कलविकरणाय० अक्षता० बलविकरणाय० पुष्पं० बि ल्वं० बलाय० धूपं० बलप्रमथना० दीपं० सर्वभूतदमनाय० नैवेद्यं० मनोन्मनाय० आचमनीयं० म ध्येपानी० उत्तरापोशनं० शंभवे० तांबूलदक्षि० शंकराय० फलं० प्रदक्षिणां० उत्तरनीराजनं० भवा नीशंकराय० मंत्रपुष्पांजलिं० शंभवे० नमस्कारान्० यस्यस्मृत्येति० अनेनकृतपार्थिवलिंगपूजनेनश्री भवानीशंकरःप्रीयताम् इति शिवपार्थिवपूजा समाप्ता श्रीसांबसदाशिवार्पणमस्तु शुभंभवतु ॥ ७ ॥

॥ ६० ॥ ॥ अथ नर्मदाष्टक प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ सबिंदुसिंधुसुस्खलत्तरंगभंगरंजितंद्विषत्सुपापजाततजातकारिवारिसंयुतम् ॥ कृतां तदूतकालभूतभीतिहारिशर्मदेत्वदीयपादपकजंनमामिदेविनर्मदे ॥ १ ॥ त्वदंबुलीनदीनमीनदिव्यसंप्र दायकंकलौमलौघभारहारिसर्वतीर्थनायकम् ॥ सुमच्छकच्छनक्रचक्रचक्रवाकशर्मदेत्वदीयपादपंकजंन मामिदेविनर्मदे ॥ २ ॥ महागभीरनीरपूरपापधूतभूतलंध्वनत्समस्तपातकारिदारितापदाचलम् ॥ जग

छ्येमहाभयेमृकंडसूनुहर्म्यदेत्वदीय० ॥ ३ ॥ गतंतदैवमेभयंत्वदंबुवीक्षितंयदामृकंडसूनुशौनकासुरारिसेविसर्वदा ॥ पुनर्भवाब्धिजन्मजंभवाब्धिदुःखवर्मदेत्वदीय० ॥ ४ ॥ अलक्षलक्षकिन्नरानरासुरारिपूजितंसुलक्षनीरतीरधीरपक्षिलक्षकूजितम् ॥ वसिष्ठशिष्टपिप्पलादिकर्दमादिशर्मदेत्वदीय० ॥ ५ ॥ सनत्कुमारनाचिकेतकश्यपात्रिवट्पदैर्धृतंस्वकीयमानसेषुनारदादिषट्पदैः ॥ रवींदुरंतिदेवदेवराजकर्मशर्मदेत्वदीय० ॥ ६ ॥ लक्षलक्षलक्षपापलक्षसारसायुधंततस्त्वजीवजंतुतंतुभुक्तिमुक्तिदायकम् ॥ विरिंचिविष्णुशंकरस्वकीयधामवर्मदेत्वदीय० ॥ ७ ॥ अहोमृतंस्वनंश्रुतंमहेशकेशजाततटेकिरातसूतवाडवेषुपंडितेशठेनटे ॥ दुरंतपापतापहारिसर्वजंतुशर्मदेत्वदीय० ॥ ८ ॥ इदंतुनर्मदाष्टकंत्रिकालमेवयेसदापठंतितेनिरंतरंनयांतिदुर्गतिंकदा ॥ सुलभ्यदेहदुर्लभंमहेशधामगौरवंपुनर्भवानरानवैविलोकयंतिरौरवम् ॥ ९ ॥ ॥ इतिश्रीमच्छंकराचार्यविरचितंनर्मदाष्टकंसंपूर्णम् ॥ ॥ छ ॥ ॥ छ ॥

॥ ६१ ॥ ॥ अथ रामरक्षास्तोत्र प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अस्यश्रीरामरक्षास्तोत्रमंत्रस्यबुधकौशिकऋषिः ॥ श्रीरामचंद्रोदेवता ॥ अनुष्टुप्छंदः ॥ सीताशक्तिः ॥ श्रीमद्धनुमान्कीलकं ॥ श्रीरामचंद्रप्रीत्यर्थेरामरक्षास्तोत्रमंत्रजपेविनियोगः ॥ अथध्यानं ॥ ध्यायेदाजानुबाहुंधृतशरधनुषंबद्धपद्मासनस्थंपीतवासोवसानंनवकमलदलस्पर्धिनेत्रंप्रसन्नं ॥ वामांकारूढसीतामुखकमलमिलल्लोचनंनीरदाभंनानालंकारदीप्तंदधतमुरुजटामंडलंरामचंद्रं ॥ चरितंरघुनाथस्यशतकोटिप्रविस्तरं ॥ एकैकमक्षरंपुंसांमहापातकनाशनं ॥ १ ॥ ध्यात्वानीलोत्पलश्यामंरामंराजीवलोचनं ॥ जानकीलक्ष्मणोपेतंजटामुकुटमंडितम् ॥ २ ॥ सासितूणधनुर्बाणपाणिंनक्तंचरांतकं ॥ स्वलीलयाजगत्रातुमाविर्भूतमजंविभुं ॥ ३ ॥ रामरक्षांपठेत्प्राज्ञःपापघ्नींसर्वकामदां ॥ शिरोमेराघवःपातुभालंदशरथात्मजः ॥ ४ ॥ कौसल्येयोदृशौपातुविश्वामित्रप्रियःश्रुती ॥ घ्राणंपातुमखत्रातामुखंसौमित्रिवत्सलः ॥५॥ जिव्हांविद्यानिधिःपातुकंठंभरतवंदितः ॥ स्कंधौदिव्यायुधःपातुभुजौभग्नेशकार्मुकः ॥६॥ करौसीतापतिःपातुहृदयंजामदग्न्यजित् ॥ मध्यंपातुखरध्वंसीनाभिंजांबवदाश्रयः ॥ ७ ॥ सुग्रीवेशःकटीपातुसक्थिनीहनुमत्प्रभुः ॥ ऊरूरघूत्तमःपातुरक्षःकुलविनाशकृत् ॥ ८ ॥ जानुनीसेतुकृत्पातुजंघेदशमुखांतकः ॥ पादौविभीषणश्रीदःपातुरामोऽखिलंवपुः ॥ ९ ॥ एतांरामबलोपेतांरक्षांयःसुकृतीपठेत् ॥ सचिरायुःसुखीपुत्रीविजयीविनयीभवेत् ॥ १० ॥ पातालभूतलव्योमचारिणश्छद्मचारिणः ॥ नद्रष्टुमपिशक्तास्तेरक्षितंरामनामभिः ॥ ११ ॥ रामेतिरामभद्रेतिरामचंद्रेतिवास्मरन् ॥ नरोनलिप्यतेपापैर्भुक्तिंमुक्तिंचविंदति ॥ १२ ॥ जगज्जैत्रैकमंत्रेणरामनाम्नाऽभिरक्षितम् ॥ यःकंठेधारयेत्तस्यकरस्थाःसर्वसिद्धयः ॥ १३ ॥ वज्रपंजरनामेदंयोरामकवचंस्मरेत् ॥ अव्याहताज्ञःसर्वत्रलभतेजयमंगलम् ॥ १४ ॥ आदिष्टवान्यथास्वप्नेरामरक्षामिमांहरः ॥ तथालिखितवान्प्रातःप्रबुद्धोबुधकौशिकः ॥ १५ ॥ आरामःकल्पवृक्षाणांविरामःसकलापदाम् ॥ अभिरामस्त्रिलोकानांरामःश्रीमान्सनःप्रभुः ॥ १६ ॥ तरुणौरूपसंपन्नौ

सुकुमारौमहाबलौ ॥ पुंडरीकविशालाक्षौचीरकृष्णाजिनांबरौ ॥ १७ ॥ फलमूलाशिनौदांतौतापसौब्रह्म
चारिणौ ॥ पुत्रौदशरथस्यैतौभ्रातरौरामलक्ष्मणौ ॥ १८ ॥ शरण्यौसर्वसत्वानांश्रेष्ठौसर्वधनुष्मताम् ॥
रक्षःकुलनिहंतारौत्रायेतांनोरघूत्तमौ ॥ १९ ॥ आत्तसज्जधनुषाविषुस्पृशावक्षयाशुगनिषंगसंगिनौ ॥ रक्ष
णायममरामलक्ष्मणावग्रतःपथिसदैवगच्छताम् ॥ २० ॥ सन्नद्धःकवचीखड्गीचापबाणधरोयुवा ॥ ग
च्छन्मनोरथोऽस्माकंरामःपातुसलक्ष्मणः ॥ २१ ॥ रामोदाशरथिःशूरोलक्ष्मणानुचरोबली ॥ काकुत्स्थः
पुरुषःपूर्णःकौसल्येयोरघूत्तमः ॥ २२ ॥ वेदांतवेद्योयज्ञेशःपुराणपुरुषोत्तमः ॥ जानकीवल्लभःश्रीमानप्र
मेयपराक्रमः ॥ २३ ॥ इत्येतानिजपेन्नित्यंमद्भक्तःश्रद्धयाऽन्वितः ॥ अश्वमेधाधिकंपुण्यंसंप्राप्नोतिनसं
शयः ॥ २४ ॥ रामंदूर्वादलश्यामंपद्माक्षंपीतवाससम् ॥ स्तुवंतिनामभिर्दिव्यैर्नतेसंसारिणोनराः ॥२५॥
रामंलक्ष्मणपूर्वजंरघुवरंसीतापतिंसुंदरंकाकुत्स्थंकरुणार्णवंगुणनिधिंविप्रप्रियंधार्मिकं ॥ राजेंद्रंसत्यसंधंदश
रथतनयंश्यामलंशांतिमूर्तिंवंदेलोकाभिरामंरघुकुलतिलकंराघवंरावणारिम् ॥ २६ ॥ रामायरामभद्रायराम
चंद्रायवेधसे ॥ रघुनाथायनाथायसीतायाःपतयेनमः ॥ २७ ॥ श्रीरामरामरघुनंदनरामराम श्रीरामराम
भरताग्रजरामराम ॥ श्रीरामरामरणकर्कशरामराम श्रीरामरामशरणंभवरामराम ॥ २८ ॥ श्रीरामचंद्रच
रणौमनसास्मरामि श्रीरामचंद्रचरणौवचसागृणामि श्रीरामचंद्रचरणौशिरसानमामि श्रीरामचंद्रचरणौ
शरणंप्रपद्ये ॥ २९ ॥ मातारामोमत्पितारामचंद्रःस्वामीरामोमत्सखारामचंद्रः ॥ सर्वस्वंमेरामचंद्रो



दयालुर्नान्यंजानेनैवजानेनजाने ॥ ३० ॥ दक्षिणेलक्ष्मणोयस्यवामेतुजनकात्मजा ॥ पुरतोमारुतिर्यस्यतं
वंदेरघुनंदनं ॥ ३१ ॥ लोकाभिरामंरणरंगधीरंराजीवनेत्रंरघुवंशनाथम् ॥ कारुण्यरूपंकरुणाकरंतंश्रीराम
चंद्रंशरणंप्रपद्ये ॥ ३२ ॥ मनोजवंमारुततुल्यवेगंजितेंद्रियंबुद्धिमतांवरिष्ठं ॥ वातात्मजंवानरयूथमुख्यं
श्रीरामदूतंशरणंप्रपद्ये ॥ ३३ ॥ कूजंतंरामरामेतिमधुरंमधुराक्षरम् ॥ आरुह्यकविताशाखांवंदेवाल्मिकि
कोकिलम् ॥ ३४ ॥ आपदामपहर्तारंदातारंसर्वसंपदाम् ॥ लोकाभिरामंश्रीरामंभूयोभूयोनमाम्यहम् ॥
॥ ३५ ॥ भर्जनंभवबीजानामार्जनंसुखसंपदां ॥ तर्जनंयमदूतानांरामरामेतिगर्जनम् ॥ ३६ ॥ रामोरा
जमणिःसदाविजयतेरामंरमेशंभजे रामेणाभिहतानिशाचरचमूरामायतस्मैनमः ॥ रामान्नास्तिपरायणंपर
तरंरामस्यदासोऽस्म्यहंरामेचित्तलयःसदाभवतुमेभोराममामुद्धर ॥ ३७ ॥ रामरामेतिरामेतिरमेरामेमनोर
मे ॥ सहस्रनामतत्तुल्यंरामनामवरानने ॥ ३८ ॥ ॥ इतिश्रीबुधकौशिकविरचितंश्रीरामरक्षास्तोत्रंसं
पूर्णम् ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥ ॥ श्रीरस्तु ॥ ॥ इति रामरक्षास्तोत्रं समाप्तम् ॥ ॥७॥

॥ ६२ ॥ ॥ अथ महिम्न प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ पुष्पदंतउवाच ॥ महिम्नःपारंतेपरमविदुषोयद्यसदृशीस्तुतिर्ब्रह्मादीनामपितदव
सन्नास्त्वयिगिरः ॥ अथावाच्यःसर्वःस्वमतिपरिणामावधिगृणन्ममाप्येषस्तोत्रेहरनिरपवादःपरिकरः ॥ १ ॥
अतीतःपंथानंतवचमहिमावाङ्मनसयोरतद्व्यावृत्त्यायंचकितमभिधत्तेश्रुतिरपि ॥ सकस्यस्तोतव्यःकतिवि

धगुणः कस्य विषयः पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥ २ ॥ मधुस्फीता वाचः परममममृतं निर्मितवतस्तव ब्रह्मन्किं वागपि सुरगुरोर्विस्मयपदं ॥ मम त्वेतां वाणीं गुणकथनपुण्येन भवतः पुनामीत्यर्थेऽस्मिन्पुरमथन बुद्धिर्व्यवसिता ॥ ३ ॥ तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु ॥ अभव्यानामस्मिन्वरद रमणीयामरमणीं विहंतुं व्याक्रोशीं विदधत इहैके जडधियः ॥ ४ ॥ किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं किमाधारो धाता सृजति किमुपादान इति च ॥ अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥ ५ ॥ अजन्मानो लोकाः किमवयववंतोऽपि जगतामधिष्ठातारं किं भवविधिरनादृत्य भवति ॥ अनीशो वा कुर्याद्भुवनजनने कः परिकरो यतो मंदास्त्वां प्रत्यमरवर संशेरत इमे ॥ ६ ॥ त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ॥ रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ७ ॥ महोक्षः खट्वांगं परशुरजिनं भस्म फणिनः कपालं चेतीयत्तव वरद तंत्रोपकरणं ॥ सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥ ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ॥ समस्तेऽप्येतस्मिन्पुरमथन तैर्विस्मित इव स्तुवं जिन्हेमि त्वां न खलु ननु धृष्टा मुखरता ॥ ९ ॥ तवैश्वर्यं यत्नाद्यदुपरि विरिंचो हरिरधः परिच्छेत्तुं यातावनलमनलस्कंधवपुषः ॥ ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥ १० ॥ अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं दशास्यो यद्बाहूनभृत

रणकंडूपरवशान् ॥ शिरःपद्मश्रेणीरचितचरणांभोरुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदं ॥ ॥ ११ ॥ अमुष्य त्वत्सेवासमधिगतसारं भुजवनं बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः ॥ अलभ्या पातालेऽप्यलसचालितांगुष्ठशिरसि प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥ १२ ॥ यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सतीमधश्चक्रे बाणः परिजनविधेयत्रिभुवनः ॥ न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयोर्न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥ १३ ॥ अकांडब्रह्मांडक्षयचकितदेवासुरकृपाविधेयस्यासीद्यस्त्रिनयन विषं संहृतवतः ॥ स कल्माषः कंठे तव न कुरुते न श्रियमहो विकारोऽपि श्लाघ्यो भुवनभयभंगव्यसनिनः ॥ १४ ॥ असिद्धार्था नैव क्वचिदपि सदेवासुरनरे निवर्तंते नित्यं जगति जयिनो यस्य विशिखाः ॥ स पश्यन्नीश त्वामितरसुरसाधारणमभूत्स्मरः स्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः ॥ १५ ॥ मही पादाघाताद्व्रजति सहसा संशयपदं पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणं ॥ मुहुर्द्यौर्दौःस्थ्यं यात्यनिभृतजटाताडिततटा जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥ वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ॥ जगद्द्वीपाकारं जलधिवलयं तेन कृतमित्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥ १७ ॥ रथः क्षोणी यंता शतधृतिरगेंद्रो धनुरथो रथांगे चंद्रार्कौ रथचरणपाणिः शर इति ॥ दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडंबरविधिर्विधेयैः क्रीडंत्यो न खलु परतंत्राः प्रभुधियः ॥ १८ ॥ हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलं ॥ गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगतां ॥ १९ ॥ क्रतौ सु

तं ॥ ३८ ॥ श्रीपुष्पदंतमुखपंकजनिर्मितेनस्तोत्रेणकिल्बिषहरेणहरप्रियेण ॥ कंठस्थितेनपठितेनसमा
हितेनसुप्रीणितोभवतिभूतपतिर्महेशः ॥ ३९ ॥ इत्येषावाङ्मयीपूजाश्रीमच्छंकरपादयोः ॥ अर्पितातेनमेदेवःप्रीयतांमेसदाशिवः ॥४०॥ इतिश्रीपुष्पदंतविरचितंश्रीशिवमहिम्नाख्यस्तोत्रंसंपूर्णम् ॥ ॥ छ ॥

॥६३॥ ॥अथसोपानपंचकप्रारंभः॥ ॥श्रीगणेशायनमः॥ ॥वेदोनित्यमधीयतांतदुदितंकर्मस्वनुष्ठीयतांतेनेशस्यविधीयतामपचितिःकाम्येमतिस्त्यज्यतां॥पापौघःपरिधूयतांभवसुखेदोषोनुसंधीयतात्मेच्छाव्यवसीयतांनिजगृहात्तूर्णंविनिर्गम्यतां ॥१॥ संगःसत्सुविधीयतांभगवतोभक्तिर्दृढाधीयतांशांत्यादिःपरिचीयतांदृढतरंकर्माशुसन्यस्यतां ॥ सद्विद्वानुपसर्पतामनुदिनंतत्पादुकेसेव्यतांब्रह्मैकाक्षरमर्थ्यतांश्रुतिशिरोवाक्यंसमाकर्ण्यतां ॥ २ ॥ वाक्यार्थश्चविचार्यतामुपनिषत्पक्षःसमाश्रीयतांदुस्तर्कात्सुविरम्यतांश्रुतिसमस्तर्कोनुसंधीयतां ॥ ब्रह्मस्मीतिविभाव्यतामहरहर्गर्वःपरित्यज्यतांदेहेहंमतिरुझ्झतांबुधजनैर्वादःसमुत्सृज्यतां ॥ ३ ॥ क्षुद्व्याधिश्चचिकित्स्यतांप्रतिदिनंभिक्षौषधंभुज्यतांस्वाद्वन्नंनतुयाच्यतांविधिवशात्प्राप्तेनसंतुष्यतां ॥ औदासीन्यमभीप्स्यतांजनकृपानैष्ठुर्यमुत्सृज्यतांशीतोष्णादिविसह्यतांनतुवृथावाक्यंसमुच्चार्यताम् ॥ ४ ॥ एकांतेसुखमास्यतांपरतरेचेतःसमाधीयतांपूर्णात्मासुसमीक्ष्यतांजगदिदंसंबाधितंदृश्यतां ॥ प्राक्कर्मप्रविलाप्यतांचितिबलानाप्युत्तरंश्लिष्यतांप्रारब्धंत्विहभुज्यतामथपरब्रह्मात्मनास्थीयतां ॥ ५ ॥ ॥ इतिश्रीशंकराचार्यविरचितंसोपानपंचकंसंपूर्णम् ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



## ॥ ६४ ॥ ॥ अथ भूतशुद्धि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ ॐ धर्मकंदसमुद्भूतंज्ञाननालंसुशोभितं ॥ ऐश्वर्याष्टदलोपेतंपरंवैराग्यकर्णिकं ॥ अधोमुखंतुहृत्पद्मंप्रणवेनोर्ध्वमुन्नयेत् ॥ ॐ प्रणवेनविकसितंकृत्वा ॥ तत्रत्यंजीवात्मानंहंसमंत्रेणांकुशमुद्रयासुषुम्नानाडीमार्गेणब्रह्मरंध्रंनीत्वा ॥ तत्रत्यसहस्रदलपद्मकर्णिकांतरगतेनपरमात्मनासहैक्यभावमापादयेत् ॥ ब्रह्महत्याशिरस्कंचस्वर्णस्तेयीभुजद्वयं ॥ सुरापानहृदायुक्तंगुरुतल्पकटिद्वयं ॥ तत्संसर्गीपदद्वंद्वमंगप्रत्यंगपातकं ॥ उपपातकरोमाणंरक्तश्मश्रुविलोचनं ॥ अधोमुखंकृष्णवर्णमंगुष्ठपरिमाणकं ॥ खड्गचर्मधरंपापंवामकुक्षौविचिंतयेत् ॥ इतिवामकुक्षौपापपुरुषौविचिंत्य ॥ यमितिवायुबीजेनषोडशवारंवामनासापुटेनसंशोष्य ॥ यं १६ ॥ रमित्यग्निबीजेनचतुःषष्टिवारंकुंभकेनसंदह्य ॥ रं ६४ पुनर्यमितिवायुबीजेनद्वात्रिंशद्वारंतद्भस्मदक्षिणनासापुटेनबाहिर्निःसार्य ॥यं ३२ वमित्यमृतबीजेनषोडशवारंअमृतीकृत्य॥ वं १६ ॥ भूतशुद्धिंकुर्यात् ॥पादादिजानुपर्यंतंपृथिवीस्थानंचतुरस्रंचतुर्दिक्षुवज्रलांछितंतन्मध्येपीतवर्णंलंबीजयुक्तंध्यायेत् ॥ ॐस्योनापृथिविभवानृक्षरानिवेशनी ॥यच्छानःशर्मसप्रथः ॥ लंभूम्यैनमः ॥ जान्वादिनाभिपर्यंतंअपांस्थानंधनुराकारंउभयोः कोटयोःश्वेतपद्मलांछितंतन्मध्येश्वेतवर्णंवंबीजयुक्तंध्यायेत् ॥ ॐअप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवमापश्चविश्वभेषजीः ॥ वंअद्भ्योनमः ॥

नाभ्यादिहृदयपर्यंतंअग्निस्थानंत्रिकोणंस्वस्तिकलांछितंतन्मध्येरक्तवर्णरंबीजयुक्तंध्यायेत् ॥ ॐअग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥ रं अग्नयेनमः ॥ हृदयादिभ्रूमध्यपर्यंतंवायुस्थानंषट्कोणंषट्बिंदुवज्रलांछितंतन्मध्येधूम्रवर्णयंबीजयुक्तंध्यायेत् ॥ ॐवायोशतंहरीणांयुवस्वपोष्याणां ॥ उतवांतेसहस्रिणोरथआयातुपाजसा ॥ यंवायवेनमः ॥ भ्रूमध्यादिब्रह्मरंध्रपर्यंतंआकाशस्थानंवृत्ताकारंध्वजलांछितंतन्मध्येनीलवर्णहंबीजयुक्तंध्यायेत् ॥ ॐआदित्प्रत्नस्यरेतसोज्योतिष्पश्यंतिवासरं ॥ परोयदिध्यतेदिवा ॥ हंआकाशायनमः ॥ पृथिवींपंचगुणांलंबीजेनषडुद्घातप्रयोगेणाप्सुप्रविलापयामि ॥ लं ६ चतुर्गुणाआपः ॥ वंतद्बीजेनपंचोद्घातप्रयोगेणाग्नौप्रविलापयामि ॥ वं ५ त्रिगुणंवह्निंरंबीजेनचतुरुद्घातप्रयोगेणवायौप्रविलापयामि ॥ रं ४ द्विगुणंवायुंयंबीजेनत्रिरुद्घातप्रयोगेणाकाशेप्रविलापयामि ॥ यं ३ एकगुणमाकाशंहंबीजेनद्विरुद्घातप्रयोगेणअहंकारेप्रविलापयामि ॥ हं २ तमहंकारंमहत्तत्वेप्रविलापयामि ॥ तन्महत्तत्वंप्रकृतौप्रविलापयामि ॥ तांप्रकृतिंपरब्रह्मणिप्रविलापयामीतिप्रविलाप्य ॥ शुद्धोहंमुक्तोहंसच्चिदानंदस्वरूपोहंब्रह्माहमस्मीतिचिरंभावयेत् ॥ तस्मात्सर्वज्ञात्सर्वशक्तेः परब्रह्मणःसकाशात्प्रकृतिः ॥ प्रकृतेर्महान् ॥ महतोहंकारः ॥ अहंकारादाकाशः ॥ आकाशाद्वायुः ॥ वायोरग्निः ॥ अग्नेरापः ॥ अद्भ्यः पृथिवी ॥ पृथिव्याओषधयः ॥ ओषधीभ्योन्नं ॥ अन्नाद्रेतः ॥ रेतसःपुरुषः ॥ सवाएषपुरुषोन्नरसमयः ॥



इतिसृष्ट्वा ॥ पुनर्जीवात्मानंसोहमितिमंत्रेणानीयप्रतिष्ठापयेत् ॥ ॥ इति भूतशुद्धिः समाप्ता

## ॥ ६५ ॥ ॥ अथ प्राणप्रतिष्ठा प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयः ॥ ऋग्यजुःसामाथर्वाणिच्छंदांसि ॥ पराप्राणशक्तिर्देवता ॥ आंबीजं ॥ र्‍हींशक्तिः ॥ क्रौंकीलकं ॥ स्वशरीरेप्राणप्रतिष्ठापनेविनियोगः ॥ ॐआंर्‍हींक्रौं ॥ अंकंखंगंघंङं ॥ अंक्रौंर्‍हींआं ॥ पृथिव्यप्तेजोवाय्वाकाशात्मनेअंगुष्ठाभ्यां नमः ॥ ॐआंर्‍हींक्रौं ॥ इंचंछंजंझंञं ॥ ईक्रौंर्‍हींआं ॥ शब्दस्पर्शरूपरसगंधात्मनेतर्जनीभ्यांनमः ॥ ॐआंर्‍हींक्रौं ॥ उंटंठंडंढंणं ॥ ऊंक्रौंर्‍हींआं ॥ श्रोत्रत्वक्चक्षुर्जिव्हाघ्राणात्मनेमध्यमाभ्यांनमः ॥ ॐआंर्‍हींक्रौं ॥ एंतंथंदंधंनं ॥ ऐंक्रौंर्‍हींआं ॥ वाक्पाणिपादपायूपस्थात्मनेअनामिकाभ्यांनमः ॥ ॐआंर्‍हींक्रौं ॥ पंफंबंभंमं ॥ औंक्रौंर्‍हींआं ॥ वक्तव्यादानगमनविसर्गानंदात्मनेकनिष्ठिकाभ्यांनमः ॥ ॐआंर्‍हींक्रौं ॥ अंयंरंलंवंशंषंसंहंक्षंअः ॥ क्रौंर्‍हींआं ॥ मनोबुद्धिरहंकारचित्तविज्ञानात्मनेकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादिषडंगः ॥ आंर्‍हींक्रौं ॥ अंयंरंलंवंशंषंसंहंक्षंअः ॥ क्रौंर्‍हींआं ॥ ममप्राणइहप्राणाः ॥ ॐआंर्‍हींक्रौं ॥ अंयंरंलंवंशंषंसंहंक्षंअः ॥ क्रौंर्‍हींआं ॥ ममजीवइहस्थितः ॥ ॐआंर्‍हींक्रौं ॥ अंयंरंलंवंशंषंसंहंक्षंअः ॥ क्रौंर्‍हींआं ॥ ममसर्वेंद्रियाणिवाङ्मनस्त्वक्चक्षुश्रोत्रजिव्हाघ्राणवाक्पाणिपादपायूपस्थइहै

वागत्यसुखंचिरंतिष्ठंतुस्वाहा ॥ ॐअसुनीतेपुनरस्मासुचक्षुःपुनःप्राणमिहनोधेहिभोगं ॥ ज्योक्पश्येमसू
र्यमुच्चरंतमनुमतेमृळयानःस्वस्ति ॥ ॐप्राणोवाऐंद्रवायवःप्राणोनवममहस्तस्मानवमेहन्नैंद्रवायवोगृह्यते ॥
गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तीःकरिष्ये ॥ ॐ ॥ १५ ॥ रक्तांभोधिस्थपोतोल्लस
दरुणसरोजाधिरूढाकराब्जैः पाशंकोदंडमिक्षूद्भवगुणमथमप्यंकुशंपंचबाणान् ॥ बिभ्राणासृक्कपालंत्रिन
यनलसितापीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः ॥ इतिध्यानं ॥ ॐतच्चक्षुर्दे
वहितंशुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतं ॥ ॥ ७ ॥ ॥ ७ ॥

॥ ६६ ॥ ॥ अथ अंतर्मातृकाबहिर्मातृकान्यास प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथास्यश्रीमातृकामंत्रस्यब्रह्माऋषिः ॥ मातृकासरस्वतीदेवता ॥ हलोबीजा
नि ॥ स्वराःशक्तयः ॥ बिंदवःकीलकं ॥ मातृकान्यासेविनियोगः ॥ ॐअंकंखंगंघंङं ॥ आंअंगुष्ठाभ्यांन
मः ॥ ॐइंचंछंजंझंञं ॥ ईंतर्जनीभ्यांनमः ॥ ॐउंटंठंडंढंणं ॥ ऊंमध्यमाभ्यांनमः ॥ ॐएंतंथंदंधंनं ॥
ऐंअनामिकाभ्यांनमः ॥ ॐ ॐपंफंबंभंमं ॥ ॐकनिष्ठिकाभ्यांनमः ॥ ॐअंयंरंलंवंशंषंसंहंक्षंअः ॥ कर
तलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादि ॥ ॐअंनमः ॥ आंनमः ॥ इंनमः ॥ ईंनमः ॥ उंनमः ॥ ऊंनमः ॥
ऋंनमः ॥ ॠंनमः ॥ ऌंनमः ॥ ॡंनमः ॥ एंनमः ॥ ऐंनमः ॥ ओंनमः ॥ औंनमः ॥ अंनमः ॥ अःन

मः ॥ एतान्षोडशवर्णान्कंठस्थानगतेषोडशदलेषुविन्यसामि ॥ ॐकंनमः ॥ खंनमः ॥ गंनमः ॥ घं
नमः ॥ ङंनमः ॥ चंनमः ॥ छंनमः ॥ जंनमः ॥ झंनमः ॥ ञंनमः ॥ टंनमः ॥ ठंनमः ॥ एतान्द्वाद
शवर्णान्हृदयस्थानगतेद्वादशदलेषुविन्यसामि ॥ ॐडंनमः ॥ ढंनमः ॥ णंनमः ॥ तंनमः ॥ थंनमः ॥
दंनमः ॥ धंनमः ॥ नंनमः॥ पंनमः॥फंनमः ॥ एतान्दशवर्णान्नाभिस्थानगतेदशदलेषुविन्यसामि ॥ ॐबंन
मः ॥ भंनमः ॥ मंनमः ॥ यंनमः ॥ रंनमः ॥ लंनमः ॥ एतान्षड्वर्णान्लिंगस्थानगतेषड्दलेषुविन्यसा
मि ॥ ॐवंनमः ॥ शंनमः ॥ षंनमः ॥ संनमः ॥ एतान्चतुर्वर्णान्आधारस्थानगतेचतुर्दलेषुविन्यसा
मि ॥ ॐहंनमः ॥ क्षंनमः ॥ इदंवर्णद्वयंभ्रूमध्यगतोद्विदलेषुविन्यसामि ॥ ॐआधारेलिंगनाभौप्रकटित
हृदयेतालुमूलेललाटेद्वेपत्रेषोडशारेद्विदशदशदलेद्वादशार्धेचतुष्के ॥ वासांतेबालमध्येडफकठसहितेकं
ठेदशेस्वराणांहंक्षंतत्वार्थयुक्तंसकलदलगतंवर्णरूपंनमामि ॥ अंनमः ॥ शिरसि ॥ आंनमः ॥ मुखे ॥ इं
नमः ॥ दक्षिणनेत्रे ॥ ईंनमः ॥ वामनेत्रे ॥ उंनमः ॥ दक्षिणकर्णे ॥ ऊंनमः ॥ वामकर्णे ॥ ऋंनमः ॥
दक्षिणनासापुटे ॥ ॠंनमः ॥ वामनासापुटे ॥ ऌंनमः ॥ दक्षिणगंडे ॥ ॡंनमः ॥ वामगंडे ॥ एंनमः ॥
ऊर्ध्वोष्ठे ॥ ऐंनमः ॥ अधरोष्ठे ॥ ॐनमः ॥ ऊर्ध्वदंतपंक्तौ ॥ औंनमः ॥ अधरदंतपंक्तौ ॥ अंनमः ॥ मु
खे ॥ अःनमः ॥ आस्ये ॥ ॐकंनमः ॥खंनमः ॥ गंनमः ॥ घंनमः ॥ ङंनमः ॥ एतान्पंचवर्णान्दक्षिणह
स्तसंध्यग्रेषुविन्यसामि ॥ चंनमः ॥ छंनमः ॥ जंनमः ॥ झंनमः ॥ ञंनमः ॥ एतान्पंचवर्णान्वामहस्त

संध्यग्रेषुविन्यसामि ॥ टंनमः ॥ ठंनमः ॥ डंनमः ॥ ढंनमः ॥ णंनमः ॥ एतान्पंचवर्णान्दक्षिणपाद संध्यग्रेषुविन्यसामि ॥ तंनमः ॥ थंनमः ॥ दंनमः ॥ धंनमः ॥ नंनमः ॥ एतान्पंचवर्णान्वामपादसंध्य ग्रेषुविन्यसामि ॥ पंनमःदक्षिणपार्श्वे ॥ फंनमः ॥वामपार्श्वे ॥ बंनमः ॥ पृष्ठे ॥ भंनमः ॥ नाभौ ॥ मंनमः ॥ उदरे ॥ यंनमः । त्वगादिहृदये ॥ रंनमः ॥ असृगात्मनेदोर्मूलायनमः ॥ लंनमः ॥ मांसा त्मनेककुदेनमः ॥ वंनमः ॥ मेदात्मनेकक्षद्वयायनमः ॥ शंनमः ॥ अस्थ्यात्मनेहृदयादिहस्तयुगुलायन मः ॥ षंनमः ॥ मज्जात्मनेहृदयादिपादयुगुलायनमः ॥ संनमः ॥ शुक्रात्मनेजठरायनः ॥ हंनमः ॥ प्रा णात्मनेमुखायनमः ॥ क्षंनमः ॥ जीवात्मनेसर्वशरीरेषुविन्यसामि ॥ पंचाशद्वर्णभेदैर्विहितवदनदोःपाद हृत्कुक्षिवक्षोदेशांभास्वत्कपर्दाकलितशशिकलाबिंदुकुंदावदातां ॥ अक्षस्रक्कुंभचिंतांलिखितवरकरांत्र्यक्ष णांपद्मसंस्थामच्छाकल्पामतुच्छस्तनजघनभरांभारतींतांनमामि ॥ ॐचत्वारिवाक्परिमितापदानितानिवि दुर्ब्राह्मणायेमनीषिणः ॥ गुहात्रीणिनिहितानेंगयंतितुरीयंवाचोमनुष्यावदंति ॥ ॥ इतिअंतर्मातृकाब हिर्मातृकासमाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



॥ ६७ ॥ ॥ अथ पवनपावन प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ सुमुखश्चेत्यादि श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंशरीरशुद्ध्यर्थंआत्मानंपावयिष्ये ॥

आचार्यःऋत्विग्यजमानैःसहैकविंशतिदर्भपिंजूलान्यादायसप्तभिःसप्तभिःपावयति ॥ ॐचित्पतिर्मापुना त्वच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः ॥ नाभ्याःसोदकैर्दर्भैर्मुखपर्यंतंसंमार्ष्टि ॥ सकृन्मंत्रेणद्विस्तूष्णीं ॥ यद्देवादेवहेडनं ॥ देवासश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचत ॥ ऋतस्यर्तेनमामुत ॥ देवाजीवनका म्यायत् ॥ वाचानृतमूदिम ॥ अग्निर्मातस्मादेनसः ॥ गार्हपत्यःप्रमुंचतु ॥ दुरितायानिचकृम ॥ करोतु मामनेनसं ॥ ऋतेनद्यावापृथिवी ॥ ऋतेनत्वंसरस्वति ॥ ऋतान्मामुंचतांहसः ॥ यदन्यकृतमारिम ॥ सजातशंसादुतवाजामिशंसात् ॥ ज्यायसःशंसादुतवाकनीयसः॥अनाज्ञातंदेवकृतंयदेनः ॥ तस्मात्वम स्मांजातवेदोमुमुग्धि ॥ यद्वाचायन्मनसा ॥ बाहुभ्यामूरुभ्यामष्ठीवद्भ्यां ॥ शिश्नैर्यदनृतंचकृमावयं ॥ अ ग्निर्मातस्मादेनसः ॥ यद्धस्ताभ्यांचकरकिल्बिषाणि ॥ अक्षाणांवग्नुमुपजिघ्नमानः ॥ दूरेपश्याचराष्ट्रभृ च्च ॥ तान्यप्सरसावनुदत्तामृणानि ॥ अदीव्यंनृणंयदहंचकार ॥ यद्वादास्यंतसंजगाराजनेभ्यः ॥ अग्निर्मा तस्मादेनसः ॥ यन्मयिमातागर्भेसति ॥ एनश्चकारयत्पिता ॥ अग्निर्मातस्मादेनसः ॥ यदापिपेषमातरं पितरं ॥ पुत्रःप्रमुदितोधयन् ॥ अहिंसितौपितरौमयातत्॥तदग्नेअनृणोभवामि ॥ यदंतरिक्षंपृथिवीमुत द्यां ॥ यन्मातरंपितरंवाजिहिंसिम ॥ अग्निर्मातस्मादेनसः ॥ यदाशसानिशसायत्पराशसा ॥ यदेनश्च

कुमानूतनंयत्पुराणं ॥ अग्निर्मातस्मादेनसः ॥ अतिक्रामामिदुरितंयदेनः ॥ जहामिरिप्रंपरमेसधस्थे ॥ यत्रयंतिसुकृतोनापिदुष्कृतः ॥ तमारोहामि ॥ सुकृतांनुलोकं ॥ त्रितेदेवाअमृजतैतदेनः ॥ त्रितएतन्मनुष्येषुमामृजे ॥ ततोमायदिकिंचिदानशे ॥ अग्निर्मातस्मादेनसः ॥ गार्हपत्यःप्रमुंचतु ॥ दुरितायानिचकृम ॥ करोतुमामनेनसं ॥ दिविजाताअप्सुजाताः ॥ याजाताओषधीभ्यः ॥ अथोयाअग्निजाआपः ॥ तानःशुंधंतुशुंधनीः ॥ यदापोनक्तंदुरितंचराम ॥ यद्वादिवानूतनंयत्पुराणं ॥ हिरण्यवर्णास्ततउत्पुनीतनः ॥ इमंमेवरुणतत्त्वायामि ॥ त्वन्नोअग्नेसत्वंनोअग्ने ॥ त्वमग्नेअयासि ॥ इत्यनुवाकंजपित्वा ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ इतिमार्जनं ॥ तांस्त्यक्त्वा ॥ अन्यान्गृहीत्वा ॥ ॐ वाक्पतिर्मापुनात्वच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः ॥ नाभ्याःसोदकैर्दर्भैर्नासिकपर्यंतंसंमार्ष्टि ॥ सकृन्मंत्रेणद्विस्तूष्णीं ॥ पवमानःसुवर्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमादेवजनाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदः पवित्रवत् ॥ पवित्रेणपुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वा क्रतूंरनु ॥ यत्तेपवित्रमर्चिषि ॥ अग्नेविततमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यांदेवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनतीदेव्यागात् ॥

यस्यैबह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयंस्यामपतयोरयीणां ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातःप्राणेनेषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपुनाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतंरसं ॥ सर्वंसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृतंरसं ॥ तस्मैसरस्वतीदुहे ॥ क्षीरंसर्पिर्मधूदकं ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतंहितं ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुं ॥ कामान्त्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीः स्वस्त्ययनीः ॥ सुदघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतंहितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यः पुनंतुमा ॥ प्राजापत्यंपवित्रं ॥ शताद्यामंहिरण्मयं ॥ तेनब्रह्मविदोवयं ॥ पूतब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ इत्यनुवाकंजप्त्वा ॥ ततोमार्जनं ॥ आपोहिष्ठामयोभुवः ॥ तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसः ॥ तस्यभाजयतेहनः ॥ उशती

रिंवमातरः ॥ तस्माअरंगमामवः ॥ यस्यक्षयायाजिन्वथ ॥ आपोजनयथा चनः ॥ तांस्त्यक्त्वा ॥ अन्यान्गृ
हीत्वा ॥ ॐ देवोमांसवितापुनात्वच्छिद्रेणपवित्रेणवसोः सूर्यस्यरश्मिभिः ॥ नाभ्याःसोदकैर्दर्भैर्ललाटपर्यं
तंसंमार्ष्टि ॥ सकृन्मंत्रेणाद्विस्तूष्णीं ॥ तस्यतेपवित्रपतेपवित्रेणयस्मैकंपुनेतच्छकेयं ॥ इतिजप्त्वा ॥ त
तोमार्जनं ॥ हिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआ
पःश २ स्योनाभवंतु ॥ यासा २ राजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाः
पावकास्तानआपःश ँ स्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींप
यसोंदंतिशुक्रास्तानआपःश ँ स्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥
सर्वाँ अग्नीँरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ तांस्त्यक्त्वा ॥ भूर्भुवःसुवः ॥ इत्यपःप्राश्य ॥
आपोहिष्ठेतितिसृभिर्मुखंनिमृज्य ॥ ततःआचमनानि ॥ तस्माअरं॰ चनः ॥ योवःशिव॰ आपोहि॰
क्षसे ॥ पयस्वतीरोषधयःपयस्वद्वीरुधांपयः॥ अपांपयसोयत्पयस्तेनमामिंद्रसँसृज ॥ इतिप्रतिमंत्रेणाचा
मेत् ॥ ततःस्मृत्युक्तमाचमनंकृत्वा ॥ कृत्वालंपादशौचंविमलमथजलंत्रिःपिबेदुन्मृजेद्द्विर्देशिन्यंगुष्ठयु
ग्मंसजलमभिमृशेन्नासिकारंध्रयुग्मं ॥ अंगुष्ठानामिकाभ्यांनयनयुगयुतंकर्णयुग्मंकनिष्ठांगुष्ठाभ्यांनाभिदे

शेहृदयमथतलेनांगुलीभिःशिरोंसौ ॥ १ ॥ इतिस्मृत्युक्तमाचमनंचरेत् ॥ गायत्रीजपःशतकृत्वासहस्रकृ
त्वापरिमितकृत्वावावर्तयेत् ॥ दशवारमिडाजपः ॥ ॐइडांदेवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानिशँसिष
द्विश्वेदेवाःसूक्तवाचःपृथिविमातर्मामाहिँसीर्मधुमनिष्येमधुजनिष्येमधुवक्ष्यामिमधुवदिष्यामिमधुमतींदेवे
भ्योवाचमुद्यासँशुश्रूषेण्यांमनुष्येभ्यस्तंमादेवाअवंतुशोभायैपितरोनुमदंतु ॥ अपनःशोशुचदघमग्नेशुशु
ग्ध्यारयिं ॥ अपनःशोशुचदघं ॥ सुक्षेत्रियासुगातुयावसूयाचयजामहे ॥ अपनःशोशुचदघं ॥ प्रयद्भंदि
ष्ठएषांप्रास्माकासश्चसूरयः ॥ अपनःशोशुचदघं ॥ प्रयदग्नेःसहस्वतोविश्वतोयंतिभानवः ॥ अपनःशोशु
चदघं ॥ प्रयत्तेअग्नेसूरयोजायेमहिप्रतेवयं ॥ अपनःशोशुचदघं ॥ त्वँहिविश्वतोमुखविश्वतःपरिभूरसि ॥
अपनःशोशुचदघं ॥ द्विषोनोविश्वतोमुखातिनावेवपारय॥ अपनःशोशुचदघं ॥ सनःसिंधुमिवनावयातिप
र्षास्वस्तये ॥ अपनःशोशुचदघं ॥ आपःप्रवणादिवयतीरपास्मत्स्यंदतामघं॥ अपनःशोशुचदघं ॥ उद्बना
दुदकानीवापास्मत्स्यंदतामघं ॥ अपनःशोशुचदघं ॥ आनंदायप्रमोदायपुनरागाँस्वान्गृहान् ॥ अप
नःशोशु चदघं ॥ नवैतत्रप्रमीयतेगौरश्वःपुरुषःपशुः ॥ यत्रेदंब्रह्मक्रियतेपरिधिर्जीवनायकमपनःशोशुचदघं॥
सहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ पुरुषएवेदँ

सर्वं ॥ यद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानः ॥ यदन्नेनातिरोहति ॥ एतावानस्यमहिमा ॥ अतोज्यायाꣳश्च पूरुषः ॥ पादोस्यविश्वाभूतानि ॥ त्रिपादस्यामृतंदिवि ॥ त्रिपादूर्ध्वउदैत्पुरुषः ॥ पादोस्येहाभवात्पुनः ॥ ततोविष्वङ्व्यक्रामत् ॥ साशनानशनेअभि ॥ तस्माद्विराडजायत ॥ विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ यत्पुरुषेणहविषा ॥ देवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ सप्तास्यासन्परिधयः ॥ त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाः ॥ अबध्नन्पुरुषंपशुं ॥ तंयज्ञंबर्हिषिप्रौक्षन् ॥ पुरुषंजातमग्रतः ॥ तेनदेवाअयजंत ॥ साध्याऋषयश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ संभृतंपृषदाज्यं ॥ पशूꣳस्ताꣳश्चक्रेवायव्यान् ॥ आरण्यान्ग्राम्याश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ ऋचः सामानिजज्ञिरे ॥ छंदाꣳसिजज्ञिरेतस्मात् ॥ यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंत ॥ येकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात् ॥ तस्माज्जाताअजावयः ॥ यत्पुरुषंव्यदधुः ॥ कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥ कावूरूपादावुच्येते ॥ ब्राह्मणोस्यमुखमासीत् ॥ बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यः ॥ पद्भ्याꣳशूद्रोअजायत ॥ चंद्रमामनसोजातः ॥ चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षं ॥ शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात् ॥ तथालोकाꣳअकल्पयन् ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णंतमसस्तुपारे ॥ सर्वाणिरूपाणिविचित्यधीरः ॥ नामानिकृत्वाभिवदन्यदास्ते ॥ धातापुरस्ताद्यमुदाजहार ॥ शक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनयज्ञमयजंतदेवाः ॥ तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वेसाध्याःसंतिदेवाः ॥ ॥ इत्यासनविधिभूतशुद्धिप्राणप्रतिष्ठाअंतर्मातृकाबहिर्मातृकास्मार्तपवनपावनानिसमाप्तानि ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ६८ ॥ ॥ अथ महान्यास प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ हरिः ॐम् ॥ अथातःपंचांगरुद्राणांन्यासपूर्वकंजपहोमार्चनविधिंव्याख्यास्यामः ॥ ॐयातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तनुवाशंतमयागिरिशंताभिचाकशीहि ॥ शिखायैनमः ॥ ॐअस्मिन्महत्यर्णवेंतरिक्षेभवाअधि ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ शिरसेस्वाहा ॥ ॐसहस्राणिसहस्रशोयेरुद्राअधिभूम्यां ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ललाटायनमः ॥ ॐहꣳसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ भ्रूमध्यायनमः ॥ ॐत्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ नेत्राभ्यांनमः ॐनमःस्रुत्यायचपथ्यायच ॥ कर्णाभ्यांनमः ॥ ॐमानस्तोकेतनयेमानआयुषि

मानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ नासिकायैनमः ॥ ॐनी
ॐअवतत्यधनुस्त्वꣳसहस्राक्षशतेषुधे ॥ निशीर्यशल्यानांमुखाशिवोनःसुमनाभव ॥ मुखायनमः ॥ ॐनी
लग्रीवाः शितिकंठाः शर्वाअधःक्षमाचराः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मासि ॥ कंठायनमः ॥ ॐ
नीलग्रीवाः शितिकंठादिवꣳरुद्राउपश्रिताः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मासि ॥ उपकंठायनमः ॥
ॐनमस्तेअस्त्वायुधायानाततायधृष्णवे ॥ उभाभ्यामुततेनमोबाहुभ्यांतवधन्वने ॥ बाहुभ्यांनमः ॥ ॐया
तेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ उपबाहुभ्यांनमः ॥ ॐयेती
र्थानिप्रचरंतिसृकावंतोनिषंगिणः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मासि ॥ हस्ताभ्यांनमः ॥ ॐसद्योजा
तंप्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ अंगुष्ठाभ्यांनमः ॥
वामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमः कालायनमःकलविकरणायनमोबलविकरणायनमोब
लायनमोबलप्रमथनायनमः सर्वभूतदमनायनमोमनोन्मनायनमः ॥ तर्जनीभ्यांनमः ॥ ॐअघोरेभ्योथ
घोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ मध्यमाभ्यांनमः ॥ ॐतत्पुरुषा
यविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ अनामिकाभ्यांनमः ॐईशानः सर्वविद्यानामीश्वरः
सर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधि पतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ कनिष्ठिकाभ्यांनमः ॥ ॐनमोवः

किरिकेभ्योदेवानाꣳहृदयेभ्यः ॥ हृदयायनमः॥ॐनमोगणेभ्योगणपतिभ्यश्चवोनमः ॥ पृष्ठचैनमः ॥ ॐ
नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमः ॥ पार्श्वाभ्यांनमः ॥ ॐविज्यंधनुः कपर्दिनोविशल्योबाण
वाꣳउत ॥ अनेशंनस्येषवआभुरस्यनिषंगथिः ॥ जठरायनमः ॥ ॐहिरण्यगर्भः समवर्तताग्रेभूतस्यंजा
तःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ नाभ्यै० ॐमीढुष्टमशिव
तमशिवोनःसुमनाभव ॥ परमेवृक्षआयुधंनिधायकृत्तिंबसानआचरपिनाकंबिभ्रदागहि ॥ कट्यैनमः ॥
ॐयेभूतानामधिपतयोविशिखासःकपर्दिनः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ गुह्यायनमः ॥
साशिराजातवेदाः ॥ अक्षरंब्रह्मसंमितं ॥ वेदानाꣳशिरउत्तमं ॥ जातवेदसेशिरसामाता ॥ स्वयंब्रह्मभूर्भुवः
सुवरोम् ॥ ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनः पर्षदतिदुर्गाणिविश्वानावेवसिधुंदुरि
तात्यग्निः ॥ तामग्निवर्णांतपसाज्वलंतींवैरोचनीं कर्मफलेषुजुष्टां ॥ दुर्गादेवींशरणमहंप्रपद्येसुतरांसितरसेन
मः ॥ अग्नेत्वंपारयानव्यो अस्मान्स्वस्तिभिरातिदुर्गाणिविश्वा ॥ पूश्चपृथ्वीबहुलानउर्वीभवातोकायतन
यायशंयोः ॥ विश्वानिनोदुर्गहाजातवेदःसिंधुंननावादुरितातिपार्षि ॥ अग्नेअत्रिवन्नमसागृणानोस्माकंबो

ध्यवितातनूनां ॥ पृतनाजित ँ सहमानमुग्रमाग्नि ँ हुवेमपरमात्सधस्थात् ॥ सनः पर्षदतिदुर्गाणिविश्वाक्षामंद्देवोअतिदुरितात्यग्निः ॥ अपानायनमः ॥ ॐमानोमहांतमुतमानोअर्भकंमानउक्षंतमुतमानउक्षितं ॥ मानोवधीःपितरंमोतमातरंप्रियामानस्तनुवोरुद्ररीरिषः ॥ ऊरुमध्याभ्यांनमः ॥ ॐएषतेरुद्रभागस्तंजुषस्वतेनावसेनपरोमूजवतोतीह्यवततधन्वापिनाकहस्तःकृत्तिवासाः ॥ जानुभ्यांनमः ॐस ँ सृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्रा ँ अपबाधमानः ॥ जंघाभ्यांनमः ॥ ॐविश्वंभूतंभुवनंचित्रंबहुधाजातंजायमानंचयत् ॥ सर्वोह्येषरुद्रस्तस्मैरुद्रायनमोअस्तु ॥ गुल्फाभ्यांनमः ॥ ॐयेपथांपथिरक्षयऐलबृदायव्युधः ॥ तेषा ँ सहस्रयोजनेवधन्वानितन्मसि ॥ पादाभ्यांनमः ॥ ॐअध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ॥ अहीं ँ श्चसर्वाजंभयन्त्सर्वाश्चयातुधान्यः ॥ कवचायनमः ॥ ॐनमोबिल्मिनेचकवचिनेच ॥ उपकवचायनमः ॥ ॐनमोअस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेअस्यसत्वानोहंतेभ्योकरंनमः ॥ तृतीयनेत्रायनमः ॥ ॐप्रमुंचधन्वनस्त्वमुभयोरार्त्नियोर्ज्यां ॥ याश्चतेहस्तइषवःपराताभगवोवप ॥ अस्त्रायनमः ॥ ॐयएतावंतश्चभूयां ँ सश्चदिशोरुद्रावितस्थिरे ॥ तेषा ँ सहस्रयोजनेवधन्वानितन्मसि ॥ इतिदिग्बंधः ॥ ॐनमोभगवतेरुद्रायेतिनमस्कारंन्यसेत् ॥ ॐ ॐमूर्ध्नेनमः ॥



ॐनंनासिकायैनमः ॥ ॐमंललाटायनमः ॥ ॐभं मुखायनमः ॥ ॐगं कंठायनमः ॥ ॐवंहृदयायनमः ॥ ॐतें दक्षिणहस्तायनमः ॥ ओंरुंवामहस्तायनमः ॥ ॐद्रांनाभ्यैनमः ॥ ॐयंपादाभ्यांनमः ॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ पादाभ्यांनमः ॥ वामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमः कालायनमः कलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमः सर्वभूतदमनायनमोमनोन्मनायनमः ॥ ऊरुमध्यायनमः ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्यो नमस्तेअस्तुरुद्ररूपेभ्यः ॥ हृदया० ॐतत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रः प्रचोदयात् ॥ मुखायनमः ॥ ॐईशानः सर्वविद्या नामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ शिरसेस्वाहा ॥ ॐहंसायनमः ॥ ॐपरमहंसायनमः हंसहंसेतियोब्रूयाद्धंसोनामसदाशिवः ॥ एवंन्यासविधिंकृत्वाततःसंपुटमारभेत् ॥ ॐ त्रातारमिंद्रमवितारमिंद्र ँ हवेहवेसुहव ँ शूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूतमिंद्र ँ स्वस्तिनोमघवाधात्विंद्रः ॥ ललाटस्थाने इंद्रायनमः ॐ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवन्हितमः शोशुचानोविश्वाद्वेषा ँ सिप्रमुमुग्ध्यस्मत् ॥ अग्नयेनमः ॥ ॐसुगंनःपंथामभयंकृणोतुयस्मिन्नक्षत्रेयमएतिराजा ॥ यस्मिन्नेनमभ्यषिंचंतदेवास्तदस्यचित्र ँ हविषायजाम ॥ यमायनमः ॥ ॐ असुन्वंतमयजमानमिच्छस्तेनस्येत्यां

तस्करस्यान्वेषि ॥ अन्यमस्मादिच्छसातेइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ निर्ऋतये॰ ॥ ॐ तत्त्वायामिब्र ह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुश२ समानआयुः प्रमोषीः॥ वरुणा य॰॥ ॐआनोनियुद्भिः शतिनीभिरध्वरं२ सहस्रिणीभिरुपयाहियज्ञं ॥ वायोअस्मिन्हविषिमादयस्वयूयंपा तः स्वस्तिभिःसदानः ॥ वायवेनमः॥ ॐवय२ सोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतोअशीमहि ॥ सोमा य॰॥ ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः॥ यःश२ सतेस्तुवतेधायिपज्रइंद्रज्येष्ठाअस्मा२अ वंतुदेवाः ॥ आकाशायनमः ॥ ॐतमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेद सामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ एकादशरुद्रेभ्योनमः॥ ॐस्योनापृथिविभवानृक्षरानिवेशनी ॥ य च्छानःशर्मसप्रथाः ॥ भूम्यैनमः ॥ एतत्संपुटमिंद्रादीन्दिक्षुविन्यस्यैवात्मनिरौद्रीकरणंकृत्वा ॥ स्व२स्थि गतैःपापैःप्रमुच्यतेसर्वभूतेष्वपराजितोभवति ॥ ततोयक्षराक्षसगंधर्वभूतप्रेतपिशाचयमदूतशाकिनीडाकि नीसर्पश्वापदतस्कराद्युपद्रवाद्युपघाताः सर्वेज्वलंतंपश्यंतु ॥ मां २ रक्षंतु ॥ यजमानं २ रक्षंतु ॥ ॐ म नोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञ २ समिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेन ॥ गुह्यायनमः ॥ ॐअबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं॥ यव्हाइवप्रवयामुज्जिहानाःप्रभानवः

सिस्रतेनाकमच्छ ॥ अग्नयेनमः॥ ॐमूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायजातमग्निं॥ कवि२ संम्राजम तिथिंजनानामासन्नापात्रंजनयंतदेवाः॥ ह्रदयायनमः॥ॐमर्माणितेवर्मभिश्छादयामिसोमस्त्वाराजाम्तेना भिवस्तां ॥ उरोर्वरियोवरीवस्तेअस्तुजयंतंत्वामनुमदंतिदेवाः ॥ मुखायनमः ॥ ॐजातवेदायदिवापावके. सि ॥ वैश्वानरोयदिवावैद्युतोसि ॥ शंप्रजाभ्योयजमानायलोकं ॥ ऊर्जपुष्टिंददद्भ्यावव्रत्स्व॥ शिरसेस्वा हा ॥ ॐ ब्रह्मात्मन्वदसृजत ॥ तदकामयत ॥ समात्मनापद्येयेति ॥ आत्मन्नात्मंनित्यामंत्रयत ॥ तस्मै दशम २ हूतःप्रत्यशृणोत् ॥ सदशहूतोभवत् ॥ दशहूतोहवैनामैषः ॥ तंवाएतंदशहूत २ संतं ॥ दशहो तेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मंनात्मंनित्यामंत्रयत ॥ तस्मैसप्तम २ हूतः प्रत्यशृ णोत् ॥ ससप्तहूतोभवत् ॥ सप्तहूतोहवैनामैषः ॥ तंवाएत २ सप्तहूत २ संतं ॥ सप्तहोतेत्याचक्षतेपरोक्षेण परोक्षप्रियाइवहिदेवाः ॥ आत्मंनात्मंनित्यामंत्रयत ॥ तस्मैषष्ठ २ हूतःप्रत्यशृणोत् ॥ सषड्ढूतोभवत् ॥ ष ड्ढूतोहवैनामैषः ॥ तंवाएतं २ षड्ढूत २ संतं ॥ षड्ढोतेत्याचक्षते परोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मंनात्मंनित्यामंत्रयत ॥ तस्मैपंचम २ हूतःप्रत्यशृणोत् ॥ सपंचहूतोभवत् ॥ पंचहूतो हवैनामैषः ॥ तंवाएतं पंचहूत २ संतं ॥ पंचहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मंनात्मंनित्यामंत्र

 

यत ॥ तस्मैचतुर्थ ँ हूतः प्रत्यशृणोत् ॥ सचतुर्हूतोभवत् ॥ चतुर्हूतोहवैनामैषः ॥ तंवाएतंचतुर्हूत ँ संतं ॥ चतुर्होतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ तमब्रवीत् ॥त्वंवैमेनेदिष्ठ ँ हूतःप्रत्यश्रौषीः॥ त्वयैनानाख्यातारइति ॥ तस्मान्नुहैना ँ श्चतुर्होतारइत्याचक्षते ॥ तस्माच्छुश्रूषुःपुत्राणा ँ हृद्यतमः ॥ नेदिष्ठोहृद्यतमः ॥ नेदिष्ठोब्रह्मणोभवति ॥ यएवंवेद ॥ ॐ यज्जाग्रतोदूरमुदैतुदैवंतदुसुप्तस्यतथैवैति ॥ दूरंगमंज्योतिषांज्योतिरेकंतन्मेमनःशिवसंकल्पमस्तु ॥ येनकर्माण्यपसोमनीषिणोयज्ञेकृण्वंतिविदथेषुधीराः ॥ यदपूर्वंयक्षमंतःप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्योतिरंतरमृतंप्रजासु ॥ यस्मान्नऋतेकिंचनकर्मक्रियतेतन्मेमनःशिवसंकल्पमस्तु ॥ येनेदंभूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वं ॥ येनयज्ञस्तायतेसप्तहोतातन्मेमनःशिवसंकल्पमस्तु ॥ यस्मिन्नृचःसामयजूं ँ षियस्मिन्प्रतिष्ठिता रथनाभाविवाराः ॥ यस्मिं ँ श्चित्त ँ सर्वमोतंप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ सुषारथिरश्वानिवयन्मनुष्यान्नेनीयतेभीशुभिर्वाजिनइव ॥ हृत्प्रतिष्ठंयदजिरंयविष्ठंतन्मेमनःशिवसंकल्पमस्तु ॥ हृदयायनमः ॥ 

ॐ सहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ पुरुषएवेद ँ सर्वं ॥ यद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानः॥यदन्नेनातिरोहति॥एतावानस्यमहिमा॥अतोज्यायांश्च पूरुषः॥पादोस्यविश्वाभूतानि॥त्रिपादस्यामृतंदिवि॥त्रिपादूर्ध्वउदैत्पुरुषः॥पादोस्येहाभवात्पुनः॥ततोविष्व ँ व्यक्रामत् ॥ साशनानशनेअभि॥तस्माद्विराडजायत॥विराजोअधिपूरुषः ॥सजातो अत्यरिच्यत॥पश्चाद्भूमिमथोपुरः ॥ यत्पुरुषेणहविषा ॥ देवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यं॥ग्रीष्मइध्मःशरद्धविः ॥ सप्तास्यासन्परिधयः॥त्रिःसप्तसमिधःकृताः॥देवायद्यज्ञंतन्वानाः ॥अबध्नन्पुरुषंपशुं ॥तंयज्ञंबर्हिषिप्रौक्षन्॥पुरुषंजातमग्रतः॥तेनदेवाअयजंत॥साध्याऋषयश्चये ॥ तस्माद्यज्ञात्सर्वहुतः॥संभृतंपृषदाज्यं॥पशू ँ स्ता ँ श्चक्रेवायव्यान् ॥ आरण्यान्ग्राम्याश्चये॥ तस्माद्यज्ञात्सर्वहुतः॥ऋचःसामानिजज्ञिरे॥छंदा ँ सिजज्ञिरेतस्मात्॥यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंत ॥ यकेचोभयादतः॥गावोहजज्ञिरेतस्मात् ॥ तस्माज्जाताअजावयः ॥ यत्पुरुषंव्यदधुः ॥ कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥ कावूरूपादावुच्येते ॥ ब्राह्मणोस्यमुखमासीत् ॥ बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यः ॥ पद्भ्या ँ शूद्रोअजायत ॥ चंद्रमामनसोजातः ॥ चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षं ॥ शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात् ॥ तथालोका ँ अकल्पयन् ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णंत

मंसस्तुपारे ॥सर्वाणिरूपाणिविचित्यधीरः ॥ नामानिकृत्वाभिवदन्यदास्ते ॥ धातापुरस्तायमुदाजहार ॥ शक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनयज्ञमयजंतदेवाः॥तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वेसाध्याःसंतिदेवाः॥ शिरसेस्वाहा ॥ अद्भ्यःसंभूतः पृथिव्यैरसाच्च ॥ विश्वकर्मणःसमवर्तताधि ॥ तस्यत्वष्टाविदधद्रूपमेति ॥ तत्पुरुषस्यविश्वमाजानमग्रे ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णतमसःपरस्तात् ॥ तमेवंविद्वानमृतइहभवति॥ नान्यःपंथाविद्यतेयनाय ॥ प्रजापतिश्चरतिगर्भेअंतः ॥ अजायमानोबहुधाविजायते ॥ तस्यधीराः परिजानंतियोनिं ॥ मरीचीनांपदमिच्छंतिवेधसः ॥योदेवेभ्यआतपति॥ योदेवानांपुरोहितः ॥पूर्वोयोदेवेभ्योजातः॥नमोरुचायब्राह्मये॥रुचंब्राह्मंजनयंतः॥ देवाअग्रेतदब्रुवन् ॥ यस्त्वैवंब्राह्मणोविद्यात् ॥ तस्यदेवाअसन्वशे ॥ ह्रीश्चतेलक्ष्मीश्चपत्न्यौ ॥अहोरात्रेपार्श्वे॥ नक्षत्राणिरूपं ॥अश्विनौव्यात्तं॥इष्टंमनिषाण॥अमुंमनिषाण॥सर्वंमनिषाण॥शिखायैवषट्॥ॐआशुःशिशानोवृषभोनयुध्मोघनाघनःक्षोभणश्चर्षणीनां ॥ संक्रंदनोनिमिषएकवीरःशतंसेनाअजयत्साकमिंद्रः ॥ संक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥ सइषुहस्तैःसनिषंगिभिर्वशीसंस्रष्टासयुधइंद्रोगणेन ॥ संसृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँअपबाधमानः ॥ प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविताराथानां ॥ गोत्रभिदंगोविदंवज्रबाहुंजयंतमज्मप्रमृणंतमोजसा ॥ इमंसजाताअनुवीरयध्वमिंद्रंसखायोनुसंरभध्वं ॥ बलविज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजाजैत्रमिंद्ररथमातिष्ठगोवित् ॥ अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिंद्रः ॥ दुश्च्यवनःपृतनषाडयुध्योस्माकंसेनाअवतुप्रयुत्सु ॥ इंद्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः ॥ देवसेनानामभिभंजतीनांजयंतीनांमरुतोयंत्वग्रे ॥ इंद्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रं ॥ महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ अस्माकमिंद्रःसमृतेषुध्वजेष्वस्माकंयाइषवस्ताजयंतु ॥ अस्माकंवीराउत्तरेभवंत्वस्मानुदेवाअवताहवेषु ॥ उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमहांसि ॥ उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतांमेतुघोषः ॥ उपप्रेतजयतानरःस्थिरावःसंतुबाहवः ॥ इंद्रोवःशर्मयच्छत्वनाधृष्यायथासथ॥अवसृष्टापरापतशरव्येब्रह्मसंशिता॥गच्छमित्रान्प्रविशमैषांकंचनोच्छिषः॥ मर्माणितेवर्मभिश्छादयामिसोमस्त्वाराजामृतेनाभिवस्तां ॥ उरोर्वरीयोवरुणस्तेअस्तुजयंतंत्वामनुमदंतिदे

वाः ॥ यत्रबाणाः संपतंति कुमाराविशिखाइव ॥ इंद्रोनस्तत्रवृत्रहाविश्वाहाशर्मयच्छतु ॥ कवचायहुं ॥ ॐ त्वमग्नेरुद्रोअसुरोमहोदिवः॥त्वꣳशर्धोमारुतंपृक्षईशिषे ॥ त्वंवातैररुणैर्यासिशंगयः ॥ त्वंपूषाविधतः पासिनुत्मना ॥ देवादेवेषुश्रयध्वं ॥ प्रथमाद्वितीयेषुश्रयध्वं ॥ द्वितीयास्तृतीयेषुश्रयध्वं ॥ तृतीयाश्चतुर्थेषुश्रयध्वं ॥ चतुर्थाःपंचमेषुश्रयध्वं ॥ पंचमाःषष्ठेषुश्रयध्वं ॥ षष्ठाःसप्तमेषुश्रयध्वं ॥ सप्तमाअष्टमेषुश्रयध्वं ॥ अष्टमानवमेषुश्रयध्वं ॥ नवमादशमेषुश्रयध्वं ॥ दशमाएकादशेषुश्रयध्वं ॥ एकादशाद्वादशेषुश्रयध्वं ॥ द्वादशास्त्रयोदशेषुश्रयध्वं ॥ त्रयोदशाश्चतुर्दशेषुश्रयध्वं ॥ चतुर्दशाःपंचदशेषुश्रयध्वं ॥ पंचदशाःषोडशेषुश्रयध्वं ॥ षोडशाःसप्तदशेषुश्रयध्वं ॥ सप्तदशाअष्टादशेषुश्रयध्वं ॥ अष्टादशाएकान्नविꣳशेषुश्रयध्वं ॥ एकान्नविꣳशाविꣳशेषुश्रयध्वं ॥ विꣳशाएकविꣳशेषुश्रयध्वं ॥ एकविꣳशाद्वाविꣳशेषुश्रयध्वं ॥ द्वाविꣳशास्त्रयोविꣳशेषुश्रयध्वं ॥ त्रयोविꣳशाश्चतुर्विꣳशेषुश्रयध्वं ॥ चतुर्विꣳशाःपंचविꣳशेषुश्रयध्वं ॥ पचविꣳशाः षड्विꣳशेषुश्रयध्वं॥ षड्विꣳशाःसप्तविꣳशेषु०॥सप्तविꣳशाअष्टाविꣳशेषुश्रयध्वं ॥ अष्टाविꣳशाएकान्नत्रिꣳशेषुश्रयध्वं ॥ एकान्नत्रिꣳशात्रिꣳशेषुश्रयध्वं ॥ त्रिꣳशाएकत्रिꣳशेषुश्रयध्वं ॥ एकत्रिꣳशाद्वात्रिꣳशेषुश्रयध्वं ॥ द्वात्रिꣳशास्त्रयस्त्रिꣳशेषुश्रयध्वं ॥

देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिꣳशाः ॥ उत्तरेभवत ॥ उत्तरवर्त्मानउत्तरसत्वानः ॥ यत्कामइदंजुहोमि ॥ तन्मेसमृध्यतां ॥ वयꣳस्यामपतयोरयीणां ॥ ॐभूर्भुवःस्वः स्वाहाअस्त्रायफट् ॥ ॐहिरण्यगर्भः समवर्तताग्रे भूतस्यजातः पतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ यःप्राणतोनिमिषतोमहित्वैकइद्राजाजगतोबभूव ॥ यईशेअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतांनोभरीमभिः ॥ उपश्वासयपृथिवीमुतद्यांपुरुत्रातेमनुतांविष्ठितंजगत् ॥ संदुंदुभेसजूरिंद्रेणदेवैर्दूराद्दवीयोअपसेधशत्रून् ॥ अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ यातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मात्मानं ॥ अच्छावसूनिकृण्वन्नस्मेनर्यापुरूणि ॥ यज्ञोभूत्वायज्ञमासीदस्वांयोनिं ॥ जातवेदोभुवआजायमानःसक्षय एहि ॥ इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृभिःसंविदानः ॥ आत्वामंत्राःकविशस्तावहंत्वेनाराजन्हविषामादयस्व ॥ उरसाशिरसादृष्ट्यावचसामनसातथा ॥ पद्भ्यांकराभ्यांजानुभ्यांप्रणामोष्टांग उच्यते ॥ प्रजननेब्रह्मातिष्ठतु ॥ पादयोर्विष्णुस्तिष्ठतु ॥ हस्तयोर्हरस्तिष्ठतु ॥ बाव्होरिंद्रस्तिष्ठतु ॥ जठरे

अग्निस्तिष्ठतु ॥ हृदयेशिवस्तिष्ठतु ॥ कंठेवसवस्तिष्ठंतु ॥ वक्त्रेसरस्वतीतिष्ठतु ॥ नासिकयोर्वायुस्तिष्ठतु ॥ नयनयोःसूर्याचंद्रमसौतिष्ठेतां ॥ कर्णयोरश्विनौदेवौतिष्ठेतां ॥ ललाटेरुद्रास्तिष्ठंतु ॥ मूर्ध्न्यादित्यास्तिष्ठंतु ॥ शिरसिमहादेवस्तिष्ठतु ॥ शिखायांचामुंडातिष्ठतु ॥ पृष्ठेपिनाकीतिष्ठतु ॥ पुरतःशूलीतिष्ठतु ॥ पार्श्वयोः शिवाशंकरौतिष्ठेतां ॥ सर्वतोवायुस्तिष्ठतु ॥ ततोबहिःसर्वतोग्निर्ज्वालामालापरिवृतस्तिष्ठंतु ॥ सर्वेष्वंगेषुसर्वादेवतायथायथास्थानानितिष्ठंतु ॥ मांरक्षंतु ॥ यजमानंरक्षंतु ॥ अग्निर्मेवाचिश्रितः ॥ वाग्हृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ वायुर्मेप्राणेश्रितः ॥ प्राणोहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ सूर्योमेचक्षुषिश्रितः ॥ चक्षुर्हृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ चंद्रमामेमनसिश्रितः ॥ मनोहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ दिशोमेश्रोत्रेश्रिताः ॥ श्रोत्रंहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ आपोमेरेतसिश्रिताः ॥ रेतोहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ पृथिवीमेशरीरेश्रिता ॥ शरीरंहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ ओषधिवनस्पतयोमेलोमसुश्रिताः ॥ लोमानिहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ इंद्रोमेबलेश्रितः ॥ बलंहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ पर्जन्योमेमूर्ध्निश्रितः ॥ मूर्धाहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ ईशानोमेमन्यौ

श्रितः ॥ मन्युर्हृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ आत्मामआत्मनिश्रितः ॥ आत्माहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ पुनर्मआत्मापुनरायुरागात् ॥ पुनः प्राणः पुनराकूतमागात् ॥ वैश्वानरोरश्मिभिर्वावृधानः ॥ अंतस्तिष्ठत्वमृतस्यगोपाः ॥ सर्वेष्वंगेषुसर्वादेवतायथायथास्थानानितिष्ठंतु ॥ मांरक्षंतु ॥ यजमानंरक्षंतु ॥ शुद्धस्फटिकसंकाशंत्रिनेत्रंपंचवक्त्रकं ॥ गंगाधरंदशभुजंसर्वाभरणभूषितं ॥ नीलग्रीवंशशांकांकंनागयज्ञोपवीतिनं ॥ व्याघ्रचर्मोत्तरीयंचवरेण्यमभयप्रदं ॥ कमंडल्वक्षसूत्राभ्यामन्वितंशूलपाणिनं ॥ ज्वलंतंपिंगलजटाशिखामुद्योतकारिणं ॥ अमृतेनाप्लुतंहृष्टमुमादेहार्धधारिणं ॥ दिव्यसिंहासनासीनंदिव्यभोगसमन्वितं ॥ दिग्देवतासमायुक्तंसुरासुरनमस्कृतं ॥ नित्यंचशाश्वतंशुद्धंध्रुवमक्षरमव्ययं ॥ सर्वव्यापिनमीशानंरुद्रंवैविश्वरूपिणं ॥ एवंध्यात्वाद्विजःसम्यक्ततोयजनमारभेत् ॥ आराधितोमनुष्यैस्त्वंसिद्धैर्देवासुरादिभिः ॥ आराधयामिभक्त्यात्वांमांगृहाणमहेश्वर ॥ आत्वावहंतुहरयःसचेतसःश्वेतैरश्वैःसहकेतुमद्भिः ॥ वाताजवैर्बलवद्भिर्मनोजवैरायाहिशीघ्रंममहव्यायशर्वोम् ॥ स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं ॥ तावत्त्वंप्रीतिभावेनलिंगेस्मिन्सन्निधोभव ॥ त्र्यंबकंयजामहइत्यावाहनं० ॥ सद्योजातंप्रपद्यामि ॥ आसनं० ॥ सद्योजातायवैनमोनमः ॥ पाद्यं० ॥ भवेभवेनातिभवे अर्घ्यं० ॥ भवोद्भवायनमः ॥ आचमनं० ॥ वामदेवाय० ॥ पंचामृतस्नानं० ॥ आपोहिष्ठेतितृचेनशुद्धोदक

स्नानं ॥ भवंदेवंतर्पयामि॥शर्वंदेवं ० रुद्रंदेवं ० ॥पशुपतिंदेवं ०॥उग्रंदेवं ०॥महान्तंदेवं ० भीमंदेवं ० ईशानंदेवं ०
भवस्यदेवस्यपत्नींतर्पयामि ॥ शर्वस्यदेवस्यपत्नींतर्पयामि ॥ पूर्ववत् ॥ ८ ॥ वामदेवायनमःवस्त्रं० ॥
ज्येष्ठाय० गंधं श्रेष्ठाय० अक्षतान्० ॥ रुद्राय० बिल्वपत्रं० ॥ कालायन० पुष्पं० ॥ कलविकरणाय०
धूपं० ॥ बलविकरणाय० दीपं० ॥ बलाय० नैवेद्यं० ॥ बलप्रमथना० तांबूलं० ॥ सर्वभूतदमनाय
न० दक्षिणां ॥ मनोन्मनाय० नीराजनं० अघोरेभ्यो० मंत्रपुष्पं० तत्पुरुषायविद्महेमहादेवायधीमहि ॥
तन्नोरुद्रःप्रचोदयात् ॥ इत्येकादशवारंरुद्रगायत्रींजपेत् ॥ इति महान्यासः समाप्तः ॥ ॥ ६८ ॥



## ॥ ६९ ॥ ॥ अथ श्रीगुरुचरित्र प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ श्रीदत्तात्रेयगुरवेनमः ॥ ॥ अथध्यानम् ॥ दिगंबरंभक्तसुगंधलेपनंचक्रंत्रिशूलंडमरुंगदांच ॥ पद्मासनस्थंरविसोमनेत्रंदत्तात्रेयध्यानमभीष्टसिद्धिदं ॥ १ ॥ काषायवस्त्रंकरदंडधारिणं कमंडलुंपद्मकरेणशंखं ॥ चक्रंगदाभूषितभूषणाढ्यंश्रीपादराजंशरणंप्रपद्ये ॥ २ ॥ कृतेजनार्दनोदेवस्त्रेतायांरघुनंदनः ॥ द्वापरेरामकृष्णौचकलौश्रीपादवल्लभः ॥ ३ ॥ ॐ नमोजीविघ्नहरा ॥ गजाननागिरिजाकुमरा ॥ जयजयाजीलंबोदरा ॥ एकदंताशूर्पकर्णा ॥ १ ॥ त्रैमूर्तिराजागुरुतूंचिमाझा ॥ कृष्णातीरींवासकरूनिवोजा ॥ सद्भक्ततेथेंकरितीआनंदा ॥ तेसुरस्वर्गींपाहातीविनोदा ॥ २ ॥ जयजयाजीसिद्ध



मुनी ॥ तूंतारकयाभवार्णवीं ॥ संदेहहोतामाझेमनीं ॥ आजितूंवांकडेंकेलें ॥ ३ ॥ ऐसीशिष्याचीविनंती ॥ ऐकोनिसिद्धकायबोलती ॥ साधुसाधुतुझीभक्ती ॥ प्रीतिपावोश्रीगुरुचरणीं ॥ ४ ॥ भक्तजनरक्षणार्थ ॥ अवतारझालाश्रीगुरुनाथ ॥ सगराकारणेंभगीरथ ॥ गंगाआणिलीभूमंडळीं ॥ ५ ॥ तीर्थेंअसतीअपरांपरी ॥ समस्तसांडूनिप्रीतिकरी ॥ कैसापावलाश्रीदत्तात्री ॥ अवतारझालाश्रीपादश्रीवल्लभ ॥ ॥ ६ ॥ ज्यात्वरीअसेश्रीगुरूचीप्रीती ॥ तीर्थमहिमाऐकणेंचित्तीं ॥ वांछाहोतसेज्ञानज्योती ॥ कृपामूर्तियतिराया ॥ ७ ॥ गोकर्णक्षेत्रींश्रीपादयती ॥ राहिलेतीनवर्षेंगुप्ती ॥ तेथूनिश्रीगुरुगिरिपुरायेती ॥ लोकानुग्रहाकारणें ॥ ८ ॥ श्रीपादकुरवपुरींअसतां ॥ पुढेंवर्तलीकैसीकथा ॥ विस्तारोनिसांगआतां ॥ कृपामूर्तिदातारा ॥ ९ ॥ सिद्धह्मणेनामधारकासी ॥ श्रीगुरुमहिमाकायपुससी ॥ अनंतरूपेंपर्येसी ॥ विश्वव्यापकपरमात्मा ॥ १० ॥ सिद्धह्मणेऐकवत्सा ॥ अवतारझालाश्रीपादहर्षा ॥ पूर्ववृत्तांतऐकिलाऐसा ॥ कथासांगीतलीविप्रस्त्रियेची ॥ ११ ॥ श्रीगुरुह्मणतीजननीसी ॥ आह्माऐसानिरोपदेसी ॥ अनित्यशरीरतूंजाणसी ॥ कायभरंवसाजीवित्वाचा ॥ १२ ॥ श्रीगुरुचरित्रकथामृत ॥ सेवितांवांछाअधिकहोत ॥ शमनकरणारसमर्थ ॥ तूंचिएककृपासिंधू ॥ १३ ॥ ऐकोनिशिष्याचेंवचन ॥ संतोषकरीसिद्ध आपण ॥ श्रीगुरुचरित्रकामधेनूजाण ॥ सांगताजाहलाविस्तार ॥ १४ ॥ ऐकशिष्याशिरोमणी ॥ धन्यधन्यतुझीवाणी ॥ तुझीभक्तीश्रीगुरुचरणीं ॥ लीनझालीपर्यंसा ॥ १५ ॥ विनवीशिष्यनामांकित ॥ सि

द्धयोगियातेंपुसत ॥ सांगास्वामीवृत्तांत ॥ श्रीगुरुचरित्रविस्तारें ॥ १६ ॥ ऐकशिष्यानामकरणीं ॥ श्री
गुरुभक्तशिखामणी ॥ तुझीभक्तीश्रीगुरुचरणीं ॥ लीनझालीनिर्धारें ॥ १७ ॥ ध्यानलागलेंश्रीगुरुचर
णीं ॥ तृप्तिनव्हेअंतःकरणीं ॥ कथामृतसंजीवनी ॥ आणीकनिरोपावेंदातारा ॥ १८ ॥ अज्ञानतिमिर
जनित ॥ निजलोंहोतोंमदोन्मत्त ॥ श्रीगुरुचरित्रवचनामृत ॥ प्राशनकेलेंदातारा ॥ १९ ॥ स्वामीनिरो
पिलेंआह्मासीं ॥ श्रीगुरुआलेगाणगापुरासी ॥ गौप्यरूपेंअमरापुरासी ॥ औदुंबरींअसतीजाण ॥ २० ॥
सिद्धह्मणेनामधारका ॥ ब्रह्मचारीकारणिका ॥ उपदेशिलेंज्ञानविवेका ॥ तयेप्रेतजननीसी ॥ २१ ॥
तुझेचरणसंपर्कहोतां ॥ झालेंज्ञानमजआतां ॥ परमार्थीमनऐकतां ॥ झालेंतुझेप्रसादें ॥ २२ ॥ लोटां
गणेंश्रीगुरूसी ॥ जाऊनिराजाभक्तीसी ॥ नमस्कारोनिविनयेसी ॥ एकभावकरोनियां ॥ २३ ॥ शिष्य
वचनपरिसोनी ॥ सांगताझालासिद्धमुनी ॥ ऐकभक्तानामकरणी ॥ श्रीगुरुचरित्रअभिनव ॥ २४ ॥
सिद्धह्मणेऐकबाळा ॥ श्रीगुरूचीअगम्यलीळा ॥ सांगतांनसरेबहुकाळा ॥ सावारणमीसांगतसें ॥ २५॥
श्रीगुरुह्मणतीब्राह्मणासी ॥ नकोभ्रमूंरेयुक्तीसी ॥ वेदांतनकळेब्रह्मयासी ॥ अनंतवेदअसतीजाण ॥
॥ २६ ॥ चतुर्वेदविस्तारेंसी ॥ श्रीगुरुसांगतीविप्रासी ॥ पुढेंकथावर्तलीकैसी ॥ विस्तारावेंदातारा ॥
॥ २७ ॥ नामधारकह्मणेसिद्धासी ॥ पुढीलकथासांगआह्मासी ॥ उल्हासहोतोमाझेमानसीं ॥ श्रीगुरु
चरित्रअतिगोड ॥ २८ ॥ पुढेंकथाकवणेपरी ॥ झालीअसेश्रीगुरुचरित्रीं ॥ निरोपावेंविस्तारीं ॥ सिद्ध

मुनिकृपासिंधू ॥ २९ ॥ श्रीगुरुचरित्रसुधारस ॥ तुह्मींपाजिलाआह्मास ॥ परितृप्तनव्हेगामानस ॥ तृ
षाआणीकहोतसे ॥ ३० ॥ सिद्धह्मणेनामधारका ॥ पुढेंअपूर्वझालेंऐका ॥ योगेश्वरकारणिका ॥ सांगे
स्त्रियांचेस्वधर्म ॥ ३१ ॥ पतिव्रतेचीरीती ॥ सांगेदेवांसीबृहस्पती ॥ सहगमनाचीफलश्रुती ॥ येणेप
रीनिरोपिली ॥ ३२ ॥ श्रीगुरुआलेमठासी ॥ पुढेंकथावर्तलीकैसी ॥ विस्तारोनिआह्मासी ॥ निरोपा
वेंस्वामियां ॥ ३३ ॥ गुरुह्मणतीदंपतीसी ॥ ऐकापाराशरऋषी ॥ तयाकाश्मीररायासी ॥ रुद्राक्षमहिमा
निरोपिला ॥ ३४ ॥ पुढेंकथाकैसीवर्तली ॥ विस्तारोनिसांगवहिली ॥ मनमाझेंअसेवेधलें ॥ श्रीगुरुच
रित्रऐकावया ॥ ३५ ॥ गाणगापुरींअसतांश्रीगुरू ॥ महिमाझालीअपरांपरू ॥ सांगतअसेविस्तारू ॥
तावन्मात्रसांगतसे ॥ ३६ ॥ ऐसाश्रीगुरुदातारू ॥ भक्तजनाकल्पतरू ॥ सांगताझालाआचारू ॥ कृ
पाकरोनिविप्रासी ॥ ३७ ॥ आर्तझालोंमीतृषेचा ॥ घोंटभरविंगाअमृताचा ॥ चरित्रसांगेंश्रीगुरूचें ॥
माझेंमननिवर्विवेगीं ॥ ३८ ॥ सिद्धह्मणेनामधारका ॥ पुढेंअपूर्वझालेंऐका ॥ साठवर्षेंवांझेसीदेखा ॥
पुत्रकंन्याप्रसवली ॥ ३९ ॥ सिद्धह्मणेनामधारका ॥ अपूर्ववर्तलेंआणीकऐका ॥ वृक्षझालाकाष्ठशुष्का ॥
विचित्रकथापरियेसी ॥ ४० ॥ जयजयाजीसिद्धमुनी ॥ तूंतारकभवार्णवीं ॥ नानाधर्मविस्तारोनी ॥ श्री
गुरुचरित्रनिरोपिलें ॥ ४१ ॥ मागेंकथानिरोपिली ॥ सायंदेवशिष्यभले ॥ श्रीगुरुत्यासीनिरोपिले ॥ क
लत्रपुत्रआणिह्मणती ॥ ४२ ॥ श्रीगुरुह्मणतीद्विजासी ॥ याअनंतव्रतासी ॥ सांगेनऐकातुह्मासी ॥ पूर्वी

बहुतींआराधिलें ॥४३॥ श्रीगुरुमाझामल्लिकार्जुन ॥ पर्वतह्मणजेश्रीगुरुभुवन ॥ आपणनयेआतांयेथून ॥ सोडूनिचरणश्रीगुरूचे ॥ ४४ ॥ तूंभेटलासीमजतारक ॥ दैन्यगेलेंसकळहीदुःख ॥ सर्वाभीष्टलाधलें सुख ॥ श्रीगुरुचरित्रऐकतां ॥ ४५ ॥ गाणगापुरींअसतांश्रीगुरू ॥ ख्यातिझालीअपारू ॥ लोकयेती थोरथोरू ॥ भक्तबहुतझालेअसती ॥ ४६ ॥ सांगेनऐकविचित्रकथा ॥ जेणेंहोयपतितपवित्र ॥ ऐसेंहें श्रीगुरुचरित्र ॥ तत्परेसीपर्यसा ॥ ४७ ॥ श्रीगुरुनित्यसंगमासी ॥ जातहोतेअनुष्ठानासी ॥ मार्गीतशू द्रपर्यसी ॥ शेतींआपुल्याउभाअसे ॥ ४८ ॥ त्रैमूर्तीचाअवतार ॥ वेषधारीझालानर ॥ राहिलेप्रीतींगाण गापुर ॥ कवणक्षेत्रह्मणोनियां ॥ ४९ ॥ तेणेंमागीतलावर ॥ राजपदधुरंधर ॥ प्रसन्नझालात्यासीगुरू ॥ दिधलावरपर्यसा ॥५०॥ राजभेटीघेउनी ॥ श्रीपादआलेगाणगाभुवनी ॥ योजनाकरितीआपुलेमनीं ॥ गौ प्यराहावेंह्मणोनी ॥ ५१ ॥ ह्मणेसरस्वतीगंगाधर ॥ श्रोतयांकरितीनमस्कार ॥ कथाऐकेंमनोहर ॥ सक लाभीष्टलाधेलतुह्मां ॥ ५२ ॥ ॥ इतिश्रीगुरुचरित्रकथाकल्पतरुसिद्धनामधारकसंवादेद्विपंचाशत् श्लोकसंख्यासमाप्ता ॥ ॥ श्रीगुरुदत्तात्रेयार्पणमस्तु ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ शुभंभवतु ॥ ॥ ॥ इति गुरुचरित्रं समाप्तं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ७० ॥ ॥ अथ विष्णुसहस्रनाम प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ यस्यस्मरणमात्रेणजन्मसंसारबंधनात् ॥ विमुच्यतेनमस्तस्मैविष्णवेप्रभविष्णवे



॥ १ ॥ ॥ वैशंपायनउवाच ॥ ॥ श्रुत्वाधर्मानशेषेणपावनानिचसर्वशः ॥ युधिष्ठिरःशांतनवंपुनरेवा भ्यभाषत ॥ २ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ किमेकंदैवतंलोकेकिंवाप्येकंपरायणम् ॥ स्तुवंतःकंकम र्चंतःप्राप्नुयुर्मानवाःशुभम् ॥ ३ ॥ कोधर्मःसर्वधर्माणांभवतःपरमोमतः ॥ किंजपन्मुच्यतेजंतुर्जन्मसंसार बंधनात् ॥ ४ ॥ ॥ भीष्मउवाच ॥ ॥ जगत्प्रभुंदेवदेवमनंतंपुरुषोत्तमम् ॥ स्तुवन्नामसहस्रेणपुरु षःसततोत्थितः ॥ ५ ॥ तमेवचार्चयन्नित्यंभक्त्यापुरुषमव्ययम् ॥ ध्यायन्स्तुवन्नमस्यंश्चयजमानस्तमेव च ॥ ६ ॥ अनादिनिधनंविष्णुंसर्वलोकमहेश्वरम् ॥ लोकाध्यक्षंस्तुवन्नित्यंसर्वदुःखातिगोभवेत् ॥ ७ ॥ ब्रह्मण्यंसर्वधर्मज्ञंलोकानांकीर्तिवर्धनम् ॥ लोकनाथंमहद्भूतंसर्वभूतभवोद्भवम् ॥ ८ ॥ एषमेसर्वधर्माणांध र्मोऽधिकतमोमतः ॥ यद्भक्त्यापुंडरीकाक्षंस्तवैरर्चेन्नरःसदा ॥ ९ ॥ परमंयोमहत्तेजःपरमंयोमहत्तपः ॥ प रमंयोमहद्ब्रह्मपरमंयःपरायणम् ॥ १० ॥ पवित्राणांपवित्रंयोमंगलानांचमंगलम् ॥ दैवतंदेवतानांचभूता नांयोऽव्ययःपिता ॥ ११ ॥ यतःसर्वाणिभूतानिभवंत्यादियुगागमे ॥ यस्मिंश्चप्रलयंयांतिपुनरेवयुगक्षये ॥ १२ ॥ तस्यलोकप्रधानस्यजगन्नाथस्यभूपते ॥ विष्णोर्नामसहस्रंमेशृणुपापभयापहम् ॥ १३ ॥ यानिनामानिगौणानिविख्यातानिमहात्मनः ॥ ऋषिभिःपरिगीतानितानिवक्ष्यामिभूतये ॥ १४ ॥ ॥ अ स्यश्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमंत्रस्य ॥ भगवान्वेदव्यासऋषिः ॥ श्रीविष्णुःपरमात्मादेवता ॥ अनु ष्टुप्छंदः ॥ अमृतांशूद्भवोभानुरितिबीजम् ॥ देवकीनंदनःस्रष्टेतिशक्तिः ॥ त्रिसामासामगःसामेतिहृदयं

शंखभृन्नंदकी चक्रीतिकीलकम् ॥ शार्ङ्गधन्वागदाधरइत्यस्त्रम् ॥ रथांगपाणिरक्षोभ्यइतिकवचम् ॥ उद्भ
वःक्षोभणोदेवइतिपरमोमंत्रः ॥ श्रीमहाविष्णुप्रीत्यर्थेजपेविनियोगः ॥ ॥ अथन्यासः ॥ ॥ वि
श्वंविष्णुर्वषट्कारइत्यंगुष्ठाभ्यांनमः ॥ अमृतांशूद्भवोभानुरितितर्जनीभ्यांनमः ॥ ब्रह्मण्योब्रह्मकृद्ब्रह्मेतिम
ध्यमाभ्यांनमः ॥ सुवर्णबिंदुरक्षोभ्यइत्यनामिकाभ्यांनमः ॥ निमिषोनिमिषस्त्रग्वीतिकनिष्ठिकाभ्यांनमः ॥
रथांगपाणिरक्षोभ्यइतिकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादिन्यासः ॥ ॥ अथध्यानम् ॥ ॥ शांता
कारंभुजगशयनंपद्मनाभंसुरेशंविश्वाधारंगगनसदृशंमेघवर्णंशुभांगम् ॥ लक्ष्मीकांतंकमलनयनंयोगिभि
र्ध्यानगम्यंवंदेविष्णुंभवभयहरंसर्वलोकैकनाथम् ॥ १ ॥ ॥ इतिध्यानं ॥ ॥ विश्वंविष्णुर्वषट्कारो
भूतभव्यभवत्प्रभुः ॥ भूतकृद्भूतभृद्भावोभूतात्माभूतभावनः ॥ १ ॥ पूतात्मापरमात्मा चमुक्तानांपरमाग
तिः ॥ अव्ययःपुरुषःसाक्षीक्षेत्रज्ञोऽक्षरएवच ॥ २ ॥ योगोयोगविदांनेताप्रधानपुरुषेश्वरः ॥ नारसिंहव
पुःश्रीमान्केशवःपुरुषोत्तमः ॥ ३ ॥ सर्वःशर्वःशिवःस्थाणुर्भूतादिर्निधिरव्ययः ॥ संभवोभावनोभर्ताप्रभ
वःप्रभुरीश्वरः ॥ ४ ॥ स्वयंभूःशंभुरादित्यःपुष्कराक्षोमहास्वनः ॥ अनादिनिधनोधाताविधाताधातुरुत्तमः
॥ ५ ॥ अप्रमेयोहृषीकेशःपद्मनाभोऽमरप्रभुः ॥ विश्वकर्मामनुस्त्वष्टास्थविष्ठःस्थविरोध्रुवः ॥ ६ ॥ अ
ग्राह्यःशाश्वतःकृष्णोलोहिताक्षःप्रतर्दनः ॥ प्रभूतस्त्रिककुब्धामपवित्रंमंगलंपरम् ॥ ७ ॥ ईशानःप्राणदः
प्राणोज्येष्ठःश्रेष्ठःप्रजापतिः॥हिरण्यगर्भोभूगर्भोमाधवोमधुसूदनः ॥८॥ ईश्वरोविक्रमीधन्वीमेधावीविक्रमःक्र



मः ॥ अनुत्तमोदुराधर्षःकृतज्ञःकृतिरात्मवान् ॥ ९ ॥ सुरेशःशरणंशर्मविश्वरेताःप्रजाभवः ॥ अहःसंव
त्सरोव्यालःप्रत्ययःसर्वदर्शनः ॥ १० ॥ अजःसर्वेश्वरःसिद्धःसिद्धिःसर्वादिरच्युतः ॥ वृषाकपिरमेयात्मा
सर्वयोगविनिःसृतः ॥ ११ ॥ वसुर्वसुमनाःसत्यःसमात्मासंमितःसमः ॥ अमोघःपुंडरीकाक्षोवृषकर्मावृ
षाकृतिः ॥ १२ ॥ रुद्रोबहुशिराबभ्रुर्विश्वयोनिःशुचिश्रवाः ॥ अमृतःशाश्वतःस्थाणुर्वरारोहोमहातपा० ॥
॥ १३ ॥ सर्वगःसर्वविद्भानुर्विष्वक्सेनोजनार्दनः ॥ वेदोवेदविदव्यंगोवेदांगोवेदवित्कविः ॥ १४ ॥
लोकाध्यक्षःसुराध्यक्षोधर्माध्यक्षःकृताकृतः ॥ चतुरात्माचतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥ भ्राजिष्णु
र्भोजनंभोक्तासहिष्णुर्जगदादिजः ॥ अनघोविजयोजेताविश्वयोनिःपुनर्वसुः ॥ १६ ॥ उपेंद्रोवामनःप्रां
शुरमोघःशुचिरूर्जितः ॥ अतींद्रःसंग्रहःसर्गोभूतात्मानियमोयमः ॥ १७ ॥ वेद्योवैद्यःसदायोगीवीरहामा
धवोमधुः ॥ अतींद्रियोमहामायोमहोत्साहोमहाबलः॥१८॥महाबुद्धिर्महावीर्योमहाशक्तिर्महाद्युतिः ॥अनिर्दे
श्यवपुःश्रीमानमेयात्मामहाऽद्रिधृक् ॥ १९ ॥ महेष्वासोमहीभर्ताश्रीनिवासःसतांगतिः ॥ अनिरुद्धःसु
रानंदोगोविंदोगोविदांपतिः ॥ २० ॥ मरीचिर्दमनोहंसःसुपर्णोभुजगोत्तमः ॥ हिरण्यनाभःसुतपाःपद्मना
भःप्रजापतिः ॥ २१ ॥ अमृत्युःसर्वदृक्सिंहःसंधातासंधिमान्स्थिरः ॥ अजोदुर्मर्षणःशास्ताविश्रुतात्मासु
रारिहा ॥ २२ ॥ गुरुर्गुरुतमोधामसत्यःसत्यपराक्रमः ॥ निमिषोऽनिमिषःस्रग्वीवाचस्पतिरुदारधीः ॥
॥ २३ ॥ अग्रणीर्ग्रामणीःश्रीमान्न्यायोनेतासमीरणः ॥ सहस्रमूर्धाविश्वात्मासहस्राक्षःसहस्रपात् ॥

वास्तोष्पतिमावाहयामि ॥ स्थापयामि ॥ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तं ॥ अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥ गृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूनूलभतेगृहानैवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा ॥ सुप्रतिष्ठितमस्तुसुमुहूर्तमस्तु ॥ ततोमंडलाद्बहिःईशानादिकोणेषुचरक्यादीन्स्थापयेत् ॥ ततःप्रागाद्यष्टदिक्षुइंद्रादींस्तत्तन्नाममंत्रैर्नामभिर्वासंस्थाप्यमंडलाद्बहिः ॥ ततोआवाहितदेवतानांषोडशोपचारैःसंपूज्य ॥ ईशान्यांकलशस्थापनं ॥ ॐमहीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतांनोभरीमभिः ॥ इतिकलशस्थापनं ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानऽआयुःप्रमोषीः ॥ इतिवरुणमावाहयेत् ॥ वरुणायनमः ॥ गंधंपुष्पंधूपंदीपंनैवेद्यंदक्षिणांमंत्रपुष्पंस० अनेनपूजनेनवरुणःप्रीयताम् ॥ ततोन्वाधानंकुर्यात् ॥ देशकालौस्मृत्वासनवग्रहमखवास्तुशांतिहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजापतिंप्रजापतिंचाघारदेवतेअग्नीषोमौचक्षुषीआज्येन ॥ अत्रप्रधानं ॥ सवितारं ॥ रुद्रं ॥ अग्निं ॥ सोमं ॥ उमां ॥ अपःअंगारकं ॥ स्कंदं ॥ भूमिं ॥ वुधं ॥ नारायणं ॥ विष्णुं ॥ वृहस्पतिं ॥ इंद्रं ॥ ब्रह्माणं ॥ शुक्रं ॥ इंद्रं ॥ इंद्राणीं ॥ शनिं ॥ यमं ॥ प्रजापतिं ॥ राहुं ॥ कालं ॥ सर्पान् ॥ केतुं ॥ चित्रगुप्तं ॥ ब्रह्माणं ॥

॥ २७ ॥ एताःनवग्रहप्रधानदेवताः ॥ अष्टाविंशत्यष्टाविंशतिसंख्याकाभिःसमित्तिलचर्वाज्याहुतिभिः ॥ अधिदेवताःप्रत्यधिदेवताश्चअष्टाष्टसंख्यकाभिः ॥ विनायकादीन्अष्टैलोकपालांश्चप्रतिद्रव्येणचतुश्चतुःसंख्याकाभिःतैरेवद्रव्यैः ॥ शिख्यादिपंचचत्वारिंशद्देवताःअष्टाविंशत्यष्टभिर्वासंख्याकाभिःप्रत्येकं ॥ प्रतिद्रव्येण ॥ औदुंबरसमित्तिलपायसाज्याहुतिभिः ॥ वास्तोष्पतिं ॥ वास्तोष्पतइतिचतसृभिर्ऋग्भिः ॥ ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवोभवानः ॥यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या ॥ पाहिक्षेमऽउतयोगेवरंनोयूयंपातःस्वस्तिभिःसदानः ॥ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः ॥ वास्त्कंवास्तोष्पतिरितिचतसृभिः ॥ वास्तोष्पतेध्रुवास्थूणामित्यनयाचक्रमेणपंचैकान्यतरसंख्याकाभिःपंचबिल्वतद्बीजाहुतिभिर्वाचरक्यादीन्प्रत्येकं ॥ अष्टभिःचतसृभिर्वासंख्याकाभिः ॥ इंद्राद्यष्टैलोकपालान्द्विर्द्विसंख्याकाभिः ॥ प्रत्येकंसमित्तिलपायसाज्याहुतिभिर्यक्ष्ये ॥ शेषेणस्विष्टकृतमग्निमिध्मसंनहनेनरुद्रमयासमग्निंदेवान्विष्णुंअग्निंवायुंसूर्यंप्रजापतिंचैताःप्रायश्चित्तदेवताअज्येनज्ञाताज्ञातदोषनिबर्हणार्थंत्रिमारमग्निंमरुतश्चाज्येनाविश्वान्देवान्संस्रावेणअंगदेवताःप्रधानदेवताःसर्वाःसंनिहिताःसंतुएवंसांगोपांगेनकर्मणासद्योयक्ष्ये ॥ व्याहृतीनांपर

मेष्ठीप्रजापतिःप्रजापतिर्बृहती॥अन्वाधानसमिद्धोमेविनियोगः ॥ॐ भूर्भुवःस्वःस्वाहा॥ प्रजापतयइदंनमम ॥अन्वाधायपरिसमुह्य ॥ परिस्तीर्य ॥ अग्नेरीशानतस्त्रिरंभसापरिषिच्य ॥ उत्तरास्तीर्णेषुदर्भेषुदक्षिणसव्य पाणिभ्यांक्रमेणचरुस्थालीप्रोक्षण्यौदर्वीस्रुवौप्रणीताआज्यपात्रेइध्माबर्हिषी ॥ प्रोक्षणीपात्रमुत्तानंकृत्वा ॥ तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रकुशद्वयरूपेपवित्रेनिधाय ॥ शुद्धाभिरद्भिस्तत्पात्रंपूरयित्वा॥ गंधपुष्पाक्षतादिक्षिप्त्वा ॥ हस्तयोरंगुष्ठोपकनिष्ठिकाभ्यामुदगग्रेपृथक्पवित्रेधृत्वा ॥ अपस्त्रिरुत्पूयपात्राण्युत्तानानिकृत्वा ॥ इध्मंविस्रस्य ॥ सर्वाणिपात्राणित्रिःप्रोक्षयेत् ॥ ताअपःकिंचित्कमंडलौक्षिपेदित्येके ॥ प्रणीतापात्रमग्नेःप्रत्यङ्निधाय ॥ तत्रपवित्रेनिधाय ॥ उत्पूताभिरद्भिस्तत्पात्रंपूरयित्वा ॥ गंधपुष्पाक्षतान्निक्षिप्य ॥ मुखसममुद्धृत्य ॥ अग्नेरुत्तरतोदर्भेषुनिधाय ॥ तत्पात्रंपुरतःसंस्थाप्य ॥ तस्मिन्नाज्यमासिच्य॥ अग्नेरुत्तरतःस्थितांगारान्भस्मनासहाग्नेदरुक्परिस्तरणाद्बहिर्निरूह्यतेष्वाज्यपात्रमधिश्रित्य ॥ ज्वलतादर्भोल्मुकेनावज्वल्य ॥ अंगुष्ठपर्वमात्रंप्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्य ॥ पुनर्ज्वलतातेनैवदर्भोल्मुकेनचरुणासहाज्यंत्रिःपर्यग्निकृत्वा ॥ तदुल्मुकंनिरस्यापस्पृष्ट्वा ॥ तत्रस्थमेवाज्यं ॥ सवितुष्ट्वाहिरण्यस्तूपःसवितापुरउष्णिक् ॥ आज्यस्योत्पवनेविनियोगः ॥ॐसवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः॥ प्रा० तिसकृन्मंत्रेणद्विस्तूष्णीं ॥ ॐ स्कंदायस्वाहा ॥ स्कंदायइदंनमम ॥ आत्मनोग्रतोभूमिंप्रोक्ष्य ॥ तत्र बर्हिःसंनहनींरज्जुमुदगग्रांप्रसार्य ॥ तत्राज्यस्थापनं ॥ स्रुवादिसंमार्जयेत् ॥ दक्षिणहस्तेनस्रुक्स्रुवौगृहीत्वा ॥ सव्येनकांश्चिद्दर्भानादाय ॥ सहैवाग्नौप्रताप्य ॥ स्रुचंनिधाय ॥ दक्षिणहस्तेनस्रुवस्यबिलंदर्भाग्रैःप्रागादिप्रागपवर्गंत्रिःसम्मृज्य ॥ अधस्ताद्दर्भाग्रेणैवाभ्यात्मंबिलपृष्ठंत्रिःसम्मृज्यततोदर्भाणांमूलैर्दंडस्याधस्ताद्बिलपृष्ठादारभ्ययावदुपरिष्टाद्बिलंतावत्त्रिः मृसज्य अद्भिः प्रोक्ष्य ॥ स्रुवंनिष्टप्य ॥ आज्यस्थाल्युत्तरतः ॥ स्रुवंसंस्पृष्टंनिधायोदकंस्पृष्ट्वा ॥ तैरेवदर्भैर्जुहूं चैवमेवसम्मृज्य ॥ स्रुवादुत्तरतोनिधाय ॥ दर्भानद्भिःक्षालयित्वा ॥ अग्नावनुप्रहरेत् ॥ ततःविश्वानिनइत्यनयोर्वसुश्रुतोग्निस्त्रिष्टुप् ॥ अग्न्यर्चनेविनियोगः ॥ ॐ विश्वानिनोदुर्गहाजातवेदः ॥ ॐ सिंधुन्नुनावादुरितातिपर्षि ॥ ॐ अग्नेऽअत्रिवन्नमसागृणानः ॥ ॐ अस्माकंबोध्यविताततनूनां ॥ ॐ यस्त्वाहृदाकीरिणामन्यमानः ॥ ॐ अमर्त्यंमर्त्योजोहवीमि ॥ ॐ जातवेदोयशोऽअस्मासुधेहि ॥ ॐ प्रजाभिरग्नेऽअमृतत्वमश्यां ॥ ॐ यस्मैत्वंसुकृतेजातवेदऽउलोकमग्नेकृणवस्योनं॥अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिन्नंशतेस्वस्ति ॥आत्मानंचालंकृत्य ॥हस्तंप्रक्षाल्य॥ इध्मबंधनरज्जुमिध्मस्थानेनिधाय ॥ पाणिनेध्ममादाय ॥ मूलमध्याग्रेषुस्रुवेणत्रिरभिघार्य ॥ मूलमध्ययोर्मध्यभागेगृहीत्वा ॥ अयंतेगौतमोवामदेवोजातवेदाअग्निस्त्रिष्टुप् ॥ इध्महवनेविनियोगः ॥ ॐ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्व चेद्धवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा ॥ जातवेदसेग्नयइदंनमम ॥ ततःस्रुवेणाज्यमादाय ॥ वायव्यकोणमारभ्याग्नेयकोणपर्यंतंॐप्रजापतयेस्वाहा॥प्रजापतयइदंन

मम ॥ पुनराज्यमादाय ॥ नैर्ऋत्यकोणमारभ्यईशानकोणपर्यंतं ॥ ॐ प्रजापतयेस्वाहा ॥ ॐ प्रजापतय
इदंनमम ॥ उत्तरस्यां ॥ॐ अग्नयेस्वाहा ॥अग्नयइदंनमम ॥ दक्षिणस्यां ॥ ॐ सोमायस्वाहा॥सोमयइदं
नमम॥इत्याज्यभागातंकृत्वा ॥प्रधानहोमंकुर्यात् ॥ यजमानः इदंउपकल्पितहवनीयद्रव्यंयायायक्ष्यमाणदेव
तास्ताभ्यस्ताभ्यः मयापरिकल्पितंनमम ॥ ततःऋत्विग्भिः॥पूर्वोक्तमंत्रैर्ग्रहादिक्रमेणाशिख्यादिदेवताभ्यश्चवा
स्तोष्पतिंवास्तुंचचरक्यादीन्अन्वाधानोक्तद्रव्यैःक्रमेणजुहुयात् ॥ आचार्यः स्विष्टकृदादिप्रायश्चित्तहो
मांतंकृत्वा ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ७५ ॥ ॥ वास्तुशांत्यंतर्गत बलिदान प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अद्यपूर्वोच्चरितदेशकालौसंकीर्त्य ॥ वास्तुशांत्यंगत्वेनबलिदानंकरिष्ये ॥ इतिसं
कल्प ॥ इंद्रंवोमधुच्छंदाइंद्रोगायत्री ॥ इंद्रप्रीत्यर्थेबलिदानेविनियोगः॥ॐ इंद्रंवोविश्वतःस्परिहवामहेजने
भ्यः ॥ अस्माकमस्तुकेवलः॥इंद्रायसांगायसपरिवारायसायुधायसशक्तिकायअमुंसदीपमाषभक्तबलिंसमर्प
यामि ॥ भोइंद्रइमंबलिंभक्षममयजमानस्यवाआयुःकर्ताक्षेमकर्ताकल्याणकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्ता
ऋद्धिकर्तानिर्विघ्नकर्ताभव ॥ अनेनबलिदानेनइंद्रःप्रीयतां॥अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री॥ अग्निप्रीत्य
र्थेबलिदानेवि० ॥ ॐ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥ अग्नयेसांगाय० ॥

भोअग्नेइमं० ॥भव॥अनेनबलिदानेनअग्निः प्रीयतां॥यमायसोमंवैवस्वतोयमोयमोनुष्टुप्॥यमप्रीत्यर्थेबलिदा
ने० ॥ ॐ यमायसोमंसुनुतयमायजुहुताहविः ॥ यमंहयज्ञोगच्छत्यग्निर्दूतोऽअरंकृतः॥ यमायसांगाय० ॥
भोयमइमं० ॥ भव ॥ अनेनबलिदानेनयमः प्रीयतां ॥ मोषणोघौरःकाण्वःकालोगायत्री ॥ कालप्रीत्य
र्थेबलिदानेविनियोगः ॥ ॐ मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् ॥ पदीष्टतृष्णयासह ॥कालायसांगाय० ॥
भोकालइमं०॥ भव ॥ अनेनबलिदानेनकालः प्रीयतां॥त्वन्नोअग्नेवामदेवोवरुणस्त्रिष्टुप् ॥ वरुणप्रीत्यर्थे
बलिदानेविनियोगः॥ॐत्वंन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेळोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचा
नोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत् ॥ वरुणायसांगाय० ॥ भोवरुणइमं० ॥ भव० ॥ अनेन० वरुणःप्री
यतां ॥ तववायोव्यश्वांगिरसोवायुर्गायत्री ॥ वायुप्रीत्यर्थेबलिदाने० ॥ ॐ तववायवृतस्पतेत्वष्टुर्जामातर
द्भुत ॥ अवांस्यावृणीमहे ॥ वायवेसांगाय० ॥ भोवायोइमं० ॥ भव ॥ अनेनबलिदानेनवायुःप्रीयतां ॥
सोमोधेनुंगौतमःसोमस्त्रिष्टुप् ॥ सोमप्रीत्यर्थेबलिदाने० ॥ ॐ सोमोधेनुंसोमोऽअर्वंतमाशुंसोमोवीरंकर्मण्यंद
दाति ॥ सादन्यंविदथ्यंसभेयंपितृश्रवणंयोददाशदस्मै॥सोमायसांगाय०॥भोसोमइमं० ॥ भव ॥ अनेनब
लिदानेनसोमःप्रीयतां ॥ तमीशानंगौतमोवामदेवईजानोजगती ॥ ईशानप्रीत्यर्थेबलिदाने० ॥ ॐ तमीशानं
जगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ईशाना

य० ॥ भोईशानइमं० ॥ अनेनबलिदानेनईशानःप्रीयतां ॥ इतिअष्टौलोकपालान्बलिंदत्वा ॥ आदित्प्र
त्नस्यवस्त्रोंतरिक्षआकाशोगायत्री ॥ आकाशप्रीत्यर्थेबलिदाने० ॥ ॐ आदित्प्रत्नस्यरेतसोज्योतिंष्पश्यंति
वासरं ॥ परोयदिध्यतेदिवा ॥ आकाशयसांगाय० ॥ भोआकाशइमं० ॥ अनेनबलि० आकाशःप्री
यतां ॥ स्योनापृथिवीकाण्वोमेधातिथिर्भूमिर्गायत्री ॥ भूमिप्रीत्यर्थेबलि० ॥ ॐ स्योनापृथिवीभवानृक्षरा
निवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ भूम्यैसांगायै ॥ भोभूमेइमं० ॥ अनेनबलिदानेनभूमिःप्रीयताम् ॥
आदित्यादिनवग्रहेभ्यःसांगेभ्यःसपरिवारेभ्यःसायुधेभ्यःसशक्तिकेभ्यःअमुंसदीप० मि ॥ भोआदित्यादि
नवग्रहदेवताःअमुंबलिंभक्षतदिशंरक्षतममआयुःकर्त्र्यः क्षेमकर्त्र्यः कल्याणकर्त्र्यःशांतिक० भवत ॥ अ
नेनबलिदानेननवग्रहदेवताःप्रीयंतां ॥ ततःक्षेत्रपालबलिंदत्वा ॥ क्षेत्रपालायनमइतिगंधादिभिरभ्यर्च्य ॥
ॐ क्षेत्रस्यपतिनावयंहितेनेवजयामसि ॥ गामश्वंपोषयित्न्वासनोमृळातीदृशे॥इतिमंत्रपुष्पं० ॥ क्षेत्रस्यप
तिनावामदेवःक्षेत्राधिपतिरनुष्टुप् ॥ क्षेत्रपालप्रीत्यर्थेबलिदाने०॥ॐ क्षेत्रस्यपति०॥ क्षेत्रपालायसांगाय० ॥
भोभोक्षेत्रपाल०॥बलिंगृण्हंतुमेदेवाआदित्यावसवस्तथा ॥ मरुतश्चाश्विनौरुद्राःसुपर्णःपन्नगाग्रहाः ॥ असु
रायातुधानाश्चपिशाचोरगराक्षसाः ॥ डाकिन्योयक्षवेतालायोगिन्यःपूतनाशिवा ॥ जृंभकाःसिद्धगंधर्वामा
याविद्याधरानगाः ॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥जगतांशांतिकर्तारोब्रह्माद्याश्चैत्रमातरः॥
माविघ्नंमाचमेपापंमासंतुपरिपंथिनः ॥ सौम्याभवंतुतृप्तास्तेभूतप्रेतसुखावहाः ॥ अनेनबलिदानेनक्षेत्रपा

लःप्रीयतां ॥ ततोबलिंमंडपाद्बहिःअन्येननीत्वायजमानःशांतापृथिवीशिवमंतरिक्षंद्यौर्नोदेव्यभयन्नो ऽअस्तु॥
शिवादिशःप्रदिशउद्दिशोनआपोविद्युतःपरिपांतुसर्वतः ॥ शांतिःशांतिःशांतिः ॥ इतिमंत्रेणजलंसिंचेत् ॥
ततःपृष्ठतःअनवेक्षमाणःगृहद्वारेहस्तौपादौप्रक्षाल्याचम्यगृहंप्रवेशयेत् ॥ आचम्यप्राणानायम्य ॥ अद्येत्या
दि० र्थमयाकृतस्यआचार्यद्वारावास्तुशांतिहवनाख्यस्यक० तत्सांगतासिध्यर्थंसंपूर्णफलप्राप्त्यर्थंसर्वंकर्मप्र
पूरिणींभद्रद्रव्यदांआज्येनपूर्णाहुतिंहोष्ये ॥ मूर्धानंबार्हस्पत्योभारद्वाजोवैश्वानरस्त्रिष्टुप्॥पूर्णाहुतिहोमेविनि
योगः ॥ ॐ मूर्धानंदिवोऽअरतिंपृथिव्यावैश्वानरमृतऽआजातमग्निं ॥ कविंसम्राजमतिथिंजनानामासन्नापात्रं
जनयंतदेवाःस्वाहा ॥ वैश्वानरायइदंनमम ॥ विश्वेभ्योदेवेभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदंनमम॥
इतिसंस्रावंहुत्वा ॥ बर्हिषिपूर्णपात्रमितिकर्मशेषंसमाप्य ॥ वास्तुमंडलपश्चिमदेशेशिखिनेएषपायसबलि
र्नममेति ॥ एवंशिख्यादिभ्योपायसबलीन्दद्यात् ॥ विप्राःघृतपायसेनक्षत्रियादयःवक्ष्यमाणैःपक्वैस्तदलाभे
पायसेनेतिततश्चरक्यादिभ्योतथैवमाषभक्तबलीन्दद्यात् ॥ ततआचार्यादयःशांतिकलशोदकंताम्रपात्रेगृही
त्वा॥समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् ॥ अभिषेकेविनियोगः ॥ ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्
पुनानायंत्यनिविशमानाः॥ इंद्रोयावज्रीवृषभोरराद्ताऽआपोदेवीरिहमामवंतु ॥ याऽआपोदिव्याऽउतवास्र
वंतिखनित्रिमाऽउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताऽआपोदेवीरिहमामवंतु ॥ यासांराजा

वरुणोयातिमध्येसत्यानृतेऽअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ताऽआपोदेवीरिहमामवंतु ॥
यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताऽआपोदेवीरिहमामवंतु ॥
इतिवैदिकैः ॥ सुरास्त्वादिपौराणैश्चमंत्रैर्यजमानंसपत्नीकमभिषिच्य ॥ सर्वौषधिभिरनुलिप्यस्नापयेयुः ॥
सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणेविभुः ॥ प्रद्युम्नःश्चानिरुद्धश्चभ
वंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणःपवनश्चैवधनाध्यक्षःस्तथाशिवः ॥
ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा ॥ कीर्तिर्लक्ष्मीधृतिर्मेधापुष्टिश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुः
शांतिः क्षांतिःतुष्टिश्चमातरः ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः॥आदित्यश्चंद्रमाभौमोबुधजीवसि
तार्कजाः ॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुःश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमुन
योगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाह
नानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वाम
भिषिंचंतुसर्वकामार्थसिद्धये ॥ अभिषेकवस्त्रंआचार्यायदेयं ॥ ततःआचार्योब्रह्मस्थानेसुरूपांभूषितांपृथि
वींध्यात्वा ॥ धरायैनमःइतिमंत्रेणषोडशोपचारैः संपूज्यजपेत् ॥ सर्वदेवमयंवास्तुत्वासुदेवमयंपरं ॥
इति ॥ ततःपूर्वदिक्तः गृहंत्रिसूत्र्यापावमानेनसूक्तेनराक्षोघ्नेनचवेष्टयेत् ॥ छिन्नेसूत्रेअशुभं ॥ ततोदुग्धपूर्ण



याजलपूर्णयाचसच्छिद्रकुंभ्यातेनैवसूक्तद्वयेनधाराद्वयमविच्छिन्नंकुर्यात् ॥ अथयजमानोगृहस्याग्नेय्यांआ
काशपदेजानुमात्रदघ्नमवटंगर्तंखात्वागोमयेनोपलिप्य ॥ शुक्लचंदनपुष्पाक्षतादिभिरलंकृत्यशाल्यादिसप्त
बीजानिदध्योदनंचप्रक्षिप्यनवकुंभंजलपूर्णशुक्लैकपुष्पयुतंगंधादिभिरर्चितंहस्तद्वयेनादायजानुनीअवन्यां
कृत्वा ॥ ॐनमोवरुणायेतितज्जलेनगर्तंपूरयेत् ॥ तत्रावर्तेप्रदक्षिणेचोर्ध्वमुखेशुभं ॥ वैपरीत्येत्वशुभंफलं
विद्यात् ॥ ततोमृन्निर्मितपेटिकायांसप्तबीजानिदध्योदनशैवालफलपुष्पाणिप्रक्षिप्य ॥ पूर्वस्थापितंवृषवा
स्तुंतूर्यमंगलघोषेणानीयतस्यांपेटिकायांसंस्थाप्यगंधादिभिः संपूज्यप्रार्थयेत्द्वाभ्यां ॥ पूजितोसिमयावास्तो
होमाद्यैरर्चनैःशुभैः ॥ प्रसीदपाहिविश्वेशदेहिमेगृहजंसुखं ॥१॥ वास्तुरूपनमस्तेस्तुभूशय्याभिरतप्रभो ॥
मद्गृहंधनधान्यादिसमृद्धंकुरुसर्वदा ॥ २ ॥ ततःपेटिकामाच्छाद्य ॥ तस्मिन्गर्तेशनैःशनैर्निक्षिपेदनेनमंत्रे
ण ॥ सशैलसागरांपृथ्वींयथावहासिमूर्धनि ॥ तथामांवहुकल्याणंसंपत्संततिभिःसहेति ॥ गर्तेवतथैवमृ
दापूरितेमृदाधिक्येउत्तमं ॥ न्यूनत्वेतुअधमंफलंविद्यात् ॥ ततः अग्नेः पश्चिमतः श्रेयः संपाद्याचार्यंसंपू
ज्य ॥ अलंकृतांसवत्सांगांवासोयुग्मंदक्षिणांचदत्वा ॥ ब्रह्मर्त्विग्भ्योयथाशक्तिदक्षिणादिदत्वा ॥ यस्यस्मृ
त्येतिक्षमाप्य ॥ ॐ उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवऽइंद्रप्राशूर्भवासचा ॥ यां
तुदेवगणाःसर्वेपूजामादायपार्थिवीं ॥ इष्टकामप्रसिध्यर्थंपुनरागमनायच ॥ इतिमंत्रैर्विसृज्यइदंनवग्रह

देवतापूजापीठंवास्तुमंडलपूजापीठंचआचार्यायतुभ्यमहंसंप्रददे ॥ ततोयजमानः अग्निंपंचोपचारैःपूजयेत् ॥ मानस्तोकेतिकुत्सोरुद्रोजगती ॥ विभूतिधारणेविनियोगः ॥ ॐ मानःस्तोकेतनयेमानऽआयौमानोगोषुमानोऽअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतः सदमित्त्वाहवामहे ॥ इतिमंत्रेणविभूतिधारणंकृत्वा ॥ ओंचमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ स्वस्तिश्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहनोत्तमइति॥ अनेनवास्तुशांतिहोमेनकर्मणायज्ञरूपीपरमेश्वरःप्रीयतां ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ एतत्कर्मणःसांगतासिध्यर्थंग्रहादीनांशिखादीनांचप्रत्येकंत्रीन्एकैकंवायथाशक्तिब्राह्मणान्संभोज्य॥आशिषोगृहीत्वासुहृद्युतोभुंजीत॥ब्राह्मणैःशांतिंपठित्वाशिवंवास्तुशिवंवास्तुशिवंवास्त्वितिवाचयित्वा॥गच्छगच्छेतिअग्निंविसृज्य॥गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥ एवंप्रथमेहनिवास्तुशांतिंविधायद्वितीयेह्निगृहप्रवेशंकुर्यात् ॥ सचेत्थं ॥ यजमानः नवंकलशंजलपूर्णंपल्लवोपेतंदूर्वायुतंसुधालिप्तंवस्त्रवेष्टितंसपूर्णपात्रंसफलंअंजलिनागृहीत्वा ॥ ब्राह्मणान्वितःसदारपुत्रः मंगलतूर्यघोषेणगृहंप्रविश्यप्रधानगृहमध्येधान्योपरितंकलशंस्थापयेत् ॥ कनिक्रदज्जनुषमितिऋचंसूक्तंपठेत् ॥ ॐ कनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावं ॥ सुमंगलश्चशकुनेभवासिमात्वा काचिदभिभाविश्व्याविदत् ॥ मास्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोऽअस्ता ॥ पित्र्यामनुप्रदिशंकनिक्रदत्सुमंगलोभद्रवादीवदेह ॥ अवक्रंदद्दक्षिणतोगृहाणांसुमंगलोभद्रवादीशकुंते ॥ मानस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ ततोगृहस्थैर्यार्थंपुण्याहंवाचयित्वा ॥ ब्राह्मणान्संपूज्य ॥ भोजयित्वाभूयसींदक्षिणांचदत्त्वाआशिषोगृण्हीयत् ॥ इतिदिनकरभट्टकृतेशांतिसारेवास्तुशांति प्रयोगः ॥ अस्मिन्कर्मणिशतंब्राह्मणाःभोज्याः ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥



## ॥ ७६ ॥ ॥ अथ समंत्रक भुवनेश्वरीशांति प्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ श्रीसरस्वत्यैनमः ॥ अथगर्भाधानाद्याःसंस्काराउच्यंते ॥ तत्रप्रथमेरजोदर्शनेमासादौदुष्टेसतिगर्भाधानस्यशांतिपूर्वककर्तव्यत्वाच्छांतिकंवक्तुंदुष्टकालादीन्युच्यंते ॥ प्रथमेरजसिचैत्रज्येष्ठआषाढभाद्रपदकार्तिकपौषाअशुभाः ॥ आश्विनोमध्यमः ॥ शेषाःशुभाः ॥ क्वचिद्वैशाखफाल्गुनयोरधमत्वमुक्तं ॥ तिथिषुप्रतिपच्चतुर्थीषष्ठ्यष्टमीद्वादशीचतुर्दशीपौर्णिमास्यमावास्याअशुभा ॥ शेषाःशुभाः ॥ क्वचित्तत्रस्येकादश्यावशुभेअष्टमीद्वादश्यौशुभेइत्युक्तं ॥आसांशुभाशुभत्वाभ्यांमध्यमत्वमितिसांप्रदायिकाः॥ वारेषुरविभौममंदवाराअशुभाः ॥ अन्येशुभाः ॥ कैश्चित्सोमोप्यशुभउक्तः ॥ नक्षत्रेषुभरण्यार्द्रापुष्याश्लेषापूर्वाज्येष्ठामूलपूर्वाषाढापूर्वाभाद्रपदारेवत्योऽशुभाः ॥ चित्राविशाखाश्रवणाश्विनीमिवास्वातयोमध्य

माः ॥ अन्यानिशुभानि ॥ कैश्चित्तुकृत्तिकापुनर्वस्वनुराधारेवत्योप्यशुभाउक्ताः ॥ एवंचतासांमध्यम
त्वंएवमन्यत्रापियोगेषु ॥ व्याघातस्याद्यानवनाड्योगंडातिगंडयोःषट्षट्शूलस्यपंचदशपरिघपूर्वार्धंवैधृतिर्व्य
तीपातश्चेत्यशुभाः ॥ वज्रंमध्यमं अन्येशुभाः ॥ करणानिविष्टिंविनासर्वाणिशुभानिअन्हित्रेधाविभक्तेअद्योभा
गःशुभः ॥ द्वितीयोमध्यमः ॥ तृतीयःअशुभः ॥ एवंरात्रौसूर्योदयास्तमयावप्यशुभौ ॥ रविसंक्रमणात्पूर्वमूर्ध्वंच
नाडीचतुष्टयमशुभं ॥ संक्रांत्यादिदग्धदिनेष्वशुभं ॥ रविचंद्रोपरागयोरप्यशुभं ॥ संध्योपप्लवशावाशौचेषुभर्तु
रात्मनश्चतुर्थाष्टमद्वादशस्थेचंद्रेजीर्णरक्तनीलमलिनकृष्णवस्त्रेषुपरिहितेषुनशुभं ॥ संमार्जनीकाष्ठमृत्तृणाग्नि
शूर्पतुषशुष्काक्षतलोहपाषाणशस्त्रादिधारिण्याएतैर्युक्तदेशे चाशुभं ॥ देहलीद्वाररथ्यापितृमातृगृहेष्वशुभं॥ऊ
र्ध्वंस्थितायानिद्रितायाश्चाशुभं॥ पित्रादिसखिस्वभर्तृभिर्दृष्टमशुभं ॥ शय्यादौशुभंइत्यादिज्ञेयं ॥ दुष्टमासादौ
प्रथमरजोदर्शनेतांबूलभक्षणादिमंगलाचारंनकुर्यात् ॥ द्वितीयेतुशुभेतत्रकुर्यादितिकेचित् ॥ प्रथमेदुष्टेरजोद
र्शनेद्वितीयंप्रतीक्ष्यतस्मिन्नप्यशुभेविस्तरेणशांतिंकुर्यादित्यपिकेचित् ॥ प्रथमएवयथाशक्तिशांतिंचरेदित्य
परे ॥ तत्रैकस्मिन्नप्यशुभेवक्ष्यमाणाशांतिःकार्या ॥ द्वित्राद्यशुभसन्निपातेतुतत्सूचितबव्हशुभनिरासार्थं
वक्ष्यमाणाहुतिसंख्यादितिवृद्ध्याकार्या ॥ यथाशक्तीत्यादिज्ञेयम् ॥ इतिशुभाशुभविचारः ॥ अथशांति
रुच्यते ॥ तत्रएवंविनायकंपूज्यग्रहांश्चैवविधानतः ॥ कर्मणांफलमाप्नोतीतियाज्ञवल्क्येनकर्मफलसिद्धाव
विघ्नार्थत्वेनग्रहयज्ञस्यावश्यकत्वोक्तेरिहचशौनकेन ॥ आर्तवानांतुनारीणांशांतिंवक्ष्यामिशौनकइत्युपक्रम्यग्र

हातिथ्यपुरःसरमितिप्रकरणोक्तेरावश्यकत्वादेकदेशकालकर्तृकाणांचविशेषवचनाभावेतंत्रेणकर्तव्यत्वाद्
ग्रहमखपूर्वकस्तंत्रेणशांतिकप्रयोगउच्यते ॥ रजोदर्शनानंतरंपंचमादिदिनेचंद्रतारानुकूल्येशुचिदेशेसुस्ना
तयापत्न्यायुतःपतिःप्राङ्मुखउपवेश्य ॥ आचम्यप्राणानायम्यदेशकालौस्मृत्वाममपत्न्याःप्रथमरजोद
र्शनेऽमुकदुष्टमासादिसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांशौनकोक्तांभुवनेश्वरीशां
तिंकरिष्यइतिसंकल्प्य ॥ गणेशपूजनपुण्याहवाचनगौर्यादिषोडशमातृकापूजनब्राह्म्यादिसप्तमातृकापू
जननांदीश्राद्धानिकृत्वा शांतंदांतंकुटुंबिनंमंत्रतंत्रज्ञमाचार्यंब्रह्माणंचजपहोमार्थमष्टौषट्चतुरोवाऋत्विजो
वृत्वागंधादिनापूजयेत् ॥ ततआचार्योगृहेशानदेशेशुचौ ॥ ॐ मही।द्यौःपृथिवीचनइमंयज्ञंमिमिक्ष
तां ॥ पिपृतांनोभरीमभिः ॥ इतिमंत्रेणभूमिंस्पृष्ट्वातद्दक्षिणोत्तरयोश्चतथैवभूमिंस्पृष्ट्वा ॥ ॐ ओषधयःसं
वदंतेसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ॥ इतिमंत्रेणद्रोणप्रमाणव्रीहिभिर्मध्ये
तद्दक्षिणोत्तरतश्चस्पृष्टदेशेमंत्रावृत्याराशित्रयंकृत्वातेनैवक्रमेणराशित्रयेनवमकालकमभग्नंकुंभत्रयमाकलशे
ष्वितिमंत्रावृत्यास्थापयेत् ॥ ॐ आकलशेषुधावतिपवित्रेपरिषिच्यते ॥ उक्थैर्यज्ञेषुवर्धते ॥ इतिमंत्रेणस्था
पयेत् ॥ एवंसर्वत्रमंत्रावृत्तिः ॥ ततः प्रसुवआपइतिनवर्चस्यसूक्तस्यसिंधुक्षित्प्रैयमेधोनद्योजगती ॥ क
लशेषूदकपूरणेविनियोगः ॥ ॐ प्रसुवऽआपोमहिमानमुत्तमंकारुर्वोचातिसदनेविवस्वतः ॥ प्रसप्तसप्तत्रे

धाहिचेक्रमुः प्रस्त्वरीणामतिसिंधुरोजसा ॥ प्रतेरदद्वरुणोयातवेपथःसिंधोयद्वाजाँऽअभ्यद्रवस्त्वं ॥ भूम्याऽ
अधिप्रवतायासिसानुनायदेषामग्रंजगतामिरज्यसि ॥ दिविस्वनोयततेभूम्योपर्यनंतंशुष्ममुदियर्तिभानुना ॥
अभ्रादिवप्रस्तनयंतिवृष्टयःसिधुर्यदेतिवृषभोनरोरुवत् ॥ अभित्वासिंधोशिशुमिन्नमातरोवाश्राऽअर्षंतिपय
सेवधेनवः ॥ राजेवयुध्वानयसित्वमित्सिचौयदासामग्रंप्रवतामिनक्षसि ॥ इमंमेगंगेयमुनेसरस्वतिशुतुद्रि
स्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ १ ॥ तृष्टामयाप्रथमंया
तवेसजूःसुसर्त्वारसयाश्वेत्यात्या ॥ त्वंसिंधोकुभयागोमतींक्रुमुंमेहत्न्वासरथंयाभिरीयसे ॥ ऋजीत्येनीरुशं
तीमहित्वापरिज्रयांसिभरतेरजांसि ॥ अदब्धासिंधुरपसामपस्तमाश्वानचित्रावपुषीवदर्शता ॥ स्वश्वासिंधुःसु
रथासुवासाहिरण्ययीसुकृतावाजिनीवती ॥ ऊर्णावतीयुवतिःसीलमावत्युताधिवस्तेसुभगामधुवृधं ॥ सुखं
रथंयुयुजेसिंधुरश्विनंतेनवाजंसनिषदस्मिन्नाजौ ॥ महान्ह्यस्यमहिमापनस्यतेदब्धस्ययस्त्वयशसोविरप्शिनः
॥ २ ॥ याःप्रवतइतिवसिष्ठोनद्यःशक्करी ॥ कलशेषूदकपूरणेविनियोगः ॥ ॐयाः प्रवतोनिवतऽउद्वतऽउ
दन्वतीरनुदकाश्चयाः ॥ ताऽअस्मभ्यंपयसापिन्वमानाः शिवादेवीरशिपदाभवंतुसर्वानद्योऽअशिमिदाभवं
तु ॥ एवमग्रेपितत्रतत्रविनियोगोज्ञेयः ॥ ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांता

मिहोपह्वयेश्रियं ॥ इतित्रिष्वपिगंधंप्रक्षिप्य ॥ याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणा
महंशतंधामानिसप्तच ॥ इतिसर्वौषधीः ॥ ॐओषधयःसंवदंतेसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तं
राजन्पारयामसि ॥ इतियवान्निक्षिप्य ॥ ततोमध्यकुंभेयवव्रीहितिलमाषप्रियंगुश्यामाकमुद्गान्प्रक्षिप्त्वागा
यत्र्योदुंबरकुशदूर्वारक्तोत्पलचंपकबिल्वविष्णुक्रांतातुलसीबर्हिषशंखपुष्पीशतावरीअश्वगंधानिर्गुंडीरक्तपी
तसर्षपअपामार्गपलाशपनसजीरकप्रियंगुगोधूमव्रीहिअश्वत्थदधिदुग्धघृतपद्मपत्रनीलोत्पलसितरक्तपीत
कुरंटकगुंजावचाभद्रमुस्तकाख्यानिद्वात्रिंशदौषधानिसर्वाणियथासंभवंवाक्षिपेत् ॥ ततस्त्रिषुकलशेषु ॥
ॐ कांडात्कांडात्प्ररोहंतिपरुषः परुषः परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ इतिदूर्वाः ॥ ॐअश्व
त्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषं ॥ इतिपंचपल्लवान् ॥ अश्व
त्थोदुंबरप्लक्षचूतन्यग्रोधपल्लवाः ॥ गजाश्वस्थानरथ्यावल्मीकसंगमन्हदगोष्ठस्थामृदः ॥ ॐस्योनापृथि
विभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ इतिक्षिप्त्वा ॥ ॐयाःफलिनीर्याअफलाअपुष्पायाश्चपु
ष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः ॥ इतिपूगीफलानि ॥ ॐ साहिरत्नानिदाशुषेसुवातिसविता
भगः ॥ तंभागंचित्रमीमहे ॥ इतिकनककुलिशनीलपद्मरागमौक्तिकानिपंचरत्नानि ॥ ॐहिरण्यरूपःस
हिरण्यसंदृगपांनपात्सेदुहिरण्यवर्णः ॥ हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै ॥ इतिहिरण्यंच

क्षिपेत् ॥ ॐयुवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाध्यो३मनसादेवयंतः ॥ इतिसूत्रेणवाससाचकलशकंठान्वेष्टयित्वागंधाक्षतपुष्पमालाभिःकलशान्भूषयेत् ॥ ततःकलशत्रयोपरितेनैवक्रमेणसौवर्णराजतंकांस्यमयंताम्रमयंवैणवंमृन्मयंवायवादिपूरितंपात्रत्रयंनिधाय तत्रमंत्रः ॥ ॐपूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो ॥ तदुपरिश्वेतंवस्त्रत्रयंन्यस्यतत्र चंदनादिनाष्टदलानिकुर्यात् ॥ तत्रमध्यमे ॥ गायत्र्याविश्वामित्रोभुवनेश्वरीगायत्री ॥ भुवनेश्वर्यावाहनादौविनियोगः ॥ ॐतत्सवितु० ॥ भुवनेश्वरीमावाहयामि ॥ इतियाथाशक्तिसुवर्णनिर्मितांभुवनेश्वरीप्रतिमामग्न्युत्तारणपूर्वकंस्थापयेत् ॥ तद्दक्षिणकुंभोपरिवस्त्रे ॥ इंद्राणीवृषाकपिरिंद्राणीपङ्क्तिः ॥ इंद्राण्यावाहनादौविनियोगः॥ॐइंद्राणीमासुनारिषुसुभगामहमश्रवं ॥ नह्यस्याअपरंचनजरसामरतेपतिर्विश्वस्मादिंद्रउत्तरः ॥ ॐइंद्राणीमावाहयामि ॥ तथैवसौवर्णामिंद्राणीप्रतिमांस्थाप्योत्तरकलशोपरि॥ इंद्रत्वाविश्वामित्रइंद्रोगायत्री॥इंद्रावाहनेविनियोगः॥ॐइंद्रंत्वावृषभंवयंसुतसोमेहवामहे ॥ सपाहिमध्वोअंधसः ॥ इंद्रमावाहयामिइतिसौवर्णमिंद्रप्रतिमांस्थापयेत् ॥ ततःअग्निःसप्तिमितिसू० प० ततउक्तमंत्रैरुक्तक्रमेणदेवतात्रयस्यकांडानुसमयेनषोडशोपचारैः पूजांकुर्यात् ॥ ततोमध्यकुंभेआचार्योष्टसहस्रमष्टशतंवागायत्रींजप्त्वाश्रीसूक्तंजपेत् ॥ यथा ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यकर्दमानंदाचिक्लीतेंदि



रासुताऋषयःश्रीर्देवता ॥ आद्यास्तिस्रोनुष्टुभः ॥ ततएकाप्रस्तारपंक्तिः ॥ जपेविनियोगः ॥ ॐहिरण्यवर्णांहरिणींसुवर्णरजतस्रजां ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहं ॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीं ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीर्जुषतां ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीं ॥ पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं ॥ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां ॥ तांपद्मनेमिंशरणमहंप्रपद्येअलक्ष्मीर्मेनश्यतांत्वांवृणे ॥१॥ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्याअलक्ष्मीः ॥ उपैतुमांदेवसखः कीर्तिश्चमणिनासह ॥ प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहं ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ मनसःकाममाकूतिंवाचः सत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ २ ॥ कर्दमेनप्रजाभूतामयिसंभवकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीं ॥ आपःसृजंतुस्निग्धानिचिक्लीतवसमेगृहे ॥

नीचदेवीमातरंश्रियंवासयमेकुले ॥ आर्द्रांयःकरिणींयष्टींसुवर्णांहेममालिनीं ॥ सूर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विंदेयंपुरुषानहं ॥ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं ॥ सूक्तंपंचदशर्चंचश्रीकामःसततंजपेत् ॥इति ॥ ततः एकोऋत्विग्दक्षिणकुंभेरुद्रसूक्तानिजपेत् ॥ यथा ॥ कद्रुद्रायेतिनवर्चस्यसूक्तस्यघोरःकण्वोरुद्रोगायत्री ॥ जपेविनियोगः ॥ ॐ कद्रुद्रायप्रचेतसेमीळ्हुष्टमायतव्यसे ॥ वोचेमशंतमंहृदे ॥ यथानोऽअदितिःकरत्पश्वेनृभ्योयथागवे ॥ यथातोकायरुद्रियं ॥ यथानोमित्रोवरुणोयथारुद्रश्चिकेतति ॥ यथाविश्वेसजोषसः ॥ गाथपतिंमेधपतिंरुद्रंजलाषभेषजं ॥ तच्छंयोःसुम्नमीमहे ॥ यःशुक्रइवसूर्योहिरण्यमिवरोचते ॥ श्रेष्ठोदेवानांवसुः ॥ १ ॥ शंनःकरत्यर्वतेसुगंमेषायमेष्ये ॥ नृभ्योनारिभ्योगवे ॥ अस्मेसोमश्रियमधिनिधेहिशतस्यनृणां ॥ महिश्रवस्तुविनृम्णं ॥ मानःसोमपरिबाधोमारातयोजुहुरंत ॥ आनऽइंदोवाजेभज ॥ यास्तेप्रजाऽअमृतस्यपरस्मिन्धामन्नृतस्य ॥ मूर्धानाभासोमवेनऽआभूषंतीःसोमवेदः ॥२ ॥ इत्येकं ॥ इमारुद्रायतवसेत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रोआद्यानवजगत्योंत्येद्वेत्रिष्टुभौ ॥जपेविनियोगः॥ॐइमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मिन्ननातुरं ॥ मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ॥ यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषु ॥ अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः ॥ सुम्नायन्निद्विशोअस्माकमाचरारिष्टवीराजुहवामतेहविः ॥त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे ॥ आरेऽअस्मद्दैव्यंहेळोऽअस्यतुसुमतिमिद्वयमस्यावृणीमहे ॥ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ॥ हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥ १ ॥ इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्धनं ॥ रास्वाचनोअमृतमर्तभोजनंत्मनेतोकायतनयायमृळ ॥ मानोमहांतमुतमानोऽअर्भकंमानउक्षंतमुतमानउक्षितं ॥ मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिषः ॥ मानस्तोकेतनयेमानऽआयौमानोगोषुमानोऽअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ उपतेस्तोमान्पशुपाऽइवाकरंरास्वापितर्मरुतांसुम्नमस्मे ॥ भद्राहितेसुमतिर्मृळयत्तमाथावयमवइत्तेवृणीमहे ॥ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरसुम्नमस्मेतेऽअस्तु ॥ मृळाचनोऽअधिचब्रूहिदेवाधाचनःशर्मयच्छद्विबर्हाः ॥ अवोचामनमोऽअस्माऽ अवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीऽउतद्यौः ॥ २ ॥ इतिद्वितीयं ॥ आतेपितरितिपं

चदश र्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् ॥ जपेविनियोगः॥ॐआतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयो
थाः ॥ अभिनोवीरोऽअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिः ॥ त्वादत्तेभीरुद्रशंतमेभिःशतंहिमाऽअशीयभेष
जेभिः ॥ व्य १ स्मद्द्वेषोवितरंव्यंहोव्यमीवाश्चातयस्वाविषूचीः ॥ श्रेष्ठोजातस्यरुद्रश्रियासितवस्तमस्तवसां
वज्रबाहो ॥ पर्षिणःपारमंहसःस्वस्तिविश्वाऽअभीतीरपसोयुयोधि ॥ मात्वारुद्रचुक्रुधामानमोभिर्मादुष्टुती
वृषभमासहूती ॥ उन्नोवीराँऽअर्पयभेषजेभिर्भिषक्तमंत्वाभिषजांशृणोमि ॥ हवीमभिर्हवतेयोहविर्भिरवस्तो
मेभीरुद्रंदिषीय ॥ ऋदूदरःसुहवोमानोऽअस्यैबभ्रुःसुशिप्रोरीरधन्मनायै ॥ १ ॥ उन्मामंदवृषभोमरुत्वा
न्त्वक्षीयसावयसानाधमानं ॥ घृणीवच्छायामरपाऽअशीयाविवासेयंरुद्रस्यसुम्नं ॥ क १ स्यतेरुद्रमृळयाकु
र्हस्तोयोऽअस्तिभेषजोजलाषः ॥ अपभर्तारपसोदैव्यस्याभीनुमावृषभचक्षमीथाः ॥ प्रबभ्रवेवृषभायश्वि
तीचेमहोमहींसुष्टुतिमीरयामि ॥ नमस्याकल्मलीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनाम ॥ स्थिरेभिरंगैःपुरु
रूपऽउग्रोबभ्रुःशुक्रेभिःपिपिशेहिरण्यैः ॥ ईशानादस्यभुवनस्यभूरेर्नवाऽउयोषद्रुद्रादसुर्यं ॥ अर्हन्बिभर्षि
सायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं ॥ अर्हन्निदंदयसेविश्वमभ्वंनवाऽओजीयोरुद्रत्वदस्ति ॥ २ ॥ स्तु
हिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं ॥ मृळाजरित्रेरुद्रस्तवानोन्यंतेऽअस्मन्निवपंतुसेनाः ॥ कुमार



श्चित्पितरंवंदमानंप्रतिनानामरुद्रोपयंतं ॥ भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे ॥ यावोभेष
जामरुतःशुचीनियाशंतमावृषणोयामयोभु ॥यानिमनुरवृणीतापितानस्ताशंचयोश्चरुद्रस्यवश्मि ॥ परिणोहे
तीरुद्रस्यवृज्याःपरित्वेषस्यदुर्मतिर्महीगात् ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृळ ॥ ए
वाबभ्रोवृषभचेकितानयथादेवनहृणीषेनहंसि ॥ हवनश्रुन्नोरुद्रेहबोधिबृहद्वदेमविदथेसुवीराः ॥ ६ ॥ इ
तितृतीयं ॥ इमारुद्रायस्थिरधन्वनइतिचतसृणांवसिष्ठोरुद्रास्तिस्रोजगत्योंत्यात्रिष्टुप् ॥ जपेविनियोगः ॥
ॐइमारुद्रायस्थिरधन्वनेगिरःक्षिप्रेषवेदेवायस्वधाव्ने ॥ अषाव्हायसहमानायवेधसेतिग्मायुधायभरताशृ
णोतुनः ॥ सहिक्षयेणक्षम्यस्यजन्मनःसाम्राज्येनदिव्यस्यचेतति ॥ अवन्नवंतीरुपनोदुरश्चरानमीवोरुद्रजा
सुनोभव ॥ यातेदिद्युदवसृष्टादिवस्परिक्ष्मयाचरतिपरिसावृणक्तुनः ॥ सहस्रंतेस्वपिवातभेषजामानस्तोके
षुतनयेषुरीरिषः ॥ मानोवधीरुद्रमापरादामातेभूमप्रसितौहीळितस्य ॥ आनोभजबर्हिषिजीवशंसेयूयंपात
स्वस्तिभिःसदानः ॥ १ ॥ इति चतुर्थरुद्रसूक्तानि ॥ आवोराजानंवामदेवोरुद्रस्त्रिष्टुप् ॥ जपेविनियो
गः ॥ ॐआवोराजानमध्वरस्यरुद्रंहोतारंसत्ययजंरोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसे
कृणुध्वं ॥ तमुष्टुहिभौमोत्रीरुद्रस्त्रिष्टुप् ॥ जपेविनियोगः ॥ ॐ तमुष्टुहियःस्विषुःसुधन्वायोविश्वस्यक्षय

तिभेषजस्य ॥ यक्ष्वामहेसौमनसायरुद्रंनमोभिर्देवमसुरंदुवस्य ॥ भुवनस्यपितरम्नृजिश्वारुद्रस्त्रिष्टुप् ॥ जपेविनियोगः ॥ ॐभुवनस्यपितरंगीर्भिराभीरुद्रंदिवावर्धयारुद्रमक्तौ ॥ बृहंतमृष्वमजरंसुषुम्नमृधग्घुवेम कविनेषितासः ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् ॥ जपेविनियोगः ॥ ॐत्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ अथान्यऋत्विगुत्तरकुंभेष्टकादशावृत्तिभीरुद्रंजपेत् ॥ तत्रादौ न्यासान्कृत्वाऋष्यादिस्मरेत् ॥ तथानमकानांप्रथमानुवाकेआद्यायाःकश्यपोद्वितीयायाआत्रेयः ॥ तृतीयायाःकश्यपस्ततोद्वयोर्गौतमस्ततएकस्याःकण्वस्ततोद्वयोर्मरुत्वांस्ततएकस्याभगवांस्ततस्तिसृणांनारदस्ततस्तिसृणांभगवान् ॥ द्वितीयानुवाकस्यमंडूकस्तृतीयानुवाकस्यभगवांश्चतुर्थानुवाकस्यदुर्वासाः ॥ पंचमषष्ठानुवाकयोर्भगवान्सप्तमानुवाकस्यहेमकोशाऽष्टमानुवाकस्यनवमानुवाकेचनमोवइतियावद्भगवानवशिष्टस्याग्निर्दशमानुवाकेप्रथमस्यपुलहोद्वितीयस्यस्कंदस्ततोद्वयोर्मीढ्वस्ततएकस्यदेवराट्ततएकस्यभगवांस्ततएकस्यात्रिस्ततएकस्यवैय्याघ्रस्ततएकस्यभगवांस्ततएकस्यवैराजस्ततएकस्यपुलहस्ततएकस्यनारदस्ततएकादशानुवाकेआद्यानांचतुर्णांदुर्वासास्ततआसमाप्तेर्देवलइत्यृषयः ॥ प्रथमानुवाकेआद्यस्यरुद्रस्ततएकस्यशंभुस्ततएकस्यस्कंदात्मारुद्रस्ततोद्वयोरुद्रस्ततएकस्यशंभुस्ततोद्वयोरादित्यात्मारुद्रस्ततएकस्यशंभुस्तस्तिसृणांरुद्रस्ततस्तिसृणांभगवांस्ततोद्वितीयतृतीयानुवाकयोरुद्रस्ततश्चतुर्थपंचमषष्ठानुवाकानांशंभुः सप्त



मानुवाकस्यरुद्रोष्टमानुवाकस्यनमोवःकिरिकेभ्यइत्यंतस्यचनवमस्यभगवानवशिष्टस्यरुद्रोदशमानुवाकेचतुर्णारुद्रस्ततएकस्यनंदीश्वरात्मारुद्रस्ततएकस्यभगवांस्ततएकस्यशंभुस्ततएकस्यरुद्रस्ततएकस्यभगवांस्ततोद्वयोःशंभुस्ततोवशिष्टानांरुद्रइतिदेवताः ॥ प्रथमानुवाकेआद्येनुष्टुभौततएकास्वराळनुष्टुप्ततएकानिचृदनुष्टुप् ॥ ततएकानुष्टुप्ततएकानिचृदनुष्टुप् ॥ ततएकाप्रस्तारपंक्तिःपंचपदापंक्तिर्वाततएकाषट्पदाजगतीततःसप्तानुष्टुभाततोष्टानुवाकायजूंषितत एकाप्रस्तारपाङ्क्तिःपंचपदापङ्क्तिर्वाततएकानुष्टुप् ॥ ततश्चतस्रोजगत्यस्ततस्तिस्रस्त्रिष्टुभस्ततएकापंचपदात्रिष्टुप्महाबृहतीवाततोद्वादशानुष्टुभस्ततस्त्रीणियजूंषिततस्तिस्रोनुष्टुभस्ततएकायजुरितिच्छंदांसि ॥ अथचमकानांअग्निःकांडऋषिःआद्याआग्नावैष्णवीगायत्रीशिष्टानांबीजादयोन्नादिविशेषादेवताःयजुःजपेविनियोगः ॥ एवंरुद्रंजप्त्वा ॥ शंनइंद्राग्नीतिसूक्तंजपेत् ॥ शंनइतिपंचदशर्चस्यसूक्तस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ जपेविनियोगः ॥ शन्नइंद्राग्नीभवतामवोभिःशन्नइंद्रावरुणारातहव्या ॥ शमिंद्रासोमासुवितायशंयोःशन्नइंद्रापूषणावाजसातौ ॥ शन्नोभगःशमुनःशंसोअस्तु शंनःपुरंधिःशमुसंतुरायः ॥ शन्नःसत्यस्यसुयमस्यशंसःशन्नोअर्यमापुरुजातोअस्तु ॥ शंनोधाताशमुधर्तानोअस्तुशन्नउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशंनोअद्रिःशन्नोदेवानांसुहवानिसंतु ॥ श

न्नोऽअग्निर्ज्योतिरनीकोऽअस्तुशन्नोमित्रावरुणावश्विनाशं ॥ शन्नःसुकृतांसुकृतानिसंतुशंनइषिरोऽअभिवा
तुवातः ॥ शन्नोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोऽअस्तु ॥ शन्नऽओषधीर्वनिनोभवंतुशन्नोरजं
सस्पतिरस्तुजिष्णुः ॥ १ ॥ शन्नऽइंद्रोवसुभिर्देवोऽअस्तुशमादित्येभिर्वरुणःसुशंसः ॥ शन्नोरुद्रोरु
द्रेभिर्जलाषःशंनस्त्वष्टाग्नाभिरिहशृणोतु ॥ शंनःसोमोभवतुब्रह्मशंन्नःशंनोग्रावाणःशमुसंतुयज्ञाः ॥ शंनः
स्वरूणांमितयोभवंतुशन्नःप्रस्वः शम्वस्तुवेदिः ॥ शन्नःसूर्यऽउरुचक्षाऽउदेतुशंनश्चतस्रःप्रदिशोभवंतु ॥ श
न्नःपर्वताध्रुवयोभवंतुशन्नःसिंधवःशमुसंत्वापः ॥ शन्नोऽअदितिर्भवतुव्रतेभिःशन्नोभवंतुमरुतःस्वर्काः ॥ श
न्नोविष्णुःशमुपूषानोऽअस्तुशन्नोभवित्रंशम्वस्तुवायुः ॥ शन्नोदेवःसवितात्रायमाणःशन्नोभवंतूषसोविभा
तीः ॥ शंनःपर्जन्योभवतुप्रजाभ्यःशन्नःक्षेत्रस्यपतिरस्तुशंभुः ॥ २ ॥ शन्नोदेवाविश्वदेवाभवंतुशंसरस्वती
सहधीभिरस्तु ॥ शमभिषाचःशमुरातिषाचःशंनोदिव्याःपार्थिवाःशन्नोऽअप्याः ॥ शंन्नःसत्यस्यपतयोभवंतु
शन्नोऽअर्वंतःशमुसंतुगावः ॥ शन्नऽऋभवःसुकृतःसुहस्ताःशंनोभवंतुपितरोहवेषु ॥ शन्नोऽअजऽए
कपाद्देवोऽअस्तुशन्नोहिर्बुध्न्यः शंसमुद्रः ॥ शन्नोअपांनपात्पेरुरस्तुशन्नःपृश्निर्भवतुदेवगोपा ॥ आदि

[illegible] नवीयः ॥ शृण्वंतुनोदिव्याःपार्थिवासोगोजाताऽउतयेयज्ञियासः ॥ ये
देवानांयज्ञ[illegible] यज्ञियानांमनोर्यजत्राअमृताऽऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥
॥ ३ ॥ एवंशांतिसूक्तंजप्त्वा ॥ ततःकुंभपश्चिमदेशेस्थंडिलेग्निंप्रतिष्ठाप्यतदीशान्यांवेद्यादौनवग्रहादींस्त
त्तन्मंत्रैरावाह्यषोडशोपचारैः संपूज्यतदीशान्यांप्राग्वत्कुंभंसंस्थाप्यतत्रवरुणमावाह्याग्निसमीपमेत्यान्वाधा
नंकुर्यात् ॥ यथा द्वेसमिधावादायदेवतापरिग्रहार्थमन्वाधानंकरिष्येऽस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआ
ज्येनेत्यंतमुक्त्वानवग्रहान्प्रत्येकममुकसंख्याभिः समित्तिलाज्याहुतिभिर्भुवनेश्वरींप्रत्येकममुकसंख्याभिःदू
र्वातिलमिश्रगोधूमपायसाज्याहुतिभिरिंद्राणीमिंद्रंचप्रत्येकममुकसंख्याभिर्दूर्वातिलमिश्रगोधूमपायसाज्याहु
तिभिरित्युक्त्वाशेषेणस्विष्टकृतमित्यादियक्ष्यइत्युक्त्वाजुहुयात् ॥ अन्येतु ॥ गायत्र्येवतुहोतव्यंहविरत्रचतु
ष्टयं ॥ ततःस्विष्टकृतंहुत्वेतिशौनकेनेंद्राणींद्रयोर्होमानभिधानात्तयोर्होमोनास्तीत्याहुः ॥ तन्मतेऽन्वाधाने
तत्कीर्तनाभावः ॥ आहुतिसंख्यावक्ष्यते ॥ ततःपरिस्तरणादिपूर्णपात्रनिधानांतंकृत्वाभुवनेश्वरींद्राणींद्रे
भ्योऽमुष्मैत्वेतिमनसाध्यायन्तूष्णींचतुरश्चतुरोमुष्टीन्निरूप्याहुतिबहुत्वाच्चानिरूप्यगोदुग्धेपायसंश्रपयित्वा
ज्यसंस्कारादाज्यभागांतंकुर्यात् ॥ ततोयजमानोदक्षिणतउपविश्यहोमार्थंचजपार्थं ववरयेदृत्विजोबहुन् ॥
आचार्योद्विजैः सहेतिचोक्तेराचार्यर्त्विजांहोमावगमात्तेषांचस्वल्पत्वेनत्यागायोगात्तैश्चाक्रियमाणेहोमेयजमा

नेनप्रत्याहुतित्यागस्यशक्यत्वात्तदानीमेवांगप्रधानदेवताउद्दिश्यएताभ्यइदंनममेतित्यजेत् ॥ ततःआचार्यः सऋत्विक्नवग्रहेभ्योऽष्टशताष्टाविंशत्यष्टान्यतमसंख्याकाघृताक्ताअर्कादिसमिधस्तिलाज्याहुतीश्चहुत्वाधिदेवताप्रत्यधिदेवताविनायकादिपंचलोकपालेभ्यस्तन्न्यूनसंख्ययाजुहुयात् ॥ एभ्यस्तुपालाश्यःसमिधः ॥ ग्रहाणांयदाष्टौतदान्येभ्यश्चतस्रइतिसंप्रदायः ॥ततोभुवनेश्वर्यैगायत्र्यादधिमधुघृताक्ताभिस्तिस्रभिर्दूर्वाभिरेकाहुतिरित्येवमष्टसहस्रमष्टशतंवादूर्वाहुतीर्घृताक्ततिलमिश्रगोधूमाहुतीःपायसाहुतीर्घृताहुतीश्चजुहुयात् ॥ एवमिंद्राणींद्रयोः प्रागुक्तमंत्राभ्यांक्रमेणहविश्चतुष्टयंप्रत्येकमष्टशतसंख्ययाभुवनेश्वर्याअष्टसहस्रपक्षेजुहुयात् ॥ तस्याष्टशतपक्षेतुतयोरष्टाविंशतिरितिसंप्रदायः ॥ पक्षेतुतयोर्नहोमः ॥ ततः स्विष्टकृतादिप्रायश्चित्तहोमांतं कृत्वाइंद्रादिदिक्पालेभ्योनवग्रहेभ्योभुवनेश्वरींद्राणींद्रेभ्यः क्षेत्रपालायचसदीपान्माषभक्तबलींस्तत्तन्मंत्रैर्दत्वापूर्णाहुतिंसमुद्रादूर्मिरितितृचेनजुहुयात् ॥ समुद्रादूर्मिरितितृचस्यगौतमोवामदेवोग्निस्त्रिष्टुप् ॥ अंत्यैकाजगती ॥ पूर्णाहुतिहोमेविनियोगः ॥ ॐ समुद्रादूर्मिर्मधुमांउदारदुपांशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिव्हादेवानाममृतस्यनाभिः ॥ वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत् ॥ चत्वारिशृंगात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधा[illegible]र्त्यांऽआविवेशस्वाहा ॥ ततःप्रणीताविमोकंकृत्वाभुवनेश्वर्यादिकलशो



[illegible]त्वातेनतत्स्थपंचपल्लवैःसकुशदूर्वाभिर्धृतनववस्त्रंयजमानंधृतनववस्त्रकंचुकींतद्भा[illegible]ऋतुमतींभार्यांचसऋत्विगुदङ्मुखआचार्योभिषिंचेदेभिर्मंत्रैः ॥ तेचमंत्राः ॥ आपोहिष्ठेतिनवर्चस्यांबरीषःसिंधुद्वीपआपोगायत्री ॥ पंचमीवर्धमा[illegible]सप्तमीप्रतिष्ठा ॥ अंत्येद्वेअनुष्टुभौ ॥ अभिषेकेविनियोगः ॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनां ॥ अपोयाचामिभेषजं ॥ अप्सुमेसोमोऽअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवं ॥ आपःपृणीतभेषजंवरूथंतन्वेऽममं ॥ ज्योक्चसूर्यंदृशे ॥ इदमापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं ॥ आपोऽअद्यान्वचारिषंरसेनसमगस्माहि ॥ पयस्वानग्नऽआगहितंमासंसृजवर्चसा ॥ यऽएकइद्विदयतइतिगौतमोराहूगणइंद्रउष्णिक् ॥ अभिषेकेविनियोगः ॥ यऽएकइद्विदयतेवसुमर्तायदाशुषे ॥ ईशानोऽअप्रतिष्कुतऽइंद्रोऽअंग ॥ त्रिभिष्ट्वंदेवेतिसप्तर्चस्यसूक्तस्यवसिष्ठआद्यानांत्रयाणामग्निस्ततश्चतुर्णांविश्वेदेवाआद्यागायत्री ॥ द्वितीयानुष्टुप् ॥ ततस्तिस्रोगायत्र्योंत्येद्वेअनुष्टुभौ ॥ अभिषेकेविनियोगः ॥ त्रिभिष्ट्वंदेवसवितर्वर्षिष्ठैःसोमधामभिः ॥ अग्नेदक्षैःपुनीहिनः ॥ पुनंतुमांदेवजनाःपुनंतुवसवोधि

या ॥ विश्वेंदेवाःपुनीतमाजातवेदःपुनीहिमां ॥ प्रप्यांयस्वप्रस्यंदस्वसोमविश्वेभिरंशुभिः ॥ देवेभ्यंउ
त्तमंहविः ॥ उपप्रियंपनिंप्रतंयुवानमाहुतीवृधं ॥ अगंन्मबिभ्रंतोनमः ॥ अलाय्यंस्यपरशुर्नंनाशतमापं
वस्वदेवसोम ॥ आखुंचिदेवदेवसोम ॥ यःपावमानीरध्येत्यृषिंभिःसंभृतंरसं ॥ सर्वंसपूतमंश्नातिस्वदि
तंमातरिश्वंना ॥ पावमानीर्योऽअध्येत्यृषिंभिःसंभृतंरसं ॥ तस्मैसरंस्वतीदुहेक्षीरंसर्पिर्मधूदकम् ॥ उभयं
शृणवच्चनइतिभार्गवइंद्रोबृहती ॥ अभिषेकेविनियोगः ॥ उभयंशृणवंच्चनऽइंद्रोअर्वागिदंवचः ॥ स
त्राच्यामघवासोमंपीतयेधि० ॥ स्वस्तिदाविशोभरद्वाजइंद्रोनुष्टुप् ॥ अभिषेकेविनियोगः ॥ स्वस्तिदावि
शस्पतिंर्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएंतुनःसोमपाअभयंकरः ॥ त्र्यंबकमितिवसिष्टोरुद्रोनुष्टुप् ॥ अ
भिषेकेविनियोगः ॥ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिंवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥
जातवेदसेमारीचःकश्यपोदुर्गात्रिष्टुप् ॥ अभिषेकेविनियोगः ॥ ॐ जातवेदसेसुनवामसोमंमरातीयतोनिदं
हातिवेदः ॥ सनःपर्षदतिंदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ समुद्रज्येष्ठाइतिचतसृणांवासिष्ठआप
स्त्रिष्टुप् ॥ [illegible]भिषेकेविनियोगः ॥ ॐ समुद्रज्येष्ठाःसलिल[illegible]मध्यात्पुनानायंत्यनिंविशमानाः ॥ इंद्रोयाव
[illegible]षभार [illegible]रिहमामंवंतु ॥ याआपोदिव्याऽउतवास्रवंतिखनित्रिमाऽउतवायास्वयंजाः ॥समु

द्रार्थायाःशुचंयःपावकास्ताऽआपोदेवीरिहमामंवंतु ॥ यासांराजावरुणोयातिमध्येंसत्यानृतेऽअंवपश्यंजना
नां ॥ मधुःश्च्युतःशु चंयोयाःपावकास्ताऽआपोदेवीरिहमामंवंतु ॥यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जं
मदंति ॥ वैश्वानरोयाःस्वग्निःप्रविंष्टस्ताऽआपोदेवीरिहमामंवंतु ॥ त्रायंतामितितिसृणांसप्तऋषयआपोनुष्टु
प् ॥ अभिषेकेविनियोगः ॥ ॐ त्रायंतामिहदेवास्त्रायंतांमरुतांगणः ॥ त्रायंतांविश्वाभूतानियथायमंरपाऽ
असंत् ॥ आपऽइहाऽउंभेषजीरापोऽअमीवचातंनीः ॥ आपःसर्वंस्यभेषजीस्तास्तेंकृण्वंतुभेषजं ॥ हस्ता
भ्यांदशंशाखाभ्यांजिव्हावाचःपुरोगवी ॥ अनामयित्नुभ्यांत्वाताभ्यांत्वोपंस्पृशामसि ॥ इमाआपइतितिसृ
णांसप्तऋषयआपोनुष्टुप् ॥ अभिषेकेविनियोगः ॥ ॐ इमाऽआपःशिवतंमाऽइमाःसर्वस्यंभेषजीः ॥ इमा
राष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रंमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं ॥ ताभिरद्भिर
भिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह ॥ महांतंत्वामहीनांसम्राजंचर्षणीनांदेवीजनिंत्र्यजीजनद्भद्राजनि
त्र्यजीजनत् ॥ देवस्यत्वेत्यापस्तंबशाखागतैस्त्रिभिर्मंत्रैः ॥ देवस्यंत्वासवितुःप्रंसवेश्विनोर्बाहुभ्यांपूष्णोह
स्ताभ्यां ॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिंचामि ॥ देवस्यंत्वासवितुःप्रंसवेश्विनोर्बाहुभ्यांपूष्णो
हस्ताभ्यां ॥ इंद्रस्येंद्रियेणं॥ श्रियैयशसेबलायाभिषिंचामि ॥ देवस्यंत्वासवितुःप्रंसवेश्विनोर्बाहुभ्यांपूष्णोह

स्तांभ्या ऽसरस्वत्यैवाचोयंतुर्वीर्येणाग्नेस्त्वासाम्राज्येनाभिषिंचामींद्रस्यबृहस्पतेस्त्वसाम्राज्येनाभिषिंचामि ॥ तमीशानंगौतमोवामदेवइशानोजगती ॥ अभिषेकेविनियोगः ॥ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवंसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ त्वमग्नेरुद्रइत्यापस्तंबशाखागतेनैकेन ॥ त्वमग्नेरुद्रोऽअसुरोमहोदिवस्त्वंशर्द्धोमारुतंपृक्षईशिषे ॥ त्वंवातैररुणैर्यासिशंगयस्त्वंपूषाविधतःपासिनुत्मना ॥ तमुष्टुहिभैमोत्रीरुद्रस्त्रिष्टुप् ॥ अभिषेकेविनियोगः ॥ ॐ तमुष्टुहियःस्विषुः सुधन्वायोविश्वस्यक्षयतिभेषजस्य ॥ यक्ष्वामहेसौमनसायरुद्रंनमोभिर्देवमसुरंदुवस्य ॥ भुवनस्यपितरंऋजिश्वारुद्रस्त्रिष्टुप् ॥ अभिषेकेनिवियोगः॥ भुवनस्यपितरंगीर्भिराभीरुद्रंदिवावर्धयारुद्रमक्तौ ॥ बृहंतमृष्वमजरंसुषुम्नमृधग्घुवेमकविनेषितासः ॥ यातेरुद्रेतिकश्यपोरुद्रस्वराळनुष्टुप् ॥ अभिषेकेविनियोगः ॥ ॐयातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तनुवाशंतमयागिरिशंताभिचाकशीहि ॥ यज्जाग्रतइतिषण्णांशिवसंकल्पमंत्राणांप्रजापतिर्मनस्त्रिष्टुप् ॥ अभिषेकेविनियोगः ॥ ॐयज्जाग्रतोदूरमुदैतुदैवंतदुसुप्तस्यतथैवेति ॥ दूरंगमंज्योतिषांज्योतिरेकंतन्मेमनःशिवसंकल्पमस्तु ॥ येनकर्माण्यपसोमनीषिणो



यज्ञेकृण्वंतिविदथेषुधीराः ॥ यदपूर्वंयक्षमंतःप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरंतरमृतंप्रजासु ॥ यस्मान्नऽऋतेकिंचनकर्मक्रियतेतन्मेमनःशिवसंकल्पमस्तु ॥ येनेदंभूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वं ॥ येनयज्ञस्तायतेसप्तहोतातन्मे० ॥ यस्मिन्नृचःसामयजूꣳषियस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥ यस्मिꣳश्चित्तꣳसर्वमोतंप्रजानांतन्मे० ॥ सुषारथिरश्वानिवयंमनुष्यान्नेनीयतेभीशुभिर्वाजिनइव ॥ हृत्प्रतिष्ठंयदजिरंयविष्ठंतन्मे० ॥ १ ॥ इंद्रत्वावृषभंवयमितिपंचानांविश्वामित्रइंद्रोगायत्री ॥ अभिषेकेवि० ॥ ॐइंद्रत्वावृषभंवयंसुतेसोमेहवामहे ॥ सपाहिमध्वोऽअंधसः ॥ इंद्रक्रतुविदंसुतंसोमंहर्यपुरुष्टुत ॥ पिबावृषस्वतातृपिं ॥ इंद्रप्रणोधितावानंयज्ञंविश्वेभिर्देवेभिः ॥ तिरस्तवानविश्पते ॥ इंद्रसोमाःसुताइमेतवप्रयंतिसत्पते ॥ क्षयंचंद्रासइंदवः ॥ दधिष्वाजठरेसुतंसोममिंद्रवरेण्यं ॥ तवद्युक्षासइंदवः ॥ १ ॥ ततः सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥२ ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा ॥ ३ ॥ कीर्तिर्लक्ष्मीधृतिर्मेधापुष्टिश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिःतुष्टिःक्षांतिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिंचंतु

देवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधर्जीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिंचंतुराहुःके
तुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्यो
द्रुमानागादैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानि
कालस्यावयवाश्चये ॥ ८ ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वकामा
र्थसिद्धये ॥ ९ ॥ इतिपौराणैर्मंत्रैरभिषिंचेत् ॥ ततःकलशोदकेनान्येनचोदकेनसुस्नातौदंपतीशुक्लवाससौ
सोगंधमाल्यादिधृत्वोपविशेतांतत्रपत्नीदक्षिणतःततोयजमानोग्निंसंपूज्यविभूतिंधृत्वाचार्यादीन्गंधपुष्पवस्त्रा
लंकारादिभिर्यथाशक्तिपूजयित्वाचार्यायधेनुदक्षिणांदद्यात् ॥ दक्षिणात्वेनचास्यानदक्षिणांतरंअनवस्थाप्रसं
गात् ॥ ततोब्रह्मणेयथाशक्तिदक्षिणांदत्वारुद्रजापिनेसदक्षिणमनड्वाहंदक्षिणांदद्यात् ॥ अत्रधेनुन्यायेनदक्षि
णात्वेप्राप्तेसदक्षिणमनड्वाहंप्रदद्याद्रुद्रजापिनेइतिप्रतिप्रसवकारणात्सदक्षिणत्वं ॥ ततोऽन्येभ्यऋत्विग्भ्योऽ
न्येभ्यश्चब्राह्मणेभ्यःभूयसींदक्षिणांदद्यात् ॥ ततोग्रहपीठदेवतानांभुवनेश्वर्यादीनांचोत्तरपूजांपंचोपचारैःकृ
त्वाक्षमाप्य यांतुदेवगणाःसर्वेपूजामादायपार्थिवीं ॥ इष्टकामप्रसित्ध्यर्थंपुनरागमनायच ॥ इतिविसृज्य ॥
आचार्यहस्तेप्रतिपाद्याग्निंसंपूज्य ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहु
ताशन ॥ इतिमंत्रेणविसर्जयेत् ॥ ततोब्राह्मणामहाशांतिंपठेयुः ॥ सायथा ॥ आनोभद्राइतिदशानांगौत
मोराहूगणोविश्वेदेवाः ॥ आद्याःपंचजगत्यः ॥ षष्ठीविराट् ॥ सप्तमीजगती ॥ ततस्तिस्रस्त्रिष्टुभः ॥ ॐ

। शन्नऽइंद्रोवरु[illegible] ॥ शंनो
[illegible] वतादं[illegible]सोऽअप[illegible] ॥ [illegible]नोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारो
[illegible]णोतु ॥ शंन[illegible]
नवंतुशंनःप्रस्न[illegible] ॥ [illegible]वानांभद्रासुमतिरृजूयतां देवानांरातिरभिनोनिवर्ततां॥देवानांसख्यमुपसेदिमावयंदेवानऽआयुः
प्रतिरंतुजीवसे ॥ तान्पूर्वयानिवि[illegible]हूमहेवयंभगंमित्रमदितिंदक्षमस्रिधं ॥ अर्यमणंवरुणंसोमंमश्विनासरं
स्वतीनःसुभगामयस्करत् ॥ तन्नोवातोमयोभुवातुभेषजं[illegible]मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसु
तोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवं ॥ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषा
नोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये॥ १ ॥ स्वस्तिनऽइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥
स्वस्तिनःस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोवृहस्पतिर्दधातु ॥ पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुज
ग्मयः ॥ अग्निजिह्वामनवःसूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्ये
माक्षभिर्यजत्राः ॥स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥शतमिन्नुशरदोऽअंतिदेवायत्रानश्चक्राजर
संतनूनां॥पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः ॥अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपु
त्रः॥विश्वेदेवाऽअदितिःपंचजनाऽअदितिर्जातमदितिर्जनित्वं ॥स्वस्तिनोमिमीतामितिपंचानांस्वस्त्यात्रेयोवि

[illegible]चदनरक्ता

श्वेदेवास्त्रिष्टुप् ॥ आद्यास्तिस्रस्त्रिष्टुभः॥ततोनुष्टुभौ ॥ॐस्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदि...
र्णः ॥ स्वस्तिपूषाऽअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना ॥ स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुव
नस्ययस्पतिः बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयऽआदित्यासोभवंतुनः ॥ विश्वेदेवानोऽअद्यास्वस्तयेवैश्वान
रोवसुरग्निःस्वस्तये ॥देवाऽअवंत्वृभवःस्वस्तयेस्त.स्तिनोरुद्रःपात्वंहसः ॥स्वस्तिमित्रावरुणास्वस्तिपथ्येरेवति॥
स्वस्तिनऽइंद्रश्चाग्निश्चस्वस्तिनोऽअदितेकृधि ॥ स्वस्तिपंथामनुचरेमसूर्याचंद्रमसाविव ॥ पुनर्ददताघ्नताजान
तासंगमेमहि ॥ १ ॥ शंनइंद्राग्नीतिपंचदशानांवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥त्यमूष्वितितिसृणांतार्क्ष्योरिष्टनेमिस्ता
र्क्ष्यस्त्रिष्टुप् ॥ तच्छंयोःशंयुर्विश्वेदेवाःशक्वरी ॥ सर्वेषांशांतिपाठेविनियोगः ॥ ॐशन्नऽइंद्राग्नीभवतामवोभिः
शन्नइंद्रावरुणारातहव्या ॥ शमिंद्रासोमासुवितायशंयोःशंनइंद्रापूषणावाजसातौ ॥ शन्नोभगःशमुनःशंसोऽ
अस्तुशंनःपुरंधिःशमुसंतुरायः ॥ शन्नःसत्यस्यसुयमस्यशंसःशन्नोऽअर्यमापुरुजातोऽअस्तु ॥ शन्नोधाताशमु
धर्तानोऽअस्तुशंनऽउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशंनोऽअद्रिःशंनोदेवानांसुहवानिसंतु ॥ शंनो
मोराहूगर्णोत्रिःनीकोऽअस्तुशंनोमित्रावरुणावश्विनाशं ॥ शंनःसुकृतांसुकृतानिसंतुशंनऽइषिरोऽअभिवातुवा
...पर्वहूतौशमंतरिक्षंदृशयेनो... ॥ शंनऽओषधीर्वनिनोभवंतुशंनोरजसस्पतिरस्तु



...॥ शन्नऽइंद्रोव... ॥ शंनोरुद्रोरुद्रेभिर्जलाषः...
...णोतु ॥ शंनःसोमोभवतुब्रह्मशंनःशंनोग्रावाणःशमुसंतुयज्ञाः ॥ शन्नःस्वरूणांमितयो
भवंतुशंनःप्रस्व...शम्वस्तुवेदिः ॥ शन्नःसूर्यऽउरुचक्षाऽउदेतुशन्नश्चतस्रःप्रदिशोभवंतु ॥ शंनःपर्वता
ध्रुवयोभवंतुशंनःसिंधवःशमुसंत्वापः ॥ शन्नोऽअदितिर्भव...व्रतेभिःशन्नोभवंतुमरुतःस्वर्काः ॥ शन्नोविष्णुः
शमुपूषानोऽअस्तुशंनोभवित्रंशम्वस्तुवायुः ॥ शंनोदेवःसविताज्ञायमाणःशंनोभवंतूषसोविभातीः ॥ शन्नः
पर्जन्योभवतुप्रजाभ्यःशंनःक्षेत्रस्यपतिरस्तुशंभुः ॥ २ ॥ शन्नोदेवाविश्वदेवाभवंतुशंसरस्वतीसहधीभिर
स्तु ॥ शमभिषाचःशमुरातिषाचःशंनोदिव्याःपार्थिवाःशंनोऽअप्याः ॥ शंनःसत्यस्यपतयोभवंतुशंनोऽअ
र्वंतःशमुसंतुगावः ॥ शंनऽऋभवःसुकृतःसुहस्ताः शंनोभवंतुपितरोहवेषु ॥ शंनोऽअजऽएकपाद्देवोऽ
अस्तुशंनोहिर्बुध्न्यःशंसमुद्रः ॥ शंनोऽअपांनपात्पेरुरस्तुशंनःपृश्निर्भवतुदेवगोपा ॥ आदित्यारुद्रावसं
वोजुषंतेदंब्रह्मक्रियमाणंनवीयः ॥ शृण्वंतुनोदिव्याःपार्थिवासोगोजाताऽउतयेयज्ञियासः ॥ येदेवानांयज्ञि
यायज्ञियानांमनोर्यजत्राऽअमृताऽऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ ३ ॥ ॐ

...पचारैःपू
...क्तवस्त्ररक्तचंदनरक्ता

त्यमूषुवाजिनंदेवजूतंसहावानंतरुतारंरथानां ॥ अरिष्टनेमिंपृतनाजमाशुंस्वस्तयेतार्क्ष्यमिहाहुवेम ॥ इंद्रस्ये वरातिमाजोहुवानाःस्वस्तयेनावंमिवारुहेम ॥ उर्वीनपृथ्वीबहुलेगभीरेमावामेतौमापरेतौरिषाम ॥ सद्य श्चिद्यःशवसापंचकृष्टीःसूर्यऽइवज्योतिषापस्ततान ॥ सहस्रसाःशतसाऽअस्यरंहिर्नस्मावरंतेयुवतिंनश र्यां ॥ १ ॥ ॐतच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजि गातुभेषजं ॥ शंनोऽअस्तुद्विपदेशंचतुष्पदे ॥ ततोयजमानोनवग्रहप्रीत्यर्थंभुवनेश्वरींद्राणींद्रप्रीतयेच प्रत्येकंत्रींस्त्रीन्ब्राह्मणान्भोजयित्वासंकल्प्यवाविप्राशिषोगृहीत्वासद्युक्तोभुंजीत ॥ एवंकृतेसर्वारिष्टशांति र्भवति ॥ ततः शुभकालेगर्भाधानंकुर्यात् ॥ इतिदुष्टरजोदर्शनशांतिः ॥ अथचंद्रसूर्योपरागकालेप्रथमर जोदर्शनेशांतिविशेषउच्यते ॥ सचोपरागस्यपौर्णमास्यमावास्याभ्यामभावात्तदतिरिक्तवारादौप्रागुक्त शांत्यासमुच्चीयतेनिमित्तभेदात् ॥ अदृष्टार्थत्वाच्च ॥ प्र[illegible]क्षाविध्यभावेतत्कार्यकारित्वानवगमेनामनहोमै र्नारिष्टहोमानामिरानयातन्निवृत्तियोगात् ॥ ग्रहणमात्रेत्वियमेव ॥ अत्रपुनश्चश्रवणाभावान्नवग्रहमखः [illegible]इतिस्तुकः ॥ अत्रकेवलायाः प्रयोगः ॥ पूर्वोक्तकालेसस्त्रीकः ॥ शुचिः प्राङ्मुखउपविश्यप्रा मोराहूगर्णौ[illegible]स्मृत्वाममपत्न्याश्चंद्रोपरागेप्रथमरजोदर्शनसूचितारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थं इतिसंकल्प्य[illegible]हूतौशमंतरिक्षंदशयेनो[illegible] ॥ शं[illegible]नवग्रहमितिसूर्योपरागेप्रथमे[illegible]



वदेत् ॥ ततः आचार्यः शुचिदेशेगोमयेनोपलिप्यतत्रपंचवर्णरजोभिरष्टदलंपद्मंकृत्वातदुपरिनवंश्वेतवस्त्रं उदक्दशंस्थाप्ययथाशक्तिरजतनिर्मितांचंद्रप्रतिमामाप्यायस्वगौतमःसोमोगायत्री ॥ चंद्रावाहनेविनियो गः ॥ ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ चंद्रमावाहयामीतिस्थापये त् ॥ सूर्यग्रहेतुयथाशक्तिसुवर्णनिर्मितप्रतिमामाकृष्णेनहिरण्यस्तूपःसवितात्रिष्टुप् ॥ सूर्यावाहनेविनियोगः॥ ॐआकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ सूर्यमावाहयामीतिस्थापयेत् ॥ ततोयथाशक्तिसीसानिर्मितांस्वर्भानोरत्रिराहुरनुष्टुप् ॥ राह्वावाहनेविनियो गः ॥ ॐस्वर्भानोरधयदिंद्रमायाऽअवोदिवोवर्तमानाऽअवाहन् ॥ गूळ्हंसूर्यंतमसापव्रतेनतुरीयेणब्रह्मणाविं ददत्रिः ॥ राहुमावाहयामीतितदुत्तरतः स्थापयेत् ॥ ततोयस्मिन्नक्षत्रेग्रहणंतन्नक्षत्रदेवताप्रतिमांयथाशक्ति सुवर्णनिर्मितांतत्तन्मंत्रैर्नाममंत्रैर्वा ॥ ॐअश्विनावावाहयामीतिनमइतिप्रणवादिनमोंतैः स्थापयेत् ॥ मं त्रास्त्वापस्तंबानामष्टौवाक्यानीतिप्रसिद्धाः ॥ नामानितु ॥ अश्विनौयमः अग्निः प्रजापतिःसोमःरुद्रःअदि [illegible]सर्पाःपितरःभगःअर्यमासवितात्वष्टावायुःइंद्राग्नीमित्रःइंद्रःनिर्ऋतिःआपःविश्वेदेवाःविष्णुःवस श्रयातियस्यामु[illegible] अहिर्बुध्न्यःपूषेति [illegible]एवंदेवतात्रयमावाह्यैभिरेवमंत्रैःकांडानुसमयेनषोडशोपचारैःपू [illegible]चंद्रायश्वेतानिवस्त्रगंधाक्षतमाल्यानिदेयानि [illegible]ग्रहेतुसूर्यायरक्तवस्त्ररक्तचंदनरक्ता

...ान ॥ राहवे ... ानि ॥ नक्षत्रदेवताभ्यः ... ॥ ततः पश्चिमतोग्निंप्रतिष्ठाप्यपक्षे
त्यमूषुवाजिनंदेवजूतंसर्वंसंपूज्यान्वाधानंकुर्यात् ॥ तद्यथा ॥ द्वेसमिधौगृहीत्वाचक्षुषीआज्येनेत्यंतमुक्त्वापक्षे
... श्याष्टशताष्टाविंशत्यन्यतमसंख्यामुद्दिश्यचंद्रममुकसंख्याभिःपालाशसमिदाज्यचरुतिला
हुतिभिःराहुंअमुकसंख्याभिर्दूर्वाज्यचरुतिलाहुतिभिर्नक्षत्रदेवताम ... ुकसंख्यापालाशसमिदाज्यचरुतिलाहु
तिभिर्यक्ष्येशेषेणेत्युक्त्वाजुहुयात् ॥ सूर्यग्रहेचंद्रस्थानेसूर्यममुकसंख्यार्कसमिदाज्यचरुतिलाहुतिभिरितिवदे
त् ॥ एवमन्वाधायप्रणीताप्रणयनांतंकृत्वात्रिभ्योमुष्मैत्वेतिचतुरश्चतुरोमुष्टीन्निरूप्यचरुंश्रपयित्वाज्यभागांतं
कुर्यात् ॥ ततोयजमानोदक्षिणतोदेवताउद्दिश्यत्यजेत् ॥ ततोन्वाधानक्रमेणजुहुयुः ॥ तत्रतिसृणांदूर्वाणामेकै
काहुतिः ॥ समिधश्चत्रिम ... वाक्ताः कार्याः ततः स्विष्टकृतादिपूर्णाहुत्यंतंप्राग्वत् ॥ ततआचार्यएकस्मिन्कलशे
जलपूर्णेपंचगव्यानिपंचरत्नानिवटाश्वत्थोदुंबराम्रबिल्वानांत्वचः पल्लवान्सर्वौषधिकल्कंदूर्वाःकुशांश्चनि
क्षिप्यसऋत्विग्दंपतीपूर्ववदभिषिंचेदेभिर्मंत्रैः ॥आपोहिष्ठेतितृचस्यांबरीषः सिंधुद्वीपआपोगायत्री ॥ अभिषे
केविनियोगः ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥योवःशिवतमोरसस्तस्यभाजय
तेहनः ॥ उशतीरिवमातरः ॥ तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ इमंमेगंगेसिंधु
क्षित्प्रैय्यमेधाआपोजगती ॥ अभिषेकेविनि० ॥ ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥

असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ तत्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ अभिषेकेविनियो
गः ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥अहेळमानोवरुणेहबोध्युरुशंसमानऽआयुः
प्रमोषीः ॥ अन्येपिसमुद्रज्येष्ठाइत्यादयः ॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् ॥ अभिषेकेवि०
ॐसमुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद ताऽआपोदेवीरिहमा
मवंतु ॥ याऽआपोदिव्याऽउतवास्रवंतिखनित्रिमाऽउतवायास्वयंजाः॥ समुद्रार्थायाःशुचयःपावकास्ताऽआ
पोदेवीरिहमामवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृतेऽअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावका
स्ताऽआपोदेवीरिहमामवंतु ॥ यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति ॥ वैश्वानरोयास्वग्निः
प्रविष्टस्ताऽआपोदेवीरिहमामवंतु ॥ त्रायंतामितितिसृणांसप्तऋषयआपोनुष्टुप् ॥ अभिषेकेविनियोगः ॥
ॐ त्रायंतामिहदेवास्त्रायंतांमरुतांगणः ॥ त्रायंतांविश्वाभूतानियथायमरपाऽअसत् ॥ आपइद्वाऽउभेषजीरा
... मीवचातनीः ॥ आपःसर्वस्यभेषजीस्तास्तेकृण्वंतुभेषजं ॥ हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरो
नाधोहिदशमभि ... भ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ इमाआपइतितिसृणांसप्तऋषयआपोनुष्टुप् ॥ अभि
त्रिष्टुप् ॥ जपेवि ... इमाऽआपःशिवतमाऽइमाःसर्वस्यभेषजीः ॥ ... राष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥
श्रयातियस्यांमुश ... आज्येनेत्यंतमुक्त्वाप्रजाप ... मग्न्यावाधायपरिसमूहनादिपूर्णपात्रनिधा ...

मु०शां० ॥११६॥

...सो...नंवरुणंयमंमनुं ॥ ताभिरिंद्र...षिंचामित्वामहंराज्ञांत्वमंधिराजो भ
त्यमूषुवाजिनंदेवजूतंह्यहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ देवस्यत्वासवितुःप्र
...गेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रि...भिषिंचामि ॥ सुरास्त्वामभिषिंचंतुब्र
ह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥
आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहि
ताःसर्वेदिक्पालाःपांतुतेसदा ॥ ३ ॥ कीर्तिर्लक्ष्मीधृतिर्मेधापुष्टिश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांति
स्तुष्टिः क्षांतिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधजी
वसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥
॥ ६ ॥ ऋषयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अ
स्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ ८ ॥ सरितःसाग
राःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ९ ॥ इतिपौराणाश्च ॥ ततः
स्नानंदक्षिणादानप्रतिपादनादिपूर्ववत् ॥ यदातुपूर्वशांतिसमुच्चयःतदाकालैक्यात्कर्त्रैक्याच्चाग्नेयादिवत्तंत्र
प्रयोगः ॥ तत्रयजमानोदेशकालौस्मृत्वाममास्याःपत्न्याःप्रथमरजोदर्शनेमुकदुष्टमासतिथ्यादिअमुकग्र

...जांतंविदध्यात् ॥ तच्चआचार्योभुवनेश्वर्यादिपूजांतःप्राक्पश्चाद्वाततउ
...निर्वापहोमाभिषेकान्कुर्यादितिविशेषः ॥ अन्यत्सर्वंसमानंइतिग्रहणर
...वेदम्मुकुटमाणिक्यश्रीमद्रामेश्वरभट्टसुतनारायणभट्टकृतेप्रयोगरत्नेरमज्ज्येष्ठ
...दर्शनशांतिः समाप्ता ॥ ॥ ७ ॥ ॥ ७ ॥

॥ ७७ ॥ ॥ अथ गर्भाधान संस्कार प्रारंभः ॥

...रजोदर्शनात्षोडशाहोरात्राणिऋतुस्तन्मध्येआद्यंरात्रिचतुष्कंपर्वादिनिषिद्धदिना
...दिव्यतिरिक्तेदैवज्ञोक्तेशुभकालेदंपत्योश्चंद्रेनुकूलेगर्भाधानंकार्यं ॥ तत्रापियुग्मासुर
...जायंतेइत्यादिज्ञेयं ॥ अत्रायंक्रमः ॥ कर्ताप्रातरभ्यंगस्नानंकृत्वापत्नीमपिनवोद
...पंचपल्लवपंचत्वक्सहितैःस्नापयित्वातयासहमंगलवस्त्राभरणादिधृत्वाचम्यस्व
...पासनाग्निमारुतसंज्ञंप्रतिष्ठाप्यप्रज्वाल्यदेशकालौस्मृत्वाअस्याः ममभार्यायाःप्रति
...स्यांजनिष्यमाणसर्वगर्भाणांबीजगर्भसमु...वैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंग
...इतिसंकल्प्यसमिद्वयमादायगर्भाधानंकर्तुंप्रजापत्यहोमंकरिष्ये ॥ तत्रदेवतापरिग्र
...आज्येनेत्यंतमुक्त्वाप्रजापतिंचरुणाविष्णुंषड्वारमाज्येनप्रजापतिंचाज्येनशेषेणस्विष्टकृत
...मग्नावाधाय परिसमूहनादिपूर्णपात्रनिधानांतंकृत्वाप्रजापतयेत्वाजुष्टं

वदानधर्मेणावदाय ॥ ॐ प्रजापतयेस्वाहेतिचरुणैकाहुतिंहुत्वा ॥
त्वष्टाविष्णुरनुष्टुप् ॥ गर्भाधानप्रधानाज्यहोमेविनियोगः ॥ ॐ विष्णुर्योनिंकल्पयतु
आसिंचतुप्रजापतिर्धातागर्भंदधातुतेस्वाहा ॥ विष्णवइदंनमम ॥ ॐ गर्भंधेहिसि
॥ गर्भंतेऽअश्विनौदेवावाधत्तांपुष्करस्र॑जा॥स्वाहा ॥ विष्णवइदंनमम ॥ ॐ हि
अश्विना ॥ तंतेगर्भंहवामहेदशमेमासिसूतवेस्वाहा ॥ विष्णवइदं॰ नेजमेषेति
॥ गर्भाधानप्रधानाज्यहोमेविनियोगः ॐ नेजमेषपरापतसुपुत्रःपुनरापत ॥
धेहियःपुमान्स्वाहा ॥ विष्णवइदं॰ ॥ ॐ यथेयंपृथिवीमह्युत्तानागर्भमादधे ॥
सिसूतवेस्वाहा ॥ विष्णवइदं॰ ॥ ॐ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां ॥ पु
सूतवेस्वाहा ॥ विष्णवइदं॰ ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ गर्भा
॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहु
णांस्वाहा ॥ प्रजापतयइदंनमम ॥ एवंसप्ताज्याहुतीर्हुत्वा ॥ अपनःशो
ग्निर्गायत्री ॥ पत्न्यामूर्धाभिमर्शनेवि॰ ॥ ॐ अपनःशोशुचदघमग्नेशुशुग्ध्या



त्रियासुंगातुयावसूयाचयजामहे ॥ अपनःशोशुचदघं ॥ प्रयद्भंदिष्ठएषां
शोशुचदघं ॥ प्रयत्तेऽअग्नेसूरयोजायेमहिप्रतेवयं ॥ अपनःशोशुचदघं ॥
तभानवः ॥ अपनःशोशुचदघं ॥ त्वंहिविश्वतोमुखविश्वतःपरिभूरसि ॥ अ
विश्वतोमुखातिनावेवपारय ॥ अपनःशोशुचदघं ॥ सनःसिंधुमिवनावयाति
शुचदघं ॥ याःफलिनीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप् ॥ जपेविनियोगः ॥
ऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः ॥ एतांजपित्वा ॥ वधेम
स्त्रिष्टुप् ॥ अग्न्युपस्थानेवि॰ ॥ वेधेनदस्युंप्रहिचातयस्ववयःकृण्वानस्तन्वे
सपुत्रदेवान्त्सोऽअग्नेपाहिनृतमवाजेअस्मान् ॥ वयंतेऽअग्नउक्थैर्विधेमवयंहव्यैःपा
यिविश्ववारंसामिन्वास्मेविश्वानिद्रविणानिधेहि ॥ अस्माकमग्नेऽअध्वरंजुषस्वसह
॥ वयंदेवेषुसुकृतस्यामशर्मणानस्त्रिवरूथेनपाहि ॥ विश्वानिनोदुर्गहाजातवेदःसिंधुं
अग्नेऽअत्रिवन्नमसागृणानो स्माकंबोध्यवि तनूनां ॥ यस्त्वांहृदाकीरिणामन्यमा
अस्मासुधेहिप्रजाभि तत्वमश्यां ॥ यस्मैत्वंसुकृतेजातवे
स्वयस्यांबीजंमनुष्या
सिष्ठःपर्जन्योगायत्री ॥ जपेवि॰ ॥ गन धी

नांगवांकुणोत्यर्वेतां ॥ पर्जन्यः पुरुषीणां ॥ अहंगर्भप्रजावान्प्राजापत्योगर्भइंद्रोवात्रिष्टुप् ॥ जपेवि० ॥
ॐ अहंगर्भमदधामोषधीष्वहंविश्वेषुभुवनेष्वंतः ॥ अहंप्रजाअजनयंपृथिव्यामहंजनिभ्योऽअपरीषुपुत्रा
न् ॥ इतित्रीन्मंत्रान्जपित्वासकृदुपगच्छेत् ॥ ततःप्राणेतेरेतोदधाम्यसावित्यनुप्राण्यः॥यथाभूमिरग्निगर्भाय
थाद्यौरिंद्रेणगर्भिणी ॥ वायुर्यथादिशांगर्भएवंतेगर्भंदधाम्यसाविति स्त्रीहृदयमभिमृश्याचामेत् ॥ मंत्रद्वये
पिअसावित्यस्यस्थानेप्रथमैकवचनांतंस्वनामवदेत् ॥ अस्मिन्कर्मणिशतंब्राह्मणाभोज्याःदशवायदिप्रथ
मरजोदर्शनंदुष्टतिथिवारनक्षत्रादिषुजायतेतदादोषपरिहारायशौनकोक्तांशांतिंकृत्वाप्रशस्ततिथ्यादिष्वृतुदर्श
नपर्यंततस्यांगमनंवर्ज्यं ॥ तदाहज्योतिर्वसिष्ठः ॥ प्रभूतदोषेयदिविद्यतेततूपुष्पंततःशांतिककर्मकार्यं ॥
विवर्जयेदेवतयैकशय्यांयावद्रजोदर्शनमिष्टकालेइति ॥ एतत्कर्माकरणेप्रायश्चित्तमाहाचार्यः ॥ गर्भाधा
नस्याकरणात्तस्यांजातस्तदुष्यति ॥ अकृत्वागांद्विजेदत्त्वाकुर्यात्पुंसवनंपतिरिति ॥ ॥ इतिश्रीभट्टरामे
श्वरसूनुनारायणभट्टकृतेप्रयोगरत्नेगर्भाधानप्रयोगः ॥ ॥ इति गर्भाधानं समाप्तं ॥ ॥ छ ॥ ॥ छ ॥

॥ ७८ ॥ ॥ अथ पुंसवन प्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ पुंसवनानवलोभनप्रयोगः ॥ करिष्यमाणःपतिःपूर्वेद्युःपुंसवनार्थंसमानरूपवत्सा

याःगोस्तदलाभेअन्यस्यावाक्षीरंदध्यर्थंपुष्टंमाषषट्कंयवत्रयंचसंपाद्यवृत्ताकारमविरलच्छायमच्छावकाशंगृ
हैकदेशंकृत्वाविधिवत्स्वस्तिवाचनग्रहयज्ञाभ्युदयिकानिकृत्वागर्भाभिवृध्याविरोधिहविषाकृतैकभक्तांभा
र्यांकृत्वाब्रह्मचारीसन्परेद्युरनुकूलकालेमंगलस्नातांपरिहिताहतवाससंप्रावृतप्रावरणीयांभूषणभूषितांभार्यां
पूर्वकृतदेशेस्वदक्षिणतउपवेश्यसद्योवाकृतस्वस्तिवाचनादिदेशकालौस्मृत्वाआस्यांभार्यायामुत्पत्स्यमानस्य
गर्भस्यबैजिकगार्भिकदोषपरिहारपुंरूपताज्ञानोदयप्रतिरोधपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंपुंसवनानवलो
भनंचतंत्रेणकरिष्येइतिसंकल्प्य ॥ विधिवत्कौतुकसूत्रमाबध्यविधिवदौपासनाग्निंपवमानसंज्ञंप्रतिष्ठाप्याद्य
क्रियमाणेपुंसवनानवलोभनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेऽग्नौइत्यादिचक्षुषी
आज्येनेत्यंतमुक्त्वाप्रजापतिंचरुद्रव्येणशेषेणस्विष्टकृतमित्याद्युक्त्वान्वाधायपरिसमूहनपरिस्तरणादिप्रणीता
प्रणयनावधिप्राक्तनतंत्रंकृत्वाप्रजापतयेत्वाजुष्टंनिर्वपामीतिचतुरोमुष्टीन्निरूप्यप्रोक्षणावघातादिबर्हिषिहविरा
सादनांतंकृत्वास्वदक्षिणतःप्रत्यग्ग्रीवमुत्तरलोमानडुहंचर्मास्तीर्यआत्मानमग्निंचांतरापत्नीमाचांतसविलामा
नीयचर्मण्युपवेश्यतयान्वारब्धइध्माधानाज्यभागांतंकृत्वाप्रक्षालितेप्रसृतीकृतेदक्षिणेपत्नीपाणौप्रसृतिमितं
तद्रोदाधिनिक्षिप्यतदुपरिलिंगवद्यवंतत्पार्श्वयोरंडद्वयवन्माषद्वयंनिधायकिंपिबसीतित्रिःपतिःपत्नींपृच्छेत्सा
चपुंसवनमितित्रिरुक्त्वासयवमाषंतद्दधिनिःशेषंपीत्वाजलमाचमय्यपुनरेवंद्विःप्रश्नप्रतिवचनपूर्वकंप्राश्याचा
मेत्एतत्पुंसवनं ॥ ॥ इति पुंसवनं समाप्तं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥

## ॥ ७९ ॥ ॥ अथ अनवलोभनप्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ दूर्वाःकन्ययाद्दषदुपलेनपेषयित्वापिंडीकृत्यशुद्धवसनांचलेसंगृह्यप्रजावदाख्यं जीवपुत्रसंज्ञकंचजपित्वामंडलागारच्छायायांउपविष्टायाःप्राङ्मुख्याःस्त्रियाःपश्चिमतस्तिष्ठन्पतिःतदानन मुन्नमय्यदक्षिणेनासाबिलेस्वांगुष्ठाग्रेणदूर्वारसमासिंचेत्तत्रप्रजावदाख्यंसूक्तं ॥ आतेगर्भोयोनिमैतुपुमान् बाणइवेषुधिं ॥ आवीरोजायतांपुत्रस्तेदशमास्यः ॥ करोमितेप्राजापत्योमागर्भोयोनिमैतुते ॥ अनूनःपूर्णो जायतामश्लोणोपिशाचधीतः ॥ पुमांस्तेपुत्रोनारितंपुमाननुजायतां ॥ तानिभद्राणिबीजान्यृषभाजनयंतु नौ ॥ यानिभद्राणिबीजान्यृषभाजनयंतिनः ॥ तैस्त्वंपुत्रान्विंदस्वसाप्रसूर्धेनुकाभव ॥ कामःसमृध्यतां मह्यमपराजितमेवमे ॥ यंकामंकामयेदेवतन्मेवायोसमर्धय ॥ अथजीवपुत्राख्यंसूक्तं ॥ अग्निरैतुप्रथमोदेव तानांसोस्यैप्रजांमुंचतुमृत्युपाशात् ॥ तदयंराजावरुणोनुमन्यतांयथेयंस्त्रीपौत्रमघंनरोदात् ॥ इमामग्निस्त्रा यतांगार्हपत्यः प्रजामस्यैनयतुदीर्घमायुः ॥ अशून्योपस्थाजीवतामस्तुमातापौत्रमानंदमभिप्रबुध्यतामियं ॥ मातेगृहेनिशिघोषउत्थायान्यत्रत्वद्रुदत्यःसंविशंतु ॥ मात्वंविकेश्युरआवधिष्ठाजीवपत्नीपतिलोकेविराजप श्यंतीप्रजांसुमनस्यमानाअप्रजस्तांपौत्रमृत्युंपाप्मानमुतवाघं ॥ शीर्ष्णःस्रजमिवोन्मुच्यद्विषद्भ्यःप्रतिमुं चामिपाशं ॥ देवकृतंब्राह्मणकल्पमानंतेनहन्मियोनिषदःपिशाचान् ॥ क्रव्यादोमृत्यूनधरान्पातयामिदी र्घमायुस्तवजीवंतुपुत्राः ॥ एतैर्दशभिर्मंत्रैर्नस्येदत्ते आचांतेजलेनपत्न्यास्पृष्टःप्राजापत्यंचरुंअवदानधर्मेणाव



दायप्रजापतयेस्वाहेत्येकाहुतिंहुत्वायत्तेसुशीमइतिमंत्रेणपत्न्याहृदयंपाणिनास्पृशेत् ॥ यत्तेसुशीमइतिमं त्रस्यहिरण्यगर्भः प्रजापतिरनुष्टुप्भार्यायाहृदयालंबनेविनियोगः ॥ ॐयत्तेसुशीमेहृदयेहितमंतःप्रजापतौ ॥ मन्येहंमांतद्विद्वांसंमाहंपौत्रमघंनियामीतिततःस्विष्टकृदादिहोमशेषंसमाप्यशतंब्राह्मणाभोज्याः ॥ इदं कर्मगर्भसंस्कारत्वात्प्रतिगर्भंकार्यं ॥ प्रथमगर्भएवेतिकेचित् ॥ अस्यकर्मणःकर्तापतिस्तदसंभवेदेवरो वा ॥ ॥ इति अनवलोभनप्रयोगः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ८० ॥ ॥ अथ सीमंतोन्नयनप्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ तच्चगर्भमासापेक्षयाचतुर्थेषष्ठेष्टमेवामासिअसंभवेवायावत्प्रसवंशुक्लपक्षेपुनर्व सुपुष्याभिजिद्धस्तप्रोष्ठपदानुराधाश्विनीमूलश्रवणरेवतीरोहिणीमृगशिरःसंज्ञकानांपुन्नक्षत्राणांचतुर्धाविभ क्तानांमध्यमपादद्वयेषष्ठ्यष्टमीद्वादशीचतुर्थीनवमीचतुर्दशीअमावास्याव्यतिरिक्ततिथौसोमबुधबृहस्पतिशु क्रवारेषुचंद्रमानुकूल्येविष्ट्यादिदोषाभावेशुभलग्नादौकार्यं ॥ तत्राप्यधिकमासगुरुशुक्रास्तादीनांनदोषः ॥ कालांतरसंभवेपूर्ववन्नियतकालत्वात् ॥ अथप्रयोगः॥ सीमंतकर्मकरिष्यन्पतिरानडुहमजिनमपक्वफलयु ग्मयुताबुदुंबरस्तबकौतदभावेअन्यस्तबकौवात्रिशुक्लवर्णाशललींत्रीणिकुशपिंजूलानिचसंपाद्यपुण्याहवाच नग्रहयज्ञाभ्युदयिकानितदहरेवानुष्ठायमंगलस्नातांपरिहितप्रावृताहतवाससींयुगुलामलंकृतांपत्नींस्वदक्षि णतउपवेश्यदेशकालौस्मृत्वातनुरुधिराप्रियालक्ष्मीभूतराक्षसीगणदूरनिरसनक्षमसकलसौभाग्यनिदानभूतम

हालक्ष्मीसमावेशनद्वाराप्रतिगर्भबीजगर्भसमुद्भवैनोनिबर्हणजनकातिशयद्वाराश्रीपरमेश्वरप्रीत्यर्थस्त्रीसंस्का
ररूपंसीमंतोन्नयनाख्यंकर्मकरिष्येइतिसंकल्प्यवधूंकृतकौतुकबंधांआर्चितेष्टदेवतांकृत्वाशुभमुहूर्तेऔपासना
ग्निंमंगलनामानंविधिवत्प्रज्वाल्यसमिद्द्वयमादायपुनर्देशकालौस्मृत्वाऽद्यकरिष्यमाणेसीमंतोन्नयनहोमेदेव
तापरिग्रहार्थमन्वाधानंकरिष्यइत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाद्विर्धातारंद्विराकांत्रिर्विष्णुंप्रजापतिंचैताःप्रधा
नदेवताआज्येनशेषेणस्विष्टकृतमित्यादिपूर्ववदुक्त्वासमिद्द्वयमग्नावाधायपरिसमूहनादिकृत्वाप्रत्यगग्नेःस्व
स्यदक्षिणतःप्राग्ग्रीवमुत्तरलोमकमानडुहमजिनमास्तीर्योदगग्नेर्दर्भेषुप्रोक्षणीपात्रस्त्रुवौप्रणीताआज्यपात्रेइ
ध्माबर्हिषीचक्रमादासाद्याज्यसंस्कारांतेकृतेतस्मिन्नजिनेतामाचांतोदकांप्राङ्मुखींपत्नीमुपवेश्यतयान्वार
ब्धइध्माधानाद्याज्यभागांतंकर्मकृत्वाधातादददातुदाशुषइतिमंत्रद्वयस्याहिरण्यगर्भोधातानुष्टुप्सीमंतोन्नयनप्र
धानाज्यहोमेविनियोगः॥ एवमग्रेपिविनियोगः॥ ॐधातादददातुदाशुषेप्राचींजीवातुमक्षितां॥ वयंदेवस्यधीम
हिसुमतिंसत्यधर्मणःस्वाहा॥ धात्रइदंनमम ॥ ॐ धाताप्रजानामुतरायईशेधातेदंविश्वंभुवनंजजान ॥ धाता
कृष्टीरनिमिषाभिचष्टेधात्रइद्धव्यंघृतवज्जुहोतस्वाहा ॥ धात्रइदंनमम॥ राकामहमितिद्वयोर्गृत्समदोराकाजग
ती ॥ विनियोगःप्राग्वत् ॥ ॐ राकामहंसुहवांसुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना ॥ सीव्यत्वपःसूच्याच्छि

द्यमानयाददातुवीरंशतदायमुक्थ्यं स्वाहा ॥राकायाइदंनमम ॥ ॐ यास्तेराकेसुमतयःसुपेशसोयाभिर्ददा
सिदाशुषेवसूनि ॥ ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषंसुभगेरराणास्वाहा ॥ राकायाइदंनमम ॥ नेजमेषे
तितिसृणांहिरण्यगर्भोविष्णुरनुष्टुप् ॥ विनियोगःप्राग्वत् ॥ ॐ नेजमेषपरापतसुपुत्रःपुनरापत ॥ अस्यैमेपुत्र
कामायैगर्भमाधेहियःपुमान्स्वाहा॥ विष्णवइदंनमम॥ ॐ यथेयंपृथिवीमह्युत्तानागर्भमादधे ॥ एवंतंगर्भमा
धेहिदशमेमासिसूतवेस्वाहा ॥ विष्णवइदंनमम॥ ॐ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां ॥ पुमांसंपुत्रा
नाधेहिदशमेमासिसूतवेस्वाहा ॥ विष्णवइदंनमम ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप्॥ विनियोगःप्रा
ग्वत् ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्याम
पतयोरयीणांस्वाहा ॥ प्रजापतयइदंनमम ॥ एवमष्टाज्याहुतीःस्त्रुवेणहुत्वापत्न्याःपश्चिमतःप्राङ्मुखस्ति
ष्ठन्अपक्वफलयुग्मान्वितमौदुंबरस्तबकद्वयंत्रिशुक्लांशलल्लींकुशांकुरत्रयंचैकीकृतंपाणिनागृहीत्वातन्मूलेन
पत्न्याःकेशललाटयोःसंधिमारभ्यामूर्धप्रदेशात् ॐ भूर्भुवस्वरोमितिमंत्रेणत्रिश्चतुर्वारंप्रत्युन्नयनंमंत्रमावर्तय
न्सीमंतमुन्नयेत् ॥ ॐ ॥ भूर्भुवस्वरितिमंत्रस्यप्रजापतिःप्रजापतिर्बृहती ॥ सीमंतव्यूहनेविनियोगः ॥ त
तोयथाचारंसगोधूमामौदुंबरफलमालांतत्कंठेनिधायवीणागाथिनौद्विजौसोमंराजानंसंगायेतामितिप्रेषयेत् ॥

तौच ॥ ॐ सोमोनोराजावतुमानुषीःप्रजानिविष्टचक्रासाविति मंत्रंअसावित्यस्यस्थानेगंगेइत्यादिसमीपस्थ नद्याःसंबुध्यंतंनामनिर्दिशंतौवीणयागायेतां ॥ सामगानामपरिज्ञानेमंत्रमात्रंत्रिःपठेतां ॥ ततःस्विष्टकृदादि होमशेषंसमाप्यब्रह्मणेऋषभंदक्षिणांतदभावेऽन्यस्मैविदुषेब्राह्मणायदत्त्वापतिपुत्रवतीभिर्वृद्धाभिरुपदिष्टंमंग लाचारंकारयेत् अस्मिन्कर्मणिशतंब्राह्मणभोज्याः ॥ इदंकर्मभर्त्रैवकार्यं ॥ इदंचप्रतिगर्भनावर्तते ॥ तथा चहारीतः ॥ सकृत्तुकृतसंस्काराःसीमंतेनद्विजातिभिः ॥ यंयंगर्भप्रसूयंतेससर्वःसंस्कृतोभवेत् ॥ कारिका पि ॥ नावर्ततइदंकर्मप्रतिगर्भमितिस्थितिरिति ॥ अकृतसीमंतायाःप्रसवेविशेषःसत्यव्रतेनोक्तः ॥ स्त्रीयद्य कृतसीमंताप्रसूयेतकथंचन ॥ पुत्रंगृहीत्वाविधिवत्पुनःसंस्कारमर्हतीति ॥ इति सीमंतोन्नयनप्रयोगःसमाप्तः ॥

॥ ८१ ॥ ॥ अथ समंत्रक विष्णु बलि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथविष्णुबलिविधि प्रारंभः ॥ गर्भाष्टमेमासेपूर्वेद्युर्दंपतीस्नातौधृताहतवाससाव लंकृतौभवेतांततःपतिःप्रागुक्तवदाभ्युदयिकंपुण्याहवाचनंकृत्वातदहरेववाइदंकृत्वादेशकालौस्मृत्वागुर्वि ण्याममपत्न्यागर्भस्यनिर्बाधपरिपोषणपूर्वकसुखप्रसूतिसिध्यर्थंगर्भाधिदेवताविष्णुप्रीतिकामोऽहंविष्णुबलि नामकंकर्मकरिष्ये ॥ इतिसंकल्प्यद्वितीयासप्तमीद्वादशीश्रवणरोहिणीपुष्येषुचंद्रबलेविष्ट्यादिदोषाभावेपूर्वा ह्णेगृहांगणेगृहेवास्थंडिलेगृह्याग्निंप्रतिष्ठाप्यपुनर्देशकालावुक्त्वाकरिष्यमाणेविष्णुबलिहोमेदेवतापरिग्रहार्थ मित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाविष्णुंप्रधानदेवतांचतुःषष्टिवारंचरुणाशेषेणस्विष्टकृतमित्याद्युक्त्वान्वाधा

यपरिसमूहनादिआज्येदर्भाग्रद्वयप्रक्षेपांतंकृत्वासिद्धान्नेनसहाज्यंत्रिःपर्यग्निकृत्वास्रुवसंमार्जनांतंकृत्वाचरुंपा त्रांतरेपृथक्कृत्वाग्नावधिश्रित्याभिघार्योदगुद्वास्याज्याद्दक्षिणतोबर्हिष्यासाद्यप्रत्यभिघारणाद्याज्यभागांतंकृ त्वादक्षिणतोग्नेःस्थंडिलेअष्टदलंपद्मंस्वस्तिकंवाप्रकल्प्यतत्रविष्णुमावाह्यषोडशोपचारैरभिपूज्यपुनर्यथासन मासित्वापत्न्यान्वारब्धोवदानधर्मेणचरुमवदायस्रुचाचतुःषष्टिमंत्रैःचतुःषष्टिराहुतीर्जुहुयात् ॥ तत्रायंक्रमः ॥ अतोदेवाइतिषड्वस्यमेधातिथिर्विष्णुर्गायत्री ॥ विष्णोर्नुकमितिसप्तदशर्चस्यसूक्तस्य ॥ उचथ्यपुत्रोदीर्घ तमाविष्णुः ॥ प्रथमसूक्तंत्रैष्टुभं ॥ द्वितीयतृतीयेजागते ॥ संवामित्यष्टर्चस्यभरद्वाजोविष्णुस्त्रिष्टुप् ॥ परो मात्रयेतिवर्गद्वयस्यवसिष्ठोविष्णुस्त्रिष्टुप् ॥ सहस्रशीर्षेतिवर्गत्रयस्यनारायणःपुरुषोनुष्टुप् ॥ अंत्यास्त्रिष्टुप् ॥ विष्णुर्योनिमितितिसृणांहिरण्यगर्भोविष्णुरनुष्टुप् ॥ सर्वत्रविष्णुबलिप्रधानचरुहोमेविनियोगः ॥ विष्णवइ दंनममेतिसर्वत्रोद्देशत्यागौकृत्वा ॥ ॐ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याःसप्तधामभिःस्वा हा ॥ विष्णवइदं० ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूळ्हमस्यपांसुरेस्वाहा ॥ वि० ॥ ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन्स्वा० ॥ वि० ॥ ॐ विष्णोःकर्माणिप श्यतयतोव्रतानिपस्पशे ॥ इंद्रस्ययुज्यःसखास्वा० ॥ वि० ॥ ॐ तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततंस्वा० ॥ वि० ॥ ॐ तद्विप्रासोविपन्यवोजागृवांसःसमिंधते ॥ विष्णोर्यत्परमंपदंस्वा० ॥

वि॰ ॥ ॐ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि ॥ योअस्कभायदुत्तरंसधस्थंविचक्रमाण
स्त्रेधोरुगायःस्वा॰ ॥ वि॰ ॥ ॐ प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्र
मणेष्वधिक्षियंतिभुवनानिविश्वास्वा॰ ॥ वि॰ ॥ ॐ प्रविष्णवेशूषमेतुमन्मगिरिक्षितउरुगायायवृष्णे ॥ य
इदंदीर्घंप्रयतंसधस्थमेकोविममेत्रिभिरित्पदेभिःस्वा॰ ॥ वि॰ ॥ ॐ यस्यत्रीपूर्णामधुनापदान्यक्षीयमाणाः
स्वधयामदंति ॥ यउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वास्वा॰ ॥ वि॰ ॥ ॐ तदस्यप्रियमभिपा
थोअश्यांनरोयत्रदेवयवोमदंति ॥ ऊरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेपरमेमध्वउत्सःस्वा॰ ॥ वि॰ ॥ ॐ
तावांवास्तून्युश्मसिगमध्यैयत्रगावोभूरिशृंगाअयासः ॥ अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरि
स्वा॰ ॥ वि॰ ॥ ॐ प्रवःपांतमंधसोधियायतेमहेशूरायविष्णवेचार्चत ॥ यासानुनिपर्वतानामदाभ्यामह
स्तस्थतुरर्वतेवसाधुनास्वा॰ ॥ विष्ण॰ ॥ ॐ त्वेषमित्थासमरणंशिमीवतोरिंद्राविष्णूसुतपावामुरुष्यति ॥
यामर्त्यायप्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथःस्वा॰ ॥ वि॰ ॥ ॐ ताईंवर्धंतिमह्यस्यपौंस्यंनिमा
तरानयतिरेतसेभुजे ॥ दधातिपुत्रोवरंपरंपितुर्नामतृतीयमधिरोचनेदिवःस्वा॰ ॥ वि॰ ॥ ॐ तत्तदिदस्य
पौंस्यंगृणीमसीनस्यत्रातुरवृकस्यमीळ्हुषः ॥ यःपार्थिवानित्रिभिरिद्विगामभिरुरुक्रमिष्टोरुगायायजीवसे

स्वा॰ ॥ वि॰ ॥ ॐ द्वेइदस्यक्रमणेस्वर्दृशोभिख्यायमर्त्योभुरण्यति ॥ तृतीयमस्यनकिरादधर्षतिवयश्चन
पतयंतःपतत्रिणःस्वा॰ ॥ वि॰ ॥ ॐ चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्यतीँरवीविपत् ॥ बृहच्छ
रीरोविमिमानऋक्वभिर्युवाकुमारःप्रत्येत्याहवंस्वा॰ ॥ वि॰ ॥ ॐ भवामित्रोनशेव्योघृतासुतिर्विभूतद्युम्नएव
वयाउसप्रथाः ॥ अधातेविष्णोविदुषाचिदर्ध्यस्तोमोयज्ञश्चराध्योहविष्मतास्वा॰ ॥ वि॰ ॥ ॐ यःपूर्व्या
यवेधसेनवीयसेसुमज्जानयेविष्णवेददाशति ॥ योजातमस्यमहतोमहिब्रवत्सेदुश्रवोभिर्युज्यंचिदभ्यस
त्स्वा॰ ॥ वि॰ ॥ ॐ तमुस्तोतारःपूर्व्यंयथाविदऋतस्यगर्भंजनुषापिपर्तन ॥ आस्यजानंतोनामचिद्विवक्त
नमहस्तेविष्णोसुमतिंभजामहेस्वा॰ ॥ वि॰ ॥ ॐ तमस्यराजावरुणस्तमश्विनाक्रतुंसचंतमारुतस्यवेधसः ॥
दाधारदक्षमुत्तममहर्विदंव्रजंचविष्णुःसखिवाँअपोर्णुतेस्वा॰ ॥ वि॰ ॥ ॐ आयोविवायसचथायदैव्यइंद्रा
यविष्णुःसुकृतेसुकृत्तरः ॥ वेधाअजिन्वत्त्रिषधस्थआर्यमृतस्यभागेयजमानमाभजत्स्वा॰ ॥ वि॰ ॥ ॐ
संवांकर्मणासमिषाहिनोमींद्राविष्णूअपसस्पारेअस्य ॥ जुषेथांयज्ञंद्रविणंचधत्तमरिष्टैर्नःपथिभिःपारयंता
स्वा॰ ॥ वि॰ ॥ ॐ याविश्वासांजनितारामतीनामिंद्राविष्णूकलशासोमधाना ॥ प्रवांगिरःशस्यमानाअवं

तुप्रस्तोमासोगीयमानासोअर्कैःस्वा० ॥ वि० ॥ ॐइंद्राविष्णूमदपतीमदानामासोमंयातंद्रविणोदधाना ॥
संवामंजंत्वक्तुभिर्मतीनांसंस्तोमासःशस्यमानासउक्थैस्वा० ॥ वि० ॥ ॐआवामश्वासोअभिमातिषाहइं
द्राविष्णूसधमादोवहंतु ॥ जुषेथांविश्वाहवनामतीनामुपब्रह्माणिशृणुतंगिरोमेस्वा० ॥ वि० ॥ ॐइंद्रावि
ष्णूतत्पनयाय्यंवांसोमस्यमदउरुचक्रमाथे ॥ अकृणुतमंतरिक्षंवरीयोप्रथतंजीवसेनोरजांसिस्वा० ॥ वि० ॥
ॐइंद्राविष्णूहविषावावृधानाग्राद्वानानमसारातहव्या ॥ घृतासुतीद्रविणंधत्तमस्मेसमुद्रस्थःकलशःसोमधा
नःस्वा०॥ वि०॥ ॐइंद्राविष्णूपिबतंमध्वोअस्यसोमस्यदस्राजठरंपृणेथां ॥ आवामंधांसिमदिराण्यग्मन्नु
पब्रह्माणिशृणुतंहवंमेस्वा० ॥ वि० ॥ ॐउभाजिग्यथुर्नपराजयेथेनपराजिग्येकतरश्चनैनोः ॥ इंद्रश्चविष्णो
यदपस्पृधेथांत्रेधासहस्रंवितदैरयेथांस्वा० ॥ वि० ॥ ॐपरोमात्रयातन्वावृधानननतेमहित्वमन्वश्नुवंति ॥
उभेतेविद्मरजसीपृथिव्याविष्णोदेवत्वंपरमस्यवित्सेस्वा० ॥ वि० ॥ ॐनतेविष्णोजायमानोनजातोदेवम
हिम्नःपरमंतमाप ॥ उदस्तभ्नानाकमृष्वंबृहंतंदाधर्थप्राचींककुभंपृथिव्याःस्वा० ॥ वि० ॥ ॐइरावतीधे
नुमतीहिभूतंसूयवसिनीमनुषेदशस्या ॥ व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैःस्वा० ॥



वि० ॥ ॐउरुंयज्ञायचक्रथुरुलोकंजनयंतासूर्यमुषासमग्निं ॥ दासस्यचिद्वृषशिप्रस्यमायाजघ्नथुर्नरापृतना
ज्येषुस्वा० वि० ॥ इंद्राविष्णूदृंहिताःशंबरस्यनवपुरोनवतिंचश्नथिष्टं ॥ शतंवर्चिनःसहस्रंचसाकंहथोअ
प्रत्यसुरस्यवीरान्स्वा० ॥ वि० ॥ ॐइयंमनीषाबृहतीबृहंतोरुक्रमातवसावर्धयंती ॥ ररेवांस्तोमंविदथेषु
विष्णोपिन्वतमिषोवृजनेष्विंद्रस्वा० ॥ वि० ॥ ॐ वषट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपिविष्टह
व्यं ॥ वर्धंतुत्वासुष्टुतयोगिरोमेयूयंपातःस्वस्तिभिःसदानःस्वाहा ॥ वि० ॥ ॐ नूमर्तोदयतेसनिष्यन्योवि
ष्णवउरुगायायदाशत् ॥ प्रयःसत्राचामनसायजातएतावंतंनर्यमाविवासात्स्वा० ॥ वि० ॥ ॐ त्वंविष्णो
सुमतिंविश्वजन्यामप्रयुतामेवयावोमतिंदाः ॥ पर्चोयथानःसुवितस्यभूरेरश्वावतःपुरुश्चंद्रस्यरायःस्वा० ॥
वि० ॥ ॐ त्रिर्देवःपृथिवीमेषएतांविचक्रमेशतर्चसंमहित्वा ॥ प्रविष्णुरस्तुतवसस्तवीयान्त्वेषंह्यस्यस्थविर
स्यनामस्वा० ॥ वि० ॥ ॐ विचक्रमेपृथिवीमेषएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् ॥ ध्रुवासोअस्यकीरयोज
नासउरुक्षितिंसुजनिमाचकारस्वा० ॥ वि० ॥ ॐ प्रतत्तेअद्यशिपिविष्टनामार्यःशंसामिवयुनानिविद्वान् ॥
तंत्वागृणामितवसमतव्यान्क्षयंतमस्यरजसःपराकेस्वा० ॥ वि ॥ ॐ किमित्तेविष्णोपरिचक्ष्यंभूत्प्रयद्ववक्षेशिपिविष्टोअस्मि ॥ मावर्पोअस्मदपगूहएतद्यदन्यरूपःसमिथेबभूथस्वा० ॥ वि० ॥ ॐवषट्तेविष्णवा

स० ॥ नः स्वा० वि० ॥ तथा ॥ सहस्रशीर्षापुरुषइतिपुरुषसूक्तस्यत्रिभिर्वर्गैःप्रत्यृचंतथैवहुत्वा ॥ ॐ विष्णु
र्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजापतिर्धातागर्भंदधातुतेस्वा० ॥ वि० ॥ गर्भंधेहि
सिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजास्वा०॥ वि० ॥ ॐ हिरण्ययीअरणीयं
निर्मंथतोअश्विना ॥ तंतेगर्भंहवामहेदशमेमासिसूतवेस्वा० ॥ वि० ॥ ॐ नेजमेषपरापतसुपुत्रःपुनराप
त ॥ अस्यैमेपुत्रकामायैगर्भमाधेहियःपुमान्स्वा० ॥ वि० ॥ ॐ यथेयंपृथिवीमह्युत्तानागर्भमादधे ॥ एवं
तंगर्भमाधेहिदशमेमासिसूतवेस्वा० ॥ वि० ॥ ॐ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां ॥ पुमांसंपुत्रा
नाधेहिद० वेस्वा० ॥ वि० ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहु
मस्तंनोअस्तुवयंस्यामपतयोरयीणांस्वा० ॥ वि० ॥ ॐ अपनःशोशुचदघमग्नेशुशुग्ध्यारयिं ॥ अपनः
शोशुचदघंस्वा० ॥ वि० ॥ ॐ सुक्षेत्रियासुगातुयावसूयाचयजामहे ॥ अप० स्वा० ॥ वि० ॥ ॐ प्र
यद्भंदिष्ठएषांप्रास्माकासश्चसूरयः ॥ अप० स्वा० ॥ वि० ॥ ॐ प्रयत्तेअग्नेसूरयोजायेमहिप्रतेवयं ॥ अप०
स्वा० ॥ वि० ॥ ॐ प्रयदग्नेःसहस्वतोविश्वतोयंतिभानवः ॥ अप० ॥ स्वा० ॥ वि० ॥ ॐ त्वंहिवि

श्वतोमुखविश्वतःपरिभूरसि ॥ अप० ॥ स्वा० वि० ॐ ॥ द्विषोनोविश्वतोमुखातिनावेवपारय ॥ अ
प० स्वा० ॥ वि० सनः सिंधुमिवनावयातिपर्षास्वस्तये ॥ अप० स्वा० ॥ अनंतरमग्नेःऐशान्यांद्वात्रिं
शदंगुलायामविस्तारंगोमयेनोपलिप्तेस्थंडिलेचतुरंगक्रीडावत्समचतुरस्रंचतुरंगुलेचतुःषष्टिपदंसितेनरज
सामंडलंकृत्वातेषुपदेषुनैर्ऋत्यपदादिक्रमेणप्रथमंबाह्यावृत्तौततस्तथैवानंतरावृत्तिषुचप्रागुक्तचतुःषष्टिमंत्रैः
प्रणवाद्यैःस्वाहांतैःप्राग्दक्षिण्येनचरुशेषेणबलिंदत्वासर्वत्रविष्णवइदंनममेत्युद्दिश्यत्यक्त्वातन्मंडलमध्ये ॥
ॐ नमोनारायणायेतिबलिंदत्वापूर्ववत्त्यक्त्वातेनैवमंत्रेणार्घ्यंचदत्वाबलिशेषात्किंचिदन्नमादायपिंडद्वयंकृत्वा
दंपतीपृथगश्नीयातां॥ ततःआचम्यपतिःस्विष्टकृदादिहोमशेषंसमाप्यगुरवेदक्षिणांदत्वायथाशक्तिब्राह्मणा
न्भोजयित्वादंपतीभुंजीयातां ॥ अयंचविष्णुबलिःप्रतिगर्भमावर्तते ॥ तद्यथा ॥ प्रतिगर्भबलिःकार्योसी
मंतश्चप्रशस्यतेइत्याश्वलायनोक्तेः ॥ इदंचगृह्यसूत्रानुक्तत्वात्शिष्टानाचरंति ॥ ॥ इतिविष्णुबलि
विधानं समाप्तं ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ शुभंभवतु ॥ ॥ छ ॥ ॥ छ ॥

॥ ८२ ॥ ॥ अथ समंत्रक जातकर्म प्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ जातकर्म प्रयोग प्रारंभः ॥ ॥ जातमात्रेपुत्रेपितातस्यमुखंनिरीक्ष्य
नद्यादावुदङ्मुखःस्नात्वाअसंभवेदिवाहृताभिरद्भिःशीताभिरद्भिःसुवर्णयुताभिर्गृहएवस्नात्वाचम्यसितचंदन
माल्यादिभिरलंकृतोनालच्छेदनात्पूर्वंसूतिकादिव्यतिरिक्तैरस्पृष्टमकृतस्तनपानंप्रक्षालितमलंकुमारंमातुरु

त्संगेप्राङ्मुखमवस्थाप्यब्राह्मणैःसहपुण्याहवाचनंकृत्वादेशकालौस्मृत्वाममास्यकुमारस्यगर्भांबुपानजनि
तसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्मकरिष्ये ॥
इतिसंकल्प्याभ्युदयिकश्राद्धंहिरण्येनविधायहोमकरणपक्षेऽग्याद्धतिभिर्लौकिकाग्निंप्रबलसंज्ञंप्रतिष्ठाप्यदे
शकालौस्मृत्वास्मिन्जातकर्महोमेदेवतापरिग्रहार्थंमन्वाधानंकरिष्येचक्षुषीआज्येनेत्यंतमुक्त्वाअग्निमिंद्रं
प्रजापतिंविश्वान्देवान्ब्रह्माणंआज्येनयक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्येइत्यंतमुक्त्वान्वाधायप
रिसमूहनाद्याज्यभागांतंकृत्वाप्रधानदेवताभ्यःचतुर्थ्यंतंनाममंत्रेणाज्यंहुत्वादेवतोद्देशेनत्यागंकुर्यात् ततोवि
षममानेनमधुसर्पिषीमिश्रीकृत्य शिलांतलेनिक्षिप्यतत्रसुवर्णरजोविमोकंयावदवघृष्यभाजनेनिधाय ॥ ॐ
प्रतेददामिमधुनोघृतस्यवेदंसवित्राप्रसूतंमघोनां ॥ आयुष्मान्गुप्तोदेवताभिःशतंजीवशरदोलोकेअस्मिन्नि
तिमंत्रेणतेनैवहिरण्येनकुमारंपाययित्वातद्धिरण्यंप्रक्षाल्यकुमारस्यदक्षिणकर्णेनिधायतन्मुखसमीपेस्वमुखमा
नीय ॥ ॐमेधांतेदेवःसवितामेधांदेवीसरस्वती ॥ मेधांतेअश्विनौदेवावाधत्तांपुष्करस्रजावित्यृचंजपित्वापु
नस्तद्धिरण्यंसव्येकर्णेनिधायैतामेवऋचंजपेत् ॥ ततःशिशोरंसौयुगपदभिमृशेत् ॥ ॐअश्माभवपरशुर्भव
हिरण्यमस्तृतंभव ॥ वेदोवैपुत्रनामासिसजीवशरदःशतमितिमंत्रेण ॥ इंद्रश्रेष्ठानिगृत्समदइंद्रस्त्रिष्टुप् ॥
विनियोगःप्राग्वत् ॥ ॐइंद्रश्रेष्ठानिद्रविणानिधेहिचित्तिंदक्षस्यसुभगत्वमस्मे ॥ पोषंरयीणामरिष्टिंतनूनांस्वा
द्मानंवाचःसुदिनत्वमन्हां ॥ अस्मेप्रयंधिविश्वामित्रइंद्रस्त्रिष्टुप् ॥ विनि० ॥ ॐअस्मेप्रयंधिमघवन्नृजीषि

न्निंद्ररायोविश्ववारस्यभूरेः ॥ अस्मेशतंशरदोजीवसेधाअस्मेवीरांच्छश्वतइंद्रशिप्रिन् ॥ इतिमंत्राभ्यांचा
भिमर्शः ॥ ततोरक्षायुषोभिवृध्यर्थं ॥ ॐअंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपुत्रनामासिस
जीवशरदःशतमितिमंत्रमुच्चार्यमूर्धानंत्रिराजिघ्रेत् ॥ ततःशिशोःकरिष्यमाणंनामतदैवस्मरेत् ॥ अथस्विष्टकृ
दादिहोमशेषंसमाप्ययथाचारंहिरण्योदकेनमातुर्दक्षिणस्तनंप्रक्षाल्य ॥ ॐइमांकुमारोजरांधयतुदीर्घमायुःप्र
जीवसे ॥ अस्यैस्तनौप्रयुंजानामायुर्वर्चोयशोबलमितिमंत्रेणमात्राकुमारंपाययित्वाब्राह्मणेभ्योभूतिलाहिरण्या
दिकमन्नवर्जितंयथाशक्तिदत्वाब्राह्मणैराशिषोवाचयेत् ॥ जन्मलग्नेदुष्टस्थानस्थितग्रहजनितपीडानिवृत्त
येतत्प्रीत्यर्थंविशेषतोदक्षिणादेया ॥ तमर्वंतमितिपंचानांवामदेवोग्निर्गायत्री ॥ तमर्वंतमितिपंचभिराशि
षः ॥ ॐतमर्वंतंनसानसिमरुषंनदिवःशिशुं ॥ मर्मृज्यंतेदिवेदिवे ॥ बोधयन्माहरिभ्यांकुमारःसाहदेव्यः ॥
अच्छानहूतउदरं ॥ उतत्यायजताहरीकुमारात्साहदेव्यात् ॥ प्रयंतासद्यआददे ॥ एषवांदेवावश्विनाकुमा
रःसाहदेव्यः ॥ दीर्घायुरस्तुसोमकः ॥ तंयुवंदेवावश्विनाकुमारंसाहदेव्यं ॥ दीर्घायुषंकृणोतन ॥ इतिआ
शीर्वादमंत्राः ॥ होमोत्रकृताकृतः ॥ कुमार्याश्चैतत्जातकर्मामंत्रकंकार्यं ॥ रात्रौसंध्यायांग्रहणेजाताशौ
चांतरमध्येपीदंकार्यं ॥ मृताशौचमध्येजातश्चेत्तदैवाशौचांतेवाकार्यं ॥ पितरिग्रामांतरगतेपितृव्यादिर्गो
त्रजोज्येष्ठक्रमेणेदंकुर्यात् ॥ ॥ इति जातकर्मप्रयोगः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ८३ ॥ ॥ अथ षष्ठीदेवीपूजा प्रारंभः ॥



श्रीगणेशायनमः ॥ ॥ षष्ठीपूजाप्रयोगप्रारंभः ॥ पंचमेषष्ठेवादिनेषष्ठएववापूर्वरात्रेपित्रादिराचम्यप्राणा नायम्यदेशकालौस्मृत्वास्यशिशोः आयुरारोग्यावाप्तिसकलारिष्टशांतिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविघ्नेशस्यज न्मदानांषष्ठीदेव्याजीवंतिकायाश्चयथामीलितोपचारैःपूजनमहंकरिष्येइतिसंकल्प्यषोडशोपचारैस्तंत्रेणपूज येत् ॥ तत्रक्रमःआदौषंडगन्यासंकृत्वाकलशादिपूजांविधायअपवित्रःपवित्रोवाइतिमंत्रेणप्रोक्षणंकृत्वापश्चा तूदेवतास्थापनं ॥ विघ्नेशाय॰ विघ्नेशमावा॰ जन्मदायैन॰ जन्मदामा॰ षष्ठीदेव्यै॰ षष्ठीदेवीमा॰ जीवंतिकायै॰ जीवंतिकामा॰ इत्यावाहनादिभिः ॥ सूयवसाद्भगवतीहिभूयाइतिमंत्रेणचषोडशोप चारैःपूजयेत् ॥ पृथग्वासंकल्प्यपृथगेवपूजाकार्या ॥ एतत्प्रतिमाश्चालेखनादिनाकुड्येलेखनीयाः ॥ पीठा दौवाक्षतपुंजरूपेणानिवेश्याः ॥ पुरुषाःशस्त्रहस्ताःस्त्रियश्चनृत्यगीतकारिण्योऽस्यांरात्रौजागरणंकुर्युः ॥ सूति कागृहंचसधूमाग्निदीपशस्त्रमुसलांबुविभूतियुतंकार्यं ॥ सर्षपांश्चसर्वतोविकिरेत् ॥ अन्यदपियथाचारंसर्वं कार्यं ॥ जन्मदादिभ्योऽन्नादिनाबलिर्देयः ॥ विप्रेभ्यश्चतांबूलखाद्यदक्षिणादिदद्यात् ॥ जननाशौचमध्ये प्रथमषष्ठदशमदिनेषुदानेप्रतिग्रहेषु चनदोषः ॥ अन्नंतुनिषिद्धं ॥ अथ षष्ठीप्रार्थना ॥ गौरीपुत्रोयथास्कंदः शिशुत्वेरक्षितःपुरा ॥ तथाममाप्ययंबालःषष्ठिकेरक्षतांनमः ॥ ॥ इति षष्ठीपूजाप्रयोगः समाप्तः ॥ छ ॥

## ॥ ८४ ॥ ॥ अथ नामकरणविधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथनामकरणविधिप्रारंभः ॥ जन्मतएकादशेद्वादशेवायथाचारंनियतदिनेवाना मकरणंकार्यं ॥ नियतकालेपिविष्टिवैधृतिव्यतीपातग्रहणसंक्रांत्यमावास्याश्राद्धदिनेषुनकार्यं ॥ निय तकालेक्रियमाणेगुरुशुक्रास्तबाल्यवार्धकवक्रातिचारमलमासादिनिषेधोनास्ति ॥ नियतकालातिक्रमे तुज्योतिःशास्त्रोक्तेशुभेकालेकार्यं ॥ सर्वथात्रपूर्वाह्णःप्रशस्तः ॥ अत्रहोमःकृताकृतः ॥ उक्तकाले शिशोर्नामचिकीर्षुर्विप्रानाहूयपूर्वेद्युस्तदहरेववास्वस्तिवाचनमुपक्रम्यपुण्याहत्रयमुक्त्वाकरिष्यमाणंनामचतु र्थ्यंतमुक्त्वात्रिःएतन्नाम्नेस्वस्तिभवंतोब्रुवंत्वित्युक्तेविप्रैःएतन्नाम्नेस्वस्तीतिप्रत्युक्तेशेषंस्वस्तिवाचनंसमाप्येदमा र्याःकुमारस्यनामाहंविदधामीतिविप्राननुज्ञाप्यतैर्विधीयतामित्यनुमोदितोदेशकालौनिर्दिश्यास्यशिशोःबीज गर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनामकरणंकरिष्येइतिसंकल्प्यग्रह यज्ञाभ्युदयिकेयथाशक्तिकृत्वायथाचारंस्वकुलदेवताभक्तइतिनामकृत्वाजन्मकालीनंमासनामकुर्यात् ॥ त च्च ॥ कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः ॥ उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः ॥ योगीशः पुंडरीकाक्षोमासनामान्यनुक्रमात् ॥ अथयथाचारंचैत्रादिर्मार्गशीर्षादिर्वाक्रमः ॥ ततःस्त्रीपुरुषवाचि देवतावाचिवास्वेष्टंवायुग्माक्षरंद्व्यक्षरंकुमारंप्रतिष्ठाकामश्चतुरक्षरंब्रह्मवर्चसकामोनामकृत्वाततोभिवादनीयं नामविप्रादिवर्णक्रमेणशर्मवर्मगुप्तदासान्यतमपदांतमुपांशुकुर्यात् ॥ तच्चमौंजीबंधनान्मातापितरावेव

जानीयातां ॥ उपनयनकालेचानेननाम्नाभिवादयेतिकुमारंप्रतिवाच्यं ॥ अत्रायंशिष्टाचारः ॥ तंडुलान्कांस्यादिपात्रेप्रसार्यतदुपरिसुवर्णशलाकयाकुलदेवताप्रयुक्तमादौअमुकभक्तइतिनामलेख्यं ॥ ततोमासनामततोवकहडाचक्राख्यज्योतिःशास्त्रोक्तचक्रानुसारेणजन्मनक्षत्रपादप्रयुक्ताक्षरादिनामततोव्यावहारिकंस्वेष्टंनामेतिचतुष्टयंलिखित्वानामदेवताभ्योनमइतिसंपूज्यामुकनाम्नात्वममुकोऽसीतिस्वदाक्षिणस्थमातुरुत्संगस्थस्यशिशोःदक्षिणकर्णेकथयित्वा ॥ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तं॥अशीमहिंगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥ गृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूंल्लभतेगृहानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा ॥ सुप्रतिष्ठितमस्तु ॥ सुमुहूर्तमस्तु ॥ इतिमंत्रपाठांतेविप्रैर्नामसुप्रतिष्ठितमित्युक्तेअमुकनाम्नाअमुकनामायंभवतोऽभिवादयतइत्युक्त्वानामकर्ताप्रतिनामविप्रानभिवादयेत् ॥ तेचायुष्मान्भवत्वमुकइतिवदेयुरिति ॥ नक्षत्रनामैवाभिवादनीयंगुप्तंचेत्यपिवदंति ॥ ततःकर्तादेवताभ्योब्राह्मणेभ्यश्चनत्वायथाविभवंविप्रान्भोजयेद्दक्षिणांचदद्यात् ॥ विप्राशिषश्चग्राह्याः ॥ कुमार्याअपिनामकरणममंत्रकंकार्यं ॥ विषमाक्षरंतुतन्नाम ॥ होमपक्षेतुपार्थिवाग्नौजातकर्मवदेवप्रधानाहुतीर्हुत्वानामयथोक्तंधृत्वास्विष्टकृदादिहोमशेषतंत्रंकुर्यात् ॥ अत्रजातकर्मवत्पित्राद्याःक्रमेण कर्तारः ॥ ॥ इति नामकरणप्रयोगः समाप्तः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥



॥ ८५ ॥ ॥ अथ पर्यंकारोहण विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ पर्यंकारोहणविधि प्रारंभः ॥ तत्रनामकरणादिनेषोडषेद्वात्रिंशेन्यस्मिन्वाज्योतिःशास्त्रोक्तमृदुध्रुवक्षिप्रनक्षत्रादियुक्तेशुभेकालेयथाचारंकुलदेवतादिपूजांविधायालंकृतांशिशुंहरिद्राद्यलंकृतेपर्यंकेमात्राद्याःसौभाग्ययुक्ताःस्त्रियोयोगशायिनंहरिंस्मरंत्योगीतवाद्यादिसमकालंप्राक्शिरसंन्यसेयुः ॥ स्वस्वाचारप्राप्तंचान्यदपिकार्यं ॥ ॥ इति पर्यंकारोहणविधिः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ ८६ ॥ ॥ अथ दुग्ध पान विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ दुग्धपानविधि प्रारंभः ॥ एकत्रिंशद्दिनेद्वितीयेजन्मनक्षत्रेवान्यस्मिन्वान्नप्राशननक्षत्रयुक्तेशुभदिनेकुलदेवतादिपूजांतेगोक्षीरंशंखेनधात्रीमातान्यावासुभगालंकृतंकुमारंदक्षिणाशिरसंप्राक्शिरसंवापाययेदिति ॥ ॥ इति दुग्धपानविधिः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ ८७ ॥ ॥ अथ कर्णवेध विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ कर्णवेधविधि प्रारंभः ॥ जन्मदिनाद्द्वादशेषोडशेवादिनेषष्ठसप्तमाष्टमदशममासान्यतममासेऽन्यदावादंतजननात्पूर्वमेवज्योतिःशास्त्रोक्तमासशुक्लपक्षातिथिवारनक्षत्रादिशुभकालेपूर्वाह्णेमध्यान्हेवाविष्णुशिवब्रह्मचंद्रसूर्यदिगीशनासत्यसरस्वतीकुलदेवतागोब्राह्मणान्यथाविभवंसंपूज्यमातुरुत्संगस्थस्यवाशुभासनस्थस्यालंकृतस्याशिशोःकर्णयोर्वेध्यस्थलंमलक्तकरसेनांकयित्वायथाविभवंसुवर्णरू

प्यताम्रलोहसूच्यामांगलिकद्विगुणपट्टादिसूत्रोपेतयासौचिकेनान्येनवाकुशलेनसुभगस्त्रियावाप्राङ्मुखस्योदङ्मुखस्यवाकर्णौवेधयेत् ॥ अनावृतेसूर्यरश्मिपातस्थलेंगणादौपित्रादिः कुमारस्यपूर्वंदक्षिणःकुमार्यास्तुपूर्ववामःकर्णोवेध्यः ॥ वेधनक्षत्रतृतीयनक्षत्रेकर्णक्षालनमुष्णवारिणारोहणार्थेकार्यं ॥ रूढौचकर्णौयथाभरणधारणक्षमौभवतःतथावर्धनीयौ ॥ पुंसस्तुसूर्यरश्मिप्रवेशयोरंध्रपर्यंतंवर्धयेत् ॥ लंबकर्णतातुनिषिद्धा ॥ स्त्रीणांयथेच्छं ॥ ॥ इति कर्णवेधविधिः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ८८ ॥ ॥ अथ समंत्रक सूर्यावलोकन विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ सूर्यावलोकननिष्क्रमणविधि प्रारंभः ॥ जननात्तृतीयेमासिजन्मदिनेजन्मनक्षत्रेवाइष्टदेवतापूजनपूर्वकंअलंकृतेनशिशुनासोत्सवंसूर्यदर्शनंकारयित्वाचतुर्थमासेशुभकालेऽग्निंचंद्रंधेनुंचदर्शयेत्केचित्तु ॥ स्वस्तिनआत्रेयोविश्वेदेवास्त्रिष्टुप् ॥ शिशोरंकारोपणेविनियोगः ॥ ॐ स्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः॥स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना॥ अनेनपित्रादिःशिशुमंकमारोप्य ॥ आशुःशिशानइतित्रयोदशर्चस्याप्रतिरथस्यसूक्तस्यइंद्रोप्रतिरथइंद्रस्त्रिष्टुप् ॥ चतुर्थीबृहस्पतिर्देवतात्रयोदश्यनुष्टुप् ॥ शिशोरायुष्याभिवृध्यर्थंजपेविनियोगः ॥ ॐ आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनां ॥ संक्रंदनोनिमिषएकवीरःशतंसेनाअजयत्साकमिंद्रः ॥ संक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥ सइषुहस्तैःसनिषंगिभिर्वशीसंस्रष्टासयुधइंद्रोगणेन ॥ संसृष्टजित्सोमपाबाहुशर्ध्यूग्रधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँअपबाधमानः ॥ प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविताथानां ॥ बलविज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजाजैत्रमिंद्ररथमातिष्ठगोवित् ॥ गोत्रभिदंगोविदंवज्रबाहुंजयंतमज्मप्रमृणंतमोजसा॥इमंसजाताअनुवीरयध्वमिंद्रंसखायोअनुसंरभध्वं ॥ अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिंद्रः ॥ दुश्च्यवनःपृतनाषाळयुध्योऽस्माकंसेनाअवतुप्रयुत्सु ॥ इंद्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः ॥ देवसेनानामभिभंजतीनांजयंतीनांमरुतोयंत्वग्रं ॥ इंद्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रं ॥ महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमनांसि ॥ उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतांयंतुघोषाः ॥ अस्माकमिंद्रःसमृतेषुध्वजेष्वस्माकंयाइषवस्ताजयंतु ॥ अस्माकंवीराउत्तरेभवंत्वस्माँउदेवाअवताहवेषु ॥ अमीषांचित्तंप्रतिलोभयंतीगृहाणांगान्यप्वेपरेहि ॥ अभिप्रेहिनिर्दहहृत्सुशोकैरंधेनामित्रास्तमसासचंतां ॥प्रेताज० असौयासेनामरुतःपरेषामभ्यैतिनओजसास्पर्धमाना॥तांगूहततमसापव्रतेनय

थामीषांअन्योअन्यंनजानांत् ॥ अंधाअमित्रांभवताशीर्षाणाअहंयइव ॥ तेषांवोअग्निदंग्धानामंग्निर्मूल्हाना मिंद्रोहंतुवरंवनं ॥ तच्चक्षुर्वसिष्ठःसूर्यःपुरउष्णिक् ॥ कुमारस्यादित्यावेक्षणेवि० ॥ ॐ तच्चक्षुर्देवहितंशुक्रमु च्चरंत् ॥ पश्येमशरदःशतंजीवेमशरदःशतं ॥ इतिसूर्यंनिरीक्षयेदितिवदंति ॥ तृतीयमासेसूर्यावलोकनंन कारितंचेत्निष्क्रमणेनसहैवकार्यं ॥ इतिसूर्यावलोकनविधिः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ ८९ ॥ ॥ अथ समंत्रक निष्क्रमणविधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ निष्क्रमणविधि प्रारंभः ॥ ततश्चतुर्थेमासिषष्ठेवाशुक्लपक्षेशुभतिथ्यादौपिता सभार्यःशिशुरभ्यंगस्नातःआयुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंनिष्क्रमणाख्यंक र्मकरिष्येइतिसंकल्प्यतदंगतयास्वस्तिवाचनाभ्युदयिकग्रहयज्ञान्कृत्वाइंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरे शानानांप्राच्यादिदिशांचंद्रार्कवासुदेवगगनानांचयथाक्रमंपूजांकृत्वाब्राह्मणान्भोजयित्वातैःस्वस्त्ययनंवाच यित्वासायंसंध्यादिकंकृत्वाशिशुंसौवर्णैःकृत्रिमैर्वाभरणैःयथाशक्तिअलंकृत्यपूर्वंनकृतंचेदिदानींशिशुनाग्निचं द्रधेनूनांदर्शनंकारयित्वाऽश्वादिवाहनस्थंशिशुंमातुलेनधान्यावावाहयित्वाभार्यापुत्रविद्वद्ब्राह्मणज्ञातिबांधवपु रंध्रीगणदर्पणपूर्णकलशयुक्तकन्यागणपुष्पहरिद्राक्षतादीपमालाध्वजलाजमंगलवाद्यघोषयुक्तः ॥ ॐकनिं क्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावं ॥ सुमंगलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्यांविदत् ॥

मात्वांश्येनउद्वधीन्मासुपर्णोमात्वांविददिषुमान्वीरोअस्तां ॥ पित्र्यामनुप्रदिशंकनिंक्रदत्सुमंगलोभद्रवादी वंदेह ॥ अवंक्रंददक्षिणतोगृहाणांसुमंगलोभद्रवादीशकुंते ॥ मानंस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवी राः ॥ इत्यादिशकुंतादिसूक्तंपठन्गृहाद्बहिर्गत्वामंत्रमेतमुदीरयेत् ॥ चंद्रार्कयोर्दिगीशानांदिशां चवरुणस्य च ॥ निक्षेपार्थमिमंदद्मितेत्वांरक्षंतुसर्वदा ॥ अप्रमत्तंप्रमत्तंवादिवारात्रावथापिवा ॥ रक्षंतुसततंसर्वेदेवाःश क्रपुरोगमाः ॥ एवंशिशुरक्षणार्थंदेवान्संप्रार्थ्यविष्णुशिवालयोरन्यतरद्बंधुगृहंवागत्वातत्रदेवंसुमंगलवाद्यघो षपुष्पोपहारादिभिःप्रपूज्यगोमयाद्यनुलिप्तचतुरस्रदेशेधान्यादिनिधायतत्रशिशुमासयित्वामंत्रेणरक्षांकुर्यात् ॥ मंत्रश्च ॥ त्र्यंबकमित्यस्यवसिष्ठोमृत्युंजयस्त्र्यंबकोनुष्टुप् ॥ शिशोरक्षायांविनियोगः ॥ ॐ जूंसः त्र्यंबकंय जामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ सःजूंइत्येवंमृतसंजीवनीमंत्रंजपन् विभूत्याक्षतैर्वामूर्ध्निललाटेचरक्षांकृत्वाअपूपादिभिर्भूतेशानंगणेशमभ्यर्च्यशिशुंभक्ष्यादिभिस्तोषयित्वाशिषो वाचयित्वादेवताप्रणामंप्रदक्षिणात्रयंचशिशुनाकारयित्वामातुलाद्यासन्नबंधुगृहेपूर्ववन्नीत्वातत्रदानोपहारादि भिःशिशुंतोषयित्वास्वगृहंगत्वाब्राह्मणैराशिषोवाचयित्वातेभ्यःसुवासिनीभ्यश्चयथाशक्तिदक्षिणांदत्त्वाबंधुभिः सहभुंजीत ॥ कुमार्याअप्येतत्समानं ॥ होमोत्रकृताकृतः ॥ होमपक्षेशिशोरलंकरणानंतरंलौकिकाग्निंप्रति ष्ठाप्यजातकर्मवदन्वादेशदेवताभ्योहुत्वाअग्निचंद्रदर्शनादिस्वगृहगमनांतंकृत्वास्विष्टकृदादिहोमशेषंसमाप्य

ब्राह्मणाशीर्वादादिकारयेदितिक्रमः ॥ ॥ इति निष्क्रमण विधि प्रयोगः समाप्तः ॥ ॥ शुभंभवतु ॥

॥ १० ॥ ॥ अथ समंत्रक उपवेशन विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथोपवेशन विधि प्रारंभः ॥ पंचमेमासिशुक्लपक्षेज्योतिःशास्त्रोक्तशुभतिथ्यादौ पूर्वाण्हेस्वस्तिवाचनंकृत्वावराहपृथ्वीगुरुदेवद्विजान्पूजयित्वाभागमुपलिप्यतत्रमंडलंकृत्वातत्रशंखतूर्यादि मांगलिकध्वनौक्रियमाणेशिशुमुपवेशयेदेतैर्मंत्रैः ॥ रक्षैनंवसुधेदेविसदासर्वगतंशुभे ॥ आयुःप्रमाणंनिखिलं निक्षिपस्वहरिप्रिये ॥ अचिरादायुषस्त्वस्ययेकेचित्परिपंथिनः ॥ जीवितारोग्यवित्तेषुनिर्दहस्वाचिरेणतान् ॥ धारिण्यशेषभूतानांमातस्त्वमधिकाह्यसि ॥ कुमारंपाहिमातस्त्वंब्रह्मातदनुमन्यतामिति ॥ ततोब्राह्मणान्पूज यित्वाशिषोवाचयित्वानीराजनाद्युत्सवंकुर्यात् ॥ एवंकुमार्याअपि ॥इति श्री उपवेशनविधिप्रयोगः समाप्तः ॥

॥ ११ ॥ ॥ अथ समंत्रक अन्न प्राशन विधि प्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथान्नप्राशनविधि प्रयोग प्रारंभः ॥ जन्मतःषष्ठेमासेष्टमेवादंतेषुजातेषुवाज्यो तिःशास्त्रोक्तंतिथिनक्षत्रादिशुभकालेपूर्वाह्णेपित्रादिःशिशोरन्नप्राशनंकुर्यात् ॥ षष्ठेमासेचेत्क्रियतेतदागुरुशु क्रमौढ्यादिदोषःअधिकमासादिदोषश्चनास्ति ॥पित्रादिःसभार्यःसशिशुर्मंगलस्नानंकृत्वादेशकालौस्मृत्वाम मास्यशिशोर्मातृगर्भमलप्राशनशुध्यन्नाद्यब्रह्मवर्चसतेजइंद्रियायुर्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिब र्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंअन्नप्राशनाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्यतदंगस्वास्तिवाचनाभ्युदयिकेकृत्वा

शिशुमलंकृत्यजातकर्मवल्लौकिकाग्निंशुचिनामानंप्रतिष्ठाप्यानादेशाज्याहुतीर्हुत्वापूजोपहारादिभिरिष्टदेवतां अभ्यर्च्यतत्पुरतः स्वदक्षिणेशुभेवस्त्रोपरिमातुरुत्संगेप्राङ्मुखोपविष्टस्यशिशोःप्रथमान्नप्राशनंकारयेत् ॥ दधि मधुमिश्रमन्नंशुभेभाजनेप्रक्षिप्यअन्नपतइत्यस्यनलकुबेरोन्नपतिर्जगती ॥ शिशोरन्नप्राशनेविनियोगः ॥ ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारंतारिषऊर्जंनोधेहिद्विपदेचतुष्पदे ॥ इतिमंत्रेणससुवर्ण हस्तोन्नमादायप्रथमकवलंप्राशयित्वायथेष्टंभोजयित्वामुखंप्रक्षाल्यबालंभूमावुपवेश्यतदग्रेपुस्तकशस्त्रवस्त्रा दिशिल्पानिविन्यस्यजीविकापरीक्षांकुर्यात् ॥ शिशुःस्वेच्छयायत्प्रथमंस्पृशेत्सास्यजीविकाइतिविद्यात् ॥ ततःस्विष्टकृदादिहोमशेषंसमाप्ययथाशक्तिब्राह्मणान्भोजयित्वादक्षिणांदत्त्वाशिषोवाचयित्वाबंधुभिःसहस्व यंभुंजीत ॥ होमोऽत्रकृताकृतः ॥ होमपक्षेपूर्वेद्युर्नांदीश्राद्धंकुमार्यांअप्येतदमंत्रकंकार्यं ॥ किंतुसप्तमेमासे ॥ इति अन्न प्राशन विधि प्रयोगः समाप्तः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥

॥ १२ ॥ ॥ अथ समंत्रक वर्धापन विधि प्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ वर्धापनविधि प्रारंभः ॥ आदित्यपुराणे ॥ सर्वैश्चजन्मदिवसेस्नातैर्मंगलवा रिभिः ॥ गुरुदेवाश्चविप्राश्चपूजनीयाःप्रयत्नतः ॥ स्वनक्षत्रंचापितरंतथादेवःप्रजापतिः ॥ प्रतिसंवत्सरंय त्नात्कर्तव्यश्चमहोत्सवः ॥ स्वनक्षत्रंस्वनक्षत्रदेवताःस्वनक्षत्रंवित्तपश्चेतिक्वचित्पाठः ॥ तदावित्तपःकुबेरः अत्रप्रयोगःप्रतिवर्षंजन्मादिनेसौरमानेनजन्मनक्षत्रेवायजमानःपूर्वाण्हेअभ्यज्यस्नात्वासर्वौषधियुतजलपूरित

कलशंसंपूज्यतदुदकेनस्नातःशुक्लांबरधरोयथाविभवमलंकृतोविधिवत्स्वस्तिवाचयित्वाकौतुकमाबध्यदूर्वा
होमंकुर्यात्तत्रायंक्रमः ॥ देशकालौस्मृत्वाममाब्दपूर्तिजन्मदिवसेआयुरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं
दूर्वाहोमंकरिष्ये ॥ इतिसंकल्प्यविधिवदग्निंप्रतिष्ठाप्यपुनर्देशकालौसंकीर्त्यसमिधावादायास्मिन्दूर्वाहोमेदे
वतापरिग्रहार्थमन्वाधानंकरिष्येइत्युक्त्वाअस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाप्रधानदेवतां
मृत्युंजयमष्टोत्तरशतंदूर्वाद्रव्येणशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्येइत्यंतमुक्त्वासमिधावग्नावाधायपरिसमूह
नाद्याज्यभागांतंकृत्वादधिमधुघृताक्तंकेवलंवाज्याक्तंदूर्वात्रयं ॥ त्र्यंबकमित्यस्यवसिष्ठोमृत्युंजयस्त्र्यंबकोऽनु
ष्टुप् ॥ दूर्वाहोमेविनियोगः ॥ ॐ जूंसः त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मु
क्षीयमामृतात् ॥ जूंसःइत्यनेनमंत्रेणाष्टोत्तरशतंहुत्वास्विष्टकृदादिहोमशेषंसमापयेत् ॥ ततोविधिवद्ग्रह
यज्ञंकृत्वाआयुषेचरुहोमंसंकल्पपूर्वकंकुर्यात् ॥ तत्रायंक्रमः ॥ देशकालौसंकीर्त्यास्मिन्होमेदेवतापरिग्र
हार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाविश्वान्देवान्दशवारमग्निंषोडशवारंजातवेदोग्निमेकवारंचरुद्रव्येण
शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वासमिधावग्नावाधायपरिसमूहनाद्याज्येदर्भाग्रद्वयप्रक्षेपांतंकृ
त्वासिद्धान्नमाज्यसमीपेनिधायाज्येनसहतदन्नंत्रिःपर्यग्निकृत्वाज्योद्वासनादिस्रुवसंमार्जनांतंकृत्वान्नंपात्रेपृ
थक्कृत्वाअग्नावधिश्रित्यस्रुवेणाभिघार्योदगुद्वास्याज्याद्दक्षिणतोबर्हिषिआसाद्यपुनरभिघारणाद्याज्यभागां



तंकृत्वाआनोभद्राइतिदशर्चस्यसूक्तस्यगौतमोविश्वेदेवाआद्याःपंचसप्तमीचजगत्यःषष्ठीविराट्स्थानाअष्ट
म्याद्यास्तिस्त्रस्त्रिष्टुभः ॥ इमंस्तोमामित्यस्यषोडशर्चस्यांगिरसःकुत्सोग्निरादितश्चतुर्दशजगत्यःअंत्येद्वेत्रिष्टु
भौपूर्त्रोदेवाभवत्वित्यादित्रयःपाददेवीदेवत्याःतन्नोमित्रोर्धर्चोलिंगोक्तदेवत्यःअग्निदेवत्यश्चजातवेदसइत्य
स्यमारीचःकश्यपोजातवेदाग्निस्त्रिष्टुप् ॥ सर्वेषांचरुहोमेविनियोगः॥एतैःसप्तविंशतिमंत्रैःअवदानधर्मेणहुत्वा
स्विष्टकृदादिहोमशेषंसमाप्यवासुदेवंनक्षत्रदेवतांचंद्रंस्वनक्षत्रंवरुणंचषोडशोपचारैरभ्यर्च्यतत्तत्प्रकाशकमं
त्रैर्घृतेनतेभ्योयथाशक्तिहोमंकृत्वाग्रहयज्ञोक्तविधिनाभिषिक्तोयथाशक्तिगोभूहिरण्यादिदत्त्वादेवगुरुब्राह्मणसु
हृद्बंधुजनपूजांस्ववाहनायुधपीठछत्रपूजांकृत्वाविधिवन्नांदीश्राद्धंचकृत्वाब्राह्मणान्भोजयित्वाशुभमुहूर्तेगं
धादिभिरलंकृत्यस्रग्भूषणधारणपूर्वकंसुवर्णमयकटिसूत्रंनूतनवस्त्रंचधृत्वापतिपुत्रवतीभिःस्त्रीभिःनीराजितो
ब्राह्मणाशिषोगृहीत्वास्वयंहविष्याशीजितेंद्रियोवर्ततइति ॥ इदंसर्वंयावद्बाल्यंपित्रादिभिःकार्यं ॥ पश्चात्तुप्र
तिवर्षंस्वयमेवेति ॥ इतिप्रयोगपारिजातोक्तोऽब्दपूर्तविधिः ॥ अन्यत्रतु ॥ वर्षपर्यंतंप्रतिमासंततःप्रतिवर्षंमां
गल्यस्नानंकृत्वाकुमुदादिदेवताःसंपूज्ययथाशक्तिब्राह्मणभोजनदक्षिणांचदत्त्वासुवासिनीभिर्नीराजितेधृतनू
तनवस्त्रःब्राह्मणीभ्यःशिशुभ्यश्चापूपपूरिकानिसाज्यानिकुमुदादिप्रीतयेआयुर्वृद्धयेचवायनानिदद्यात् ॥ जन्म
र्क्षदेवताप्रीत्यैचदद्यात् ॥ वर्षांतेतुदृढद्वादशवंशपेटिकासुमोदकादिखाद्यंनिधायनूतनवस्त्राच्छादिताःपेटि
काःजीवत्पतिपुत्राभ्योदत्त्वातदाशिषोगृह्णीयात् ॥ इदंसर्वंजीवतीमातैवापत्यायुषेकुर्यात् ॥ ग्रंथांतरेतु ॥ ग

णेशंग्रहानिष्टदेवतांमार्कंडेयंचप्रपूज्यप्रार्थयेत् ॥ मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन ॥ आयुरारोग्यसि
ध्यर्थंप्रसीदभगवन्मुने ॥ चिरजीवीयथात्वंतुमुनीनांप्रवरद्विज ॥ कुरुष्वमुनिशार्दूलतथामांचिरजीविनं ॥
ततः मार्कंडेयमहाभागसप्तकल्पांतजीवन ॥ आयुरारोग्यसिध्यर्थमस्माकंवरदोभव ॥ सतिलंगुडसंमिश्रमं
जल्यर्धमितंपयः ॥ मार्कंडेयाद्वरंलब्ध्वापिबाम्यायुर्विवृद्धयेइतिसतिलगुडमंजल्यर्धमितंदुग्धंपिबेत् ॥ अ
श्वत्थामाबलिर्व्यासोहनूमांश्चबिभीषणः ॥ कृपःपरशुरामश्चसप्तैतेचिरजीविनः ॥ सप्तैतान्यःस्मरेन्नित्यंमा
र्कंडेयमथाष्टमं ॥जीवेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥ इतिवचनादश्वत्थामादीन्मार्कंडेयांतानष्टौस्मरेदि
ति ॥ इदंचवर्धापनंयदिजन्ममासःअसंक्रांतस्तदाशुद्धमासएवकार्यंनत्वधिके ॥ इति वर्धापनविधिः समाप्तः ॥

## ॥ १३ ॥ ॥ अथ समंत्रक चौलविधि प्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथचौलविधिप्रयोगप्रारंभः ॥ तत्रकालस्तावत्प्रथमेद्वितीयेतृतीयेपंचमेसप्तमे
वावर्षेगततृतीयभागेअगततृतीयभागेवा उपनीत्यासहवायथाकुलाचारं चौलंकार्यंतत्रापिद्वितीयादौवर्षेजन्म
तोमुख्यंगर्भतोगौणंउदगयनेशुक्लपक्षेगुरुशुक्रयोर्बाल्यवार्धकास्तमयाभावेअक्षयेअनधिकेचमासिज्योतिःशा
स्त्रोक्तप्रशस्ततिथिवारलग्नेषुशुभमुहूर्तेदिवैवनतुरात्रौकार्यं ॥ इदंकर्मलौकिकाग्नौतस्यसभ्यइतिनाम ॥ यदिग
र्भाधानादिसंस्कारलोपस्तदाप्रायश्चित्तंकृत्वाकालात्ययनिमित्तंप्रायश्चित्तहोमंचकृत्वाचौलहोमःकार्यः ॥ त

दाहभगवान् ॥ आरभ्याधानमाचौलात्कालेतीतेतुकर्मणां ॥ व्याहृत्याज्यंसुसंस्कृत्यहुत्वाकर्मयथाक्रमम्॥
कार्यमितिशेषः ॥ प्रायश्चित्तंचसएवाह ॥ एतेष्वेकैकलोपेपिपादकृच्छ्रंसमाचरेत् ॥ चूडायाश्चार्धकृच्छ्रं
स्यादापदित्वेवमीरितं ॥ अनापदितुसर्वत्रद्विगुणंद्विगुणंचरेत् ॥ मनुः ॥ जातकर्मादिसंस्काराःस्वकाले
नभवंतिचेत् ॥चौलादर्वाक्प्रकुर्वीतप्रायश्चित्तादनंतरं॥प्रायश्चित्तहोमेकृतेतत्कर्मकृताकृतं॥तथाचकारिका॥
प्रायश्चित्तेकृतेपश्चादतीतमपिकर्मवै ॥कार्यमित्येकआचार्यानेत्यन्येतुविपश्चितः ॥प्रायश्चित्तहोमस्तुप्रधानहो
मात्पूर्वंसमस्ताभिर्व्याहृतिभिःप्रतिकर्मलोपमेकैकाज्याहुतिःकार्येति॥अथचूडाकर्मविधिप्रयोगप्रारंभः ॥ उ
क्तेतृतीयादौवर्षेउदगयनेशुक्लपक्षेप्राशस्ततिथिवारनक्षत्रयोगयुतेशुभेमुहूर्तेकुमारस्य चौलकर्मकरिष्यन्कर्तापू
र्वेद्युःस्वस्तिवाचनपूर्वकंनांदीश्राद्धंग्रहयज्ञमंकुरार्पणंचकृत्वापरेद्युःकृतमंगलस्नानंकुमारमलंकृत्यब्राह्मणैःपु
ण्याहंवाचयित्वामातुरंकेकुमारंदक्षिणतउपवेश्यदेशकालौस्मृत्वाअस्यकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणेन
बलायुर्वर्चोभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं चौलाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्यशुभेमुहूर्तेउपलेपादिस
भ्याग्निप्रतिष्ठापनांतंकृत्वापुनर्देशकालौनिर्दिश्यमयाक्रियमाणेचौलकर्महोमेदेवतापरिग्रहार्थमन्वाधानंकरि
ष्ये ॥ अस्मिन्नन्वाहितेग्नावित्याद्याघारावाज्येनेत्यंतमुक्त्वात्रिरग्निंपवमानंप्रजापतिंचैताःप्रधानदेवताआज्ये
नशेषेणस्विष्टकृतमित्यादिउक्त्वासमिद्द्वयमग्नावाधायपूर्णपात्रनिधानांतंषट्पात्रप्रयोगादितंत्रंकृत्वाअग्नेरुद
गास्तीर्णेषुदर्भेषुव्रीहियवमाषतिलैःपृथक्पृथक्पूरितानिशरावाणिचत्वारिक्रमेणैकैकशःप्राक्संस्थान्यासाद

येत् ॥ माताप्रत्यगग्नेरासीनस्यकर्तुर्दक्षिणतःकुमारमुत्संगेकृत्वासीत ॥ ततःकर्तामातुःपुरस्तात्पश्चाच्चाग्ने
रानडुहगोमययुतशरावंशमीपर्णयुतशरावंचनिदध्यात् ॥ ततोब्रह्माएकविंशतिकुशपिंजूलान्यादायमातुर्द
क्षिणतास्तिष्ठेत् ॥ पितावातथातिष्ठेत् ॥ अस्मिन्पक्षेऽन्यएवचौलकर्ता ॥ ततःकुमारेणान्वारब्धःकर्तापुर
स्तनमाघारांतंकर्मकृत्वा ॥ अग्नआयूंषिइतितिसृणांशतंवैखानसाऋषयः ॥ अग्निःपवमानोदेवता ॥ गाय
त्रीछंदः ॥ चूडाकर्मप्रधानाज्यहोमेविनियोगः ॥ ॐ अग्नआयूंषिपवसआसुवोर्जमिषंचनः ॥ आरेबाधस्व
दुच्छुनांस्वाहा ॥ अग्नयेपवमानायेदंनममेतित्यागः ॥ एवमग्रेपि ॥ ॐ अग्निर्ऋषिःपवमानःपांचजन्यः
पुरोहितः ॥ तमीमहेमहागयंस्वाहा ॥ अग्नयेपवमा० ॥ ॐ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं ॥ दधद्र
यिंमयिपोषंस्वाहा ॥ अग्नयेपवमा० ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ चूडाकर्मप्रधानाज्यहोमेवि
नियोगः ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तंनोअस्तुवयंस्या
मपतयोरयीणांस्वाहा ॥ प्रजापतयइदंनमम ॥ ततःशीतमुष्णंचोभेजलेदक्षिणवामकराभ्यांक्रमेणपात्रयोः
पृथक्गृहीत्वाशिशोःपश्चिमदेशेस्थित्वातदुदकद्वयमन्यस्मिन्पात्रेपाणिभ्यां ॥ ॐ उष्णेनवायउदकेनेहीति
मंत्रेणयुगपन्निनीयतदेकदेशंगृहीत्वानवनीतेनदधिद्रप्सेनवामिश्रयित्वाकुमारस्यवामकर्णमारभ्यप्रदक्षिणं ॥
ॐ अदितिःकेशान्वपत्वापउंदंतुवर्चसइतिमंत्रेणशिरस्त्रिवारंक्लेदयेत् ॥ प्रतिक्लेदनेमंत्रावृत्तिः ॥ ततोब्रह्माद



स्तस्थितैकविंशतिकुशपिंजूलमध्येत्रीणिकुशपिंजूलान्यादाय ॥ ॐ ओषधेत्रायस्वैनमितिमंत्रेणकुमाराभिमु
खंपश्चिमाग्राणितस्यदक्षिणेकेशभागेनिधायतेषुताम्रमयंक्षुरं ॥ ॐ स्वधितेमैनंहिंसीरितिमंत्रेणानिधाय ॥
ॐ येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्माणोवपतेदमस्यायुष्मान्जरदष्टिर्यथासदि
तिमंत्रेणसकेशानिपिंजूलानिछित्वाप्रागग्राणिकृत्वाशरावस्थशमीपर्णैरेकीकृत्यमातुःकरेदद्यात् ॥ साचता
निसकेशान्यानडुहेगोमयेप्रागग्राणिनिदध्यात् ॥ एवंद्वितीयादिच्छेदनेषुपिंजूलनिधानादिसमंत्रकंकार्यं ॥
छेदनमंत्रेतुविशेषः ॥ ॐ येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनतआयुषेवपामिसुश्लोक्यायस्वस्त
यइतिद्वितीयच्छेदने ॥ ॐ येनभूयश्चराच्यांज्योक्चपश्यातिसूर्यं ॥ तेनतआयुषेव० ॥ इतितृतीयच्छेदने ॥
चतुर्थे ॥ येनावपत्सविता० ॥ येनधाताबृहस्पते० ॥ येनभूयश्चराच्यां० ॥ इतित्रयोपिमंत्राः ॥ एवंदक्षि
णेकेशभागेचत्वारिछेदनानिकृत्वाउत्तरेपिकेशभागेएवमेवप्रत्येकंमंत्रैरावृत्तित्रीणिछेदनानिकुर्यात् ॥ सर्वैर्मं
त्रैश्चतुर्थं ॥ ततःयत्क्षुरेणमर्चयतासुपेशसावप्तावपसिकेशान् ॥ शुंधिशिरोमास्यायुःप्रमोषीरितिमंत्रेणाग्रतआर
भ्याम्लंक्षुरधारांनिमृज्यनापितमाहूय ॥ ॐ शीतोष्णाभिरद्भिरवर्थंकुर्वाणोक्षण्वन्कुशलीकुर्वितिप्रैषेणानुशास्य
तंप्रैषार्थंचावबोध्यनापितेनपूर्वावशेषितशीतोष्णांबुभिरार्द्रीकृतंकुमारशिरोयथाकुलाचारंकल्पितशिखंवाप
यित्वाकुमारंस्नापयित्वाभूषयित्वापूर्ववन्मातुरुत्संगेऽवस्थाप्यस्विष्टकृदादिहोमशेषंसमाप्यव्रीह्यादिपूर्णशराव
चतुष्टयंनापितायदद्यात् ॥ भूयसींदक्षिणांदत्त्वाब्राह्मणेभ्योदशसंख्याकेभ्योभोजनंचसंकल्प्यकर्मसंपूर्णतांवा

चयित्वायस्यमृत्येत्युक्त्वाविष्णुंनमस्कृत्याशिषोब्राह्मणोक्ताःस्वयंकुमारश्चगृह्णीयात् ॥एतत्सर्वंकुमार्याअप्यमं त्रकं ॥ होमस्तुसमंत्रकइति ॥ मध्येशिरसिचूडास्याद्वासिष्ठानांतुदक्षिणे ॥ उभयोःपार्श्वयोरत्रिकाश्यपानां शिखामता ॥ शिशोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् ॥ पंचमाद्वादधोर्ध्वंतुगर्भिण्यामपिकारयेत् ॥ सहोपनीत्याकुर्याच्चेत्तदादोषोनविद्यते ॥ ॥ इति चूडाकर्म विधिः समाप्तः ॥ ॥छ॥ ॥छ॥

## ॥ १४ ॥ ॥ अथ समंत्रक अक्षरस्वीकारविधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथाक्षरस्वीकारविधिप्रारंभः ॥ नृसिंहः ॥ अक्षरस्वीकृतिःप्रोक्ताप्राप्तेपंचमहायने ॥ उत्तरायणगेसूर्येकुंभमासंविवर्जयेदिति मुहूर्तसंग्रहे ॥ उत्तरायणगेसूर्येकुंभमासंविवर्जयेत् ॥ पूर्वपक्षःशुभःप्रोक्तःकृष्णश्चांत्यत्रिकंविनेति ॥ बृहस्पतिः ॥ विद्यारंभोव्रतोद्देशःक्षौरंचैवविशेषतः ॥ गलग्रहेन कर्तव्यंयदीच्छेत्पुत्रजीवितमिति ॥ गलग्रहस्वरूपंराजमार्तंडे ॥ त्रयोदश्याश्चतुष्कंचसप्तम्यादिदिनत्रयं ॥ चतुर्थीचैकतःप्रोक्ताअष्टावेतेगलग्रहाः ॥ इति ॥ ल्यब्लोपेपंचमी ॥ तस्याः ॥ प्रतिप्रसवमाहदेवरातः ॥ त्रयोदश्यक्षरेश्रेष्ठेति ॥ मार्कंडेयः ॥ वारेदिनेशभृगुसूज्ञबृहस्पतीनांविद्वानसौभवतीति ॥ वसिष्ठः ॥ रविवारेतुपूर्वाह्णेविद्यारंभोविधीयते ॥ चंद्रवारेपराह्णेतुविद्यागुर्वीविधीयतेइति ॥ महेश्वरः ॥ हस्तादित्रितयेतथा निर्ऋतिभेपूर्वांत्यभेष्वश्विभेमित्रर्क्षेचमृगादिपंचसुशुभःप्रारंभआद्यःस्मृतः ॥ विद्यानांहरिभत्रयेचदिवसेसूरेर्भृगोर्वादिनेऽनध्यातारव्यतदाद्यवर्जिततिथौकेंद्रस्थितैःसतूग्रहैरिति ॥ राजमार्तंडः ॥ विद्यारंभःप्रशस्तोभवतिमधुरिपौप्राप्तबोधेशशांकेशस्तेतीक्ष्णद्युतौचत्रिदशपतिगुरावुद्गतेचाथशुक्रे ॥ स्वाध्यायेसिंहसंस्थखरकिरणयुतंदेवपूज्यंविहायशुक्रादित्येज्यवारेत्रिदशपतिगुरौकेंद्रसंस्थेतुपापे ॥ पानेनिषिद्धस्थानस्थिते ॥ अक्षरारंभप्रकारस्तुमाधवीयेमार्कंडेनोक्तः ॥ पूजयित्वाहरिंलक्ष्मींदेवींचैवसरस्वतीं ॥ स्वविद्यासूत्रकारांश्चस्वविद्यांचविशेषतः ॥ एतेषामेवदेवानांनाम्नातुजुहुयाद्धृतं ॥ दक्षिणाभिर्द्विजेंद्राणांकर्तव्यंचात्रपूजनं ॥ प्राङ्मुखोगुरुरासीतवरुणाभिमुखंशिशुं ॥ अध्यापयेत्तुप्रथमंद्विजैश्चैवसुपूजितः ॥ अनेनगुरुपूजनमपिकर्त्तव्यमितिसूचितं ॥ सरस्वतीपूजनप्रकारमाहपारिजातेगर्गः ॥ स्नात्वाशुचौसमेदेशेगोचर्ममात्रमुपलिप्यसैकतंस्थलंकृत्वापलाशशाखयामृदंखनित्वातस्यांसरस्वतीमावाहयेत् ॥ भुवनमातःसर्ववाङ्मयरूपेणागच्छेति॥ ततःप्रणवेनार्घ्यपाद्याचमनीयगंधपुष्पाक्षतधूपदीपपायसगुडौदननैवेद्यसमर्पणनमस्कारान्कृत्वाचार्यशक्तितोवस्त्रालंकारादिभिःपूजयित्वासरस्वतीविघ्नेशाचार्यांस्त्रिःप्रदक्षिणीकृत्यप्रणवपूर्वकमक्षरंआरभेत ॥ ततआचार्याभिवंदनंकृत्वासरस्वत्यादीनावाहनक्रमेणोद्वासयेत् ॥ विद्यावृद्धिर्भवतीति ॥ विष्णुधर्मोत्तरेधात्रीपूजनमत्राधिकमुक्तं ॥ ब्राह्मणानांगुरूणांचदेवतानामनंतरं ॥ ततःसंपूज्यवित्तेनधात्रीरामंगुरुंतथेति ॥ गुरूणांपित्रादीनां ॥ गुरुमाचार्यं ॥ इति संस्कारकौस्तुभेऽक्षरस्वीकार विधिः समाप्तः ॥ ॥ छ ॥

## ॥ १५ ॥ ॥ अथ समंत्रक बृहस्पतिशांति विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथबृहस्पतिशांतिविधिप्रारंभः ॥ शास्त्रार्थश्च ॥ शौनकः ॥ कन्यकोद्वाहकाले

तुआनुकूल्यंनविद्यते ॥ ब्राह्मणस्योपनयनेगुरोर्विधिरुदाहृतः ॥ सुवर्णेनगुरुंकृत्वापीतवस्त्रेणवेष्टयेत् ॥
ईशान्यांधवलंकुंभंधान्योपरिनिधायच ॥ दमनंमधुपुष्पाणिपत्रपालाशसर्षपान् ॥ मांसीगुडूच्यपामार्गविडंगंशंखिनीवचा ॥ सहदेवीविष्णुक्रांतासर्वौषधिशतावरी ॥ कुंभेनिक्षिपेदितिशेषः ॥ कृत्वाज्यभागपर्यंतंस्वशाखोक्तविधानतः ॥ ग्रहोक्तमंडलेभ्यर्च्यपीतपुष्पशतादिभिः ॥ देवपूजोत्तरेकालेततःकुंभानुमंत्रणं ॥ अश्वत्थसमिधश्चाज्यंपायसंसर्पिषायुतं ॥ यवव्रीहितिलाःसाज्यामंत्रेणैवबृहस्पतेः ॥ अष्टोत्तरशतंसर्वंहोमशेषंसमापयेत् ॥ पुत्रदारसमेतस्याभिषेकंसमाचरेत् ॥ कुंभाभिमंत्रणोक्तैश्चसमुद्रज्येष्ठेतिमंत्रतः ॥ प्रतिमांकुंभवस्त्रंचआचार्यायनिवेदयेत् ॥ ब्राह्मणान्भोजयेत्पश्चात्शुभदःस्यान्नसंशयः ॥ इतिवृद्धवसिष्ठोक्तिः तथामदनरत्नेस्कांदेगुरुपूजोक्ता ॥ कन्याविवाहकालेतुगुरोःशुद्धिर्नविद्यते ॥ ब्राह्मणस्योपनयनेयस्यस्यादुःस्थितंततः ॥ दुःस्थितंदुःस्थानमष्टमादि ॥ आगतोगुरुरितिशेषःतदापूजागुरोःकार्याविधिवद्भक्तिभावितैः ॥ मदंतीकामपुष्पाणिपत्रंपालाशसर्षपाः ॥ मदंतीयूथिका ॥ कामोदमनः ॥ गुडूचीचाप्यपामार्गविडंगंशंखिनीवचा ॥ सहदेवीविष्णुक्रांतासर्वौषध्यःशतावरी ॥ कुष्टंमांसीहरिद्रेद्वेसुराशैलेयचंदनं ॥ वचाकचोरमुस्तंचसर्वौषध्यःप्रकीर्तिताः ॥ तथैवाश्वत्थभंगांश्चपंचगव्यंजलंतथा ॥ नूतनंसोदकुंभंचपीतवस्त्रसमन्वितं ॥ पंचरत्नैःसमायुक्तमीशान्यांस्थाप्यचानलात् अनलदेशात् ॥ ॐयाओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणामहंशतंधामानिसप्तच ॥ इतिमंत्रेणसर्वाअस्मिन्विनिक्षिपेत् ॥ कुंभस्योपरिभागेतुस्थापयित्वाबृहस्पतिं ॥ सुवर्णपात्रेसौवर्णींप्रतिमांतुयुधिष्ठिर ॥ कारयेत्तुयथाशक्त्यावित्तशाठ्यविवर्जितः ॥ पीतवस्त्रयुगच्छन्नांपीतयज्ञोपवीतिनीं ॥ पूजयेद्गंधपुष्पाद्यैस्ततोहोमंसमाचरेत् ॥ समिधोऽश्वत्थवृक्षस्यहोम्याअष्टोत्तरंशतं ॥ तिलव्रीहियवंमिश्रंहोतव्यंचयथाक्रमम् ॥ अनेनग्रहमखदृष्टस्यसमिद्धोमानंतरंभाविनश्चर्वाज्यहोमस्यानंतरंआगंतुःअयंहोमः कार्यः इतिज्ञाप्यते॥ बृहस्पतेतिमंत्रेणऋषिच्छंदःसमन्वितं॥ ततोहोमावसानेतुपूजयेच्चबृहस्पतिम् ॥ पीतगंधैस्तथापुष्पैर्धूपैर्दीपैश्चभक्तितः ॥ दध्योदनंचनैवेद्यंफलतांबूलसंयुतं॥नमअंगिरसांनाथवाक्पतेथबृहस्पते॥क्रूरग्रहैःपीडितानाममृतायनमोनमः ॥पूजयित्वासुराचार्यंपश्चादर्घ्यंनिवेदयेत् ॥ गंभीरदृढरूपांगदेवेज्यासुमतेप्रभो ॥नमस्तेवाक्पतेशांतगृहाणार्घ्यंनमोऽस्तुते ॥ अर्घ्यंदत्त्वासुरेशायजपंहोमंसमर्पयेत् ॥ भक्त्यायत्तेसुराचार्यहोमपूजादियत्कृतं ॥ तत्त्वंगृहाणशांत्यर्थंबृहस्पतेनमोनमः ॥ मंत्रेणानेनसंकल्प्यपश्चात्संप्रार्थयेन्नृप ॥ जीवोबृहस्पतिःसूरिराचार्योगुरुरंगिराः ॥ वाचस्पतिर्देवमंत्रीशुभंकुर्यात्सदामम ॥ सर्वोपचारसंयुक्तांप्रतिमांतांयुधिष्ठिर ॥ प्रणम्यचगवायुक्तामाचार्यायनिवेदयेत् ॥ अथाचार्यस्तुनियतोवेदवेदांगपारगः ॥ यजमानंसपत्नीकंशांतचित्तोजितेंद्रियः ॥ कुंभोदकंगृहीत्वाथमंत्रैरेतैःप्रसिंचयेत् ॥ इदमापोथमंत्रेणतामग्निमित्यृचातथा ॥ याओषधीरश्वावतीकूष्मांडैश्चाभिषेचयेत् ॥ पश्चा

त्संभोजयेद्विप्रान्यथाशक्तियुधिष्ठिर ॥ संक्रांतावपिकौंतेयतथास्वाभ्युदयेषुच ॥ कुर्वन्बृहस्पतेःपूजामभी
ष्टफलमश्नुयादिति ॥ संक्रातौगुरोःइतिसंस्कारकौस्तुभेस्कांदोक्तागुरुपूजा ॥ अत्रचशौनकोक्तौस्कांदो
क्तौचशाखाभेदेद्वादशकपालैकादशकपालादिभेदस्येवयूथिकासदसत्वादिप्रयुक्तेषट्वैलक्षण्यस्यापिकर्म
भेदकत्वासंभवादुभयगतगुणोपसंहारेणकुंभानुमंत्रणादिसाधारणधर्माणांदीर्घचतुरस्रमंडलाद्यसाधारणधर्मा
णांविनियोगवशेनापेक्षितानांग्रहमखात्स्वीकारेणतार्वाद्भिरेवग्रहमेधीयवन्नैराकांक्ष्यसंभवेनाावियुक्ततत्रत्यध
र्मानादरेणप्रयोगंवदामः ॥ अस्यकुमारस्योपनयनकालेबृहस्पत्यनुकूलसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंबृह
स्पतिशांतिंकरिष्ये ॥ इतिसंकल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् ॥ ततआचार्यः ॥ कर्षतदर्धादिपरि
मितहेम्नायथाशक्तिनिर्मितप्रातिमायाअग्न्युत्तारणांतकृत्वायदत्रसंस्थितंभूतांमित्यादिदेशसंस्कारांतेहोमदेश
स्येशानदेशेमहीद्यौरितिस्पृष्टभुविओषधयइतिधान्यंप्रक्षिप्याकलशेष्वितिधवलकुंभंस्थाप्येमंमेगंगेइतितीर्थो
दकेनापूर्याश्वत्थेवोनिषदनमितिअश्वत्थपल्लवान् ॥ गायत्र्यादिमंत्रैःपंचगव्यंदेवस्यत्वाभिषिंचामीतिकुशोद
कंनिक्षिप्ययुवासुवासाइतिपीतवस्त्रेणसंवेष्ट्यसहिरत्नानिइतिपंचरत्नानिप्रक्षिप्ययाऽओषधीरितिवक्ष्यमाणान्
सर्वान्निक्षिपेत् ॥ यूथिकादमनमधुपुष्पाणिपत्रंभाषायांपत्रजमितिप्रसिद्धं ॥ पलाशंसर्षपान् ॥ जटामांसीं
गुडूचीं ॥ अपामार्गंविडंगंशंखिनींवचांसहदेवींविष्णुक्रांताशतावरीं ॥ कुष्ठंमांसींहरिद्रेद्वेमुराशैलेयचंदनं ॥
वचाकचोरमुस्तांचेति ॥ ततश्चंदनादिनाकुंभमभ्यर्च्यपूर्णादर्वीतियथाविभवंसौवर्णादिपूर्णपात्रंनिधायतत्राष्ट



दलोत्तरदलेहरिताक्षतनिर्मितदीर्घचतुरस्रपीठेहैमींबृहस्पतिप्रतिमांस्थापयित्वास्थंडिलेऽग्निंप्रतिष्ठापनादिअ
न्वाधानेचक्षुषीआज्येनेत्यंतेबृहस्पतिमष्टोत्तरशतसंख्याभिरश्वत्थसमिद्भिस्तावतीभिराज्याहुतिभिःतावती
भिःसर्पिर्मिश्रपायसाहुतिभिःतावतीभिःसाज्ययवव्रीहितिलाहुतिभिश्चशेषेणस्विष्टकृतमित्यादिस्वशाखोक्त
विधिनाज्यभागांतंकृत्वाकुंभोपरिस्थापितप्रतिमायामावाहनादिषोडशोपचारैर्बृहस्पतिंपूजयेत् ॥ तत्रविशे
षः ॥ पीतवस्त्रयुग्मंपीतंयज्ञोपवीतंपीतंचंदनंपीताक्षतान् ॥ चंपकादिपीतपुष्पं ॥ बिल्वमज्जाधूपं ॥ घृत
दीपं ॥ दध्योदनंनैवेद्यं ॥ दक्षिणायांपुष्परागोमाणिक्यंयथाशक्तिहेमवा ॥ पूजांतेऽब्लिंगाभिर्वारुणी
भिःपावमानीभिश्चग्रहमखोक्ताभिःकुंभानुमंत्रणं ॥ ततोयजमानोयथान्वाधानंबृहस्पतयइदंनममेतित्यागं
कुर्यात् ॥ अथाचार्योबृहस्पतिमंत्रेणप्रणवादिनाऋष्यादिस्मरणपूर्वकंदधिमध्वाक्ताअष्टोत्तरशतमश्वत्थस
मिधोजुहुयात् ॥ तावतीराज्याहुतीःसर्पिर्मिश्रलोकसिद्धपायसाहुतीःसाज्ययवव्रीहितिलाहुतीश्चततःस्वि
ष्टकृदादिहोमशेषंपरिस्तरणविसर्जनाग्न्यर्चनांतंकुर्यात् ॥ ततोबृहस्पतेःगंधादिभिःपूर्वोक्तैःफलतांबूलांतैःपू
जनंकृत्वासयजमानोनमस्कुर्यात् ॥ ततस्ताम्रपात्रेशुद्धोदकंप्रक्षिप्यतत्रपीतानिगंधाक्षतपुष्पाणिफलंचप्र
क्षिप्यार्घ्यंदद्यात् ॥ गंभीरदृढरूपांगदेवेज्यासुमतेप्रभो ॥ नमस्तेवाक्पतेशांतगृहाणार्घ्यंबृहस्पतइति ॥
ततोयजमानोबृहस्पतयेकृतकर्मार्पणंकुर्यात् ॥ भक्त्यायत्तेसुराचार्यहोमपूजादियत्कृतं ॥ तत्त्वंगृहाणशांत्य
र्थंबृहस्पतेनमोनमइति ॥ ततःप्रार्थयेत् ॥ जीवोबृहस्पतिःसूरिराचार्योगुरुरंगिराः ॥ वाचस्पतिर्देवमंत्रीशु

भंकुर्यात्सदाममेति ॥ ततोविसर्जनंकलाचार्यप्रणम्यसर्वोपचारसंयुक्तांगोयुक्तामिमांप्रतिमांतुभ्यमहंसंप्रद दे ॥ इतिताद्दशप्रतिमांदद्यादभिषेकोत्तरंवाप्रतिमादानंकुंभोदकेनाचार्यः ॥ पुत्रदारसमेतंयजमानमभिषिं चेत् ॥ आपोहिष्ठेतितिसृणामांबरीषःसिंधुद्वीपआपोगायत्री ॥ समुद्रज्येष्ठाइतिमंत्राणांवसिष्ठआपस्त्रिष्टुप् ॥ इदमापइत्यस्यसिंधुद्वीपआपोनुष्टुप् ॥ तामग्निवर्णामित्यस्यहिरण्यगर्भोदुर्गात्रिष्टुप् ॥ याओषधीरित्यस्या भिषगोषधयोनुष्टुप् ॥ अश्वावतीर्गोमतीरित्यस्यवसिष्टउषसस्त्रिष्टुप् ॥ यद्देवादेवहेडनंयददीव्यामायुष्टेवि श्वतोदधदित्यापस्तंबशाखोक्तेरनुवाकैश्चतच्छंयोरावृणीमहइति ॥ ततोयथाशक्तिब्राह्मणान्भोजयेत् ॥ इति संस्कारकौस्तुभेबृहस्पतिशांतिः समाप्ता ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १६ ॥ ॥ अथ सकलकर्मोपयोगिपुण्याहवाचन प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ पुण्याहवाचनप्रयोगः ॥ यजमानःकृतमंगलस्नानःकृताचमनःप्राङ्मुखः वस्त्राच्छादितेपीठेउपविश्य ॥ पत्नींस्वदक्षिणतउपविश्य ॥ प्राणानायम्य ॥ श्रीमन्महागणाधिपतयेन मः ॥ अविघ्नमस्तु ॥ सुमुखश्चेत्यादिश्रीपरमेश्वरप्रीत्यर्थअमुककर्मांगभूतंआद्यगणपतिपूजनपूर्वकंस्वस्ति पुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंग्रहयज्ञंमंडपप्रतिष्ठांकुलदेवतास्थापनंआचार्यवरणंचकरिष्ये ॥ ग णानांत्वाशौनकोगृत्समदोगणपतिर्जगती ॥ गणपत्या० ॥ ॐगणानांत्वागणपतिंहवामहेकविंकवीनामु



पमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ ॐभूर्भुवःस्वःऋद्धिबुद्धिस हितंमहागणपतिंसांगंसपरिवारंसायुधंसशक्तिकंअस्मिन्पूगीफलेआ० ॥ ॐभूर्भुवः स्वःमहागणपतयेनमः ध्यायामि ॥ एवंषोडशोपचारैःपूजयेत् ॥ ॐनिषुसीदगणपतेगणेषुत्वामाहुर्विप्रतमंकवीनां ॥ नऋतेत्व त्क्रियतेकिंचनारेमहामर्कंमघवंचित्रमर्च ॥ ॐभूर्भुवःस्वःमहागणपतये० ॥ दूर्वांकुरान्स० ॥ वक्रतुंडम हाकायसूर्यकोटिसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ अनयाविघ्नेश्वरपूजयाविघ्नहर्तामहागणप तिःप्रीयतां ॥ महागणपतयेनमः ॥ ॐमहीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतांनोभरीमभिः ॥ ॐओषधयःसंवदंतेसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ॥ ओषधीः ॥ ॐआकु लशेषुधावतिपवित्रेपरिषिच्यते ॥ उक्थैर्यज्ञेषुवर्धते ॥ ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरु ष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ उदकं ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरी षिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ गंधं ॥ कांडात्कांडात्प्ररोहंतिपरुषःपरुषःपरि ॥ एवा नोदूर्वेप्रतनुसहस्रेणशतेनच ॥ दूर्वाः ॥ ॐअश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथ यत्सनवथपूरुषं ॥ पल्लवान् ॥ ॐयाःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानो

मुंचंत्वंहसः ॥ फलं ॥ सहिरत्नानिदाशुषेसुवातिसविताभर्गः ॥ तंभागंचित्रमीमहे ॥ हिरण्यं ॥ ॐहिरण्यरूपःसहिरण्यसंदृगपांनपात्सेदुहिरण्यवर्णः ॥ हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यंनमस्मै ॥ हिरण्यं ॥ ॐयुवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाध्योमनसादेवयंतः ॥ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो ॥ पूर्णपात्रं ॥ तत्वायामिःशुनःशेपोवरुणस्त्रिष्टुप् ॥ उत्तरकलशेवरुणावा॰ ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ ॐभूर्भुवःस्वःवरुणंसांगंसपरिवारंआवा॰ ॥ ॐभूर्भुवःस्वः ॥ वरुणाय॰ ॥ विलेप॰ चंदनंस॰ पंचोपचारैःपूजयेत् ॥ ॐतत्त्वायामि॰ ॥ ॐभूर्भुवःस्वःवरुणाय॰ मंत्रपुष्पंस॰ ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणःश्रितः ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा ॥ आयांतुममशांत्यर्थंदुरितक्षयकारकाः ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुममशांत्यर्थं॰ ॥ ततःउत्तरकलशेअक्षतान्क्षिपेत् ॥ मातृदेवोभव ॥ पितृदेवोभव ॥ आचार्यदेवोभव ॥ अतिथिदेवोभव ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ अवनिकृतजानुमंडलःमकलमुकुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिनासुवर्णपूर्णकलशंधारयित्वा ॥ आशिषःप्रार्थयंते प्रार्थनामाह ॥ एताःसत्याआशिषःसंतु ॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिचतेनायुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु ॥ इतित्रिः ॥ शिवाआपःसंतु ॥ संतुशिवाऽआपः ॥ गंधाःपांतुसुमंगल्यंचास्त्वितिभवंतोब्रुवंतु ॥ गंधाःपांतुसुमंगल्यंचास्तु ॥ अक्षताःपांतुआयुष्यमस्त्वितिभवंतोब्रुवंतु ॥ अक्षताःपांतुआयुष्यमस्तु ॥ पुष्पाणिपांतुसौश्रियमस्त्वितिभवंतोब्रुवंतु ॥ पुष्पाणिपांतुसौश्रियमस्तु ॥ तांबूलानिपांतुऐश्वर्यमस्त्वितिभवंतोब्रुवंतु ॥ तांबूलानिपांतुऐश्वर्यमस्तु ॥ दक्षिणाःपांतुबहुदेयंचास्त्वितिभवंतोब्रुवंतु ॥ दक्षिणाःपांतुबहुदेयंचास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्त्वितिभवंतोब्रुवंतु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यंचास्तु ॥ यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाः शुभाःशोभनाःप्रवर्तंते ॥ तमहमोंकारमादिंकृत्वाऋग्यजुःसामाशीर्वचनबंहुऋषिसंमतंसंविज्ञातंभवद्भिरनुज्ञातःपुण्यंपुण्याहंवाचयिष्ये ॥ वाच्यतां ॥ ॐभद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत् ॥ द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदीर्घमायुः ॥ सविता पश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥

नवोनवोभवतिजायमानोन्हांकेतुरुषसामेत्यग्रं ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः ॥ उच्चादिविदक्षिणावंतोअस्थुर्येअश्वदाःसहतेसूर्येण ॥ हिरण्यदाअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः ॥ आपउंदंतुजीवसेदीर्घायुत्वायवर्चसे ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोय शोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यां ॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं ॥ अश्विनंसपु त्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥ संत्वासिंचामियजुषाप्रजामायुर्धनंच ॥ व्रतनियमतपस्वाध्यायक्र तुदमदानविशिष्टानांब्राह्मणानांमनःसमाधीयतां ॥ समाहितमनसःस्मःप्रसीदंतुभवंतः ॥प्रसन्नाःस्मः ॥ शां तिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥ वृद्धिरस्तु ॥ अविघ्नमस्तु ॥ आयुष्यमस्तु ॥ आरोग्यमस्तु ॥ शिवं कर्मास्तु ॥ कर्मसमृद्धिरस्तु ॥ धर्मसमृद्धिरस्तु ॥ वेदसमृद्धिरस्तु ॥ शास्त्रसमृद्धिरस्तु ॥ पुत्रसमृद्धिर स्तु ॥ धनधान्यसमृद्धिरस्तु ॥ इष्टसंपदस्तु ॥ बहिर्देशेअरिष्टनिरसनमस्तु ॥ यत्पापंतत्प्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु ॥ उत्तरेकर्मण्यविघ्नमस्तु ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ उत्तरोत्तराःक्रियाःशुभाःशोभनाः संपद्यंतां॥इष्टाःकामाःसंपद्यंतां ॥ तिथिकरणमुहूर्तनक्षत्रसंपदस्तु ॥ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंतां ॥ तिथिकरणेमुहूर्तेनक्षत्रेसग्रहेसदैवतेप्रीयेतां ॥ दुर्गापांचाल्यौप्रीयेतां ॥ अग्निपुरोगाविश्वेदेवाः प्रीयंतां ॥ इंद्रपुरोगामरुद्गणाःप्रीयंतां ॥ ब्रह्मपुरोगाःसर्वेवेदाःप्रीयंतां ॥ विष्णुपुरोगाःसर्वेदेवाःप्रीयंतां ॥





माहेश्वरीपुरोगाउमामातरःप्रीयंतां ॥ वसिष्ठपुरोगाऋषिगणाःप्रीयंतां ॥ अरुंधतीपुरोगाएकपत्न्यःप्रीयंतां ॥ ऋषयश्छंदांस्याचार्यावेदादेवायज्ञाश्चप्रीयंतां ॥ ब्रह्मचब्राह्मणाश्चप्रीयंतां ॥ श्रीसरस्वत्यौप्रीयेतां ॥ श्रद्धा मेधेप्रीयेतां ॥ भगवतीकात्यायनीप्रीयतां ॥ भगवतीमाहेश्वरीप्रीयतां ॥ भगवतीपुष्टिकरीप्रीयतां ॥ भग वतीतुष्टिकरीप्रीयतां ॥ भगवतीऋद्धिकरीप्रीयतां ॥ भगवतीवृद्धिकरीप्रीयतां ॥ भगवंतौविघ्नविनायकौ प्रीयेतां ॥ भगवान्स्वामीमहासेनःसपत्नीकःससुतःसपार्षदःसर्वस्थानगतःप्रीयतां ॥ हरिहरहिरण्यगर्भाः प्रीयंतां ॥ सर्वाग्रामदेवताःप्रीयंतां ॥ सर्वाःकुलदेवताःप्रीयंतां ॥ बहिरपः ॥ हताब्रह्मद्विषः ॥ हताःपरिपं थिनः ॥ हताअस्यकर्मणोविघ्नकर्तारः ॥ शत्रवःपराभवंयांतु ॥ शाम्यंतुघोराणि ॥ शाम्यंतुपापानि ॥ शाम्यंत्वीतयः ॥ शुभानिवर्धंतां ॥ शिवाआपःसंतु ॥ शिवाऋतवःसंतु ॥ शिवाअग्नयःसंतु ॥ शिवाआहु तयःसंतु ॥ शिवाओषधयःसंतु ॥ शिवावनस्पतयःसंतु ॥ शिवाअतिथयःसंतु ॥ अहोरात्रेशिवेस्यातां ॥ निकामेनिकामेनःपर्जन्योवर्षतु ॥ फलिन्योनओषधयःपच्यंतां ॥ योगक्षेमोनःकल्पतां ॥ शुक्रांगारकबुध बृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयंतां ॥ भगवान्नारायणःप्रीयतां ॥ भग वान्पर्जन्यःप्रीयतां ॥ भगवान्स्वामीमहासेनःप्रीयतांपुण्याहकालान्वाचयिष्ये ॥ वाच्यतां ॥ ॐ उद्गातेव शकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्व

तोनःशकुनेपुण्यमावद ॥ याज्यया०संस्कुरुते ॥ यत्पुण्यनक्षत्रं॥तद्वट्कुर्वीतोपव्युषं॥ यदावैसूर्यउदेति ॥
अथनक्षत्रंनैति॥यावंतितत्रसूर्योगच्छेत् ॥ यत्रंजघन्यंपश्येत् ॥ तावतिकुर्वीतयत्कारीस्यात् ॥ पुण्याहएव
कुरुते ॥ तानिवाएतानियमनक्षत्राणि ॥ यान्येवदेवनक्षत्राणि ॥ तेषुकुर्वीतयत्कारीस्यात् ॥ पुण्याह
एवकुरुते ॥ मह्यंसहकुटुंबिनेमहाजनान्नमस्कुर्वाणायआशीर्वचनमपेक्षमाणायअद्यकारिष्यमाणअमुकक
र्माख्यस्यकर्मणःपुण्याहंभवंतोब्रुवंतु ॥ ॐपुण्याहं ॥इतित्रिः ॥ॐ स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुव
नस्ययस्पतिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः ॥ आदित्यउदयनीयःपथ्ययैवेतः
स्वत्याप्रयंतिपथ्यांस्वस्तिमभ्युद्यंतिस्वस्त्येवेतः प्रयंतिस्वस्त्युद्यंतिस्वस्त्युद्यंति ॥ ॐ स्वस्तिनइंद्रोवृद्धश्र
वाः ॥ स्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्ताक्ष्योअरिष्टनेमिः ॥ स्वस्तिनोबृहस्पतिर्दधातु ॥ अष्टौदेवा
वसवःसोम्यासः ॥ चतस्रोदेवीरजराश्रविष्ठाः ॥ तेयज्ञंपांतुरजसःपरस्तात् ॥ संवत्सरीणममृतं स्वस्ति ॥
मह्यं० ॥ अमुककर्माख्यायकर्मणेस्वस्तिभवंतोब्रुवंतु ॥ आयुष्मतेस्वस्ति ॥ इतित्रिवारं ॥ ॐऋध्यामस्तो
मंसनुयामवाजमानोमंत्रंसरथेहोपयातं ॥ यज्ञोनपक्वंमधुगोष्वंतराभूतांशोअश्विनोःकाममप्राः ॥ सर्वामृ
द्धिमृध्नुयामितितंवैतेजसैवपुरस्तात्पर्यभवच्छंदोभिर्मध्यतोक्षरैरुपरिष्टाद्गायत्र्यासर्वतोद्वादशाहंपरिभूयसर्वा

मृद्धिमार्ध्नोत्सर्वामृद्धिमृध्नोतियएवंवेद ॥ ऋध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयंनोअस्तु ॥ अनूरा
धान्हविषावर्धयंतः ॥ शतंजीवेमशरदःसवीराः ॥ त्रीणित्रीणिवैदेवानामृद्धानि ॥ त्रीणिछंदांसित्रीणिस
वनानि ॥ यत्रइमेलोकाः ॥ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति ॥ मह्यं०अमुककर्माख्यस्यकर्मणः ॥
ऋद्धिंभवंतोब्रुवंतु॥कर्मऋध्यतां॥ऋद्धिःसमृद्धिः॥ॐश्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति॥
श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधातिसंततमृचावषट्कृ
त्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ याज्यययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपुण्यामेवतल्लक्ष्मींसंभा
वयतिपुण्याल्लक्ष्मींसंस्कुरुते ॥ यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् ॥ अमुंचलोकमिदमुचसर्वं ॥ तन्नोनक्षत्रम
भिजिद्विजित्यं ॥ श्रियंदधात्वहृणीयमानं ॥ अहेबुध्नियमंत्रंमेगोपाय ॥ यमृषयस्त्रयिविदाविदुः ॥ ऋचः
सामानियजूंषि ॥ साहिश्रीरमृतासतां ॥ मह्यंसहकुटुंबिनेमहाजनान्नमस्कुर्वाणायआशीर्वचनमपेक्षमा
णायअमुककर्माख्यस्यकर्मणःश्रीरस्त्वितिभवंतोब्रुवंतु ॥ इतित्रिवारं ॥ वर्षशतंसंपूर्णमस्तु ॥ गोत्राभिवृद्धि
रस्तु ॥ कर्मांगदेवताःप्रीयंतां ॥ १ ॥ ॐ शुक्रेभिरंगैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ॥ शोचि
र्वसानःपर्यायुरपांश्रियोमिमीतेबृहतीरनूनाः ॥ तदप्येष०ततःउत्तरकलशंदक्षिणहस्तेदक्षिणकलशंवामहस्ते
गृहीत्वाताभ्यांधाराद्वयंसंततंपात्रेनिर्षिचेदेभिर्मंत्रैः ॥ ॐवास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभ

वानः ॥ यत्त्वेमहेप्रतितंनोजुषस्वशंनोभवाहिपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वे भिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदातेसक्षीमहिर ण्वयागातुमत्या ॥ पाहिक्षेमंउतयोगेवरंनोयूयंपातःस्वस्तिभिःसदानः ॥ अमीवहावास्तोष्पतेविश्वारूपा ण्याविशन् ॥ सखासुशेवंएधिनः ॥ शिवंशिवंशिवं ॥ अभिषेकेपत्नीवामतः ॥ समुद्रज्येष्ठाइतिचतसृणां वसिष्ठआपस्त्रिष्टुप् ॥ अभि० ॥ ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयाव ज्रीवृषभोरराददताआपोदेवीरिहमामवंतु ॥ याआपोदिव्याउतवास्रवंतिखनित्रिमाऽउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचय·पावकास्ताआपोदेवीरिहमामवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजना नां ॥ मधुश्चुतःशुचयोयाःपावकास्ता० ॥ यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति ॥ वैश्वानरो यास्वग्निःप्रविष्टस्ता० ॥ ॐ त्रायंतामिहदेवास्त्रायतांमरुतांगणः ॥ त्रायंतांविश्वाभूतानियथायमरपाअस त् ॥ आपइद्वाउभेषजीरापोअमीवचातनीः ॥ आपःसर्वस्यभेषजीस्तास्तेकृण्वंतुभेषजं ॥ हस्ताभ्यांदश शाखाभ्यांजिव्हावाचःपुरोगवी ॥ अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ ॐ इमाआपःशिवतमाइ माःसर्वस्यभेषजीः ॥ इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरु

णंयमंमनुं ॥ ताभिरद्भिरभिषिंचामित्वामहंराज्ञांत्वामधिराजोभवेह ॥ महांतंत्वामहीनांसम्राजंचर्षणीनांदे वीजनित्र्यजीजनद्भद्राजनित्र्यजीजनद्देवस्य० अमृताभिषेकोस्तु ॥ शांतिःपुष्टिस्तुष्टिश्चास्तु॥ ॐ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिंमहद्भूतंवायसंदेवतानां ॥ असुरघ्नमिंद्रसखंसमत्सुबृहद्यशोनावमिवारुहेम ॥ अंहोमुचंमां गिरसंगयंचस्वस्त्यात्रेयंमनसाचतार्क्ष्यं ॥ प्रयतपाणिःशरणंप्रपद्येस्वस्तिसंबाधेष्वभयंनोअस्तु ॥ पुण्याहवा चनफलसमृद्धिरस्त्वितिभवंतोब्रुवंतु ॥ पुण्याहवाचनफलसमृद्धिरस्तु ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहे श्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भ गवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाःपांतु तेसदा ॥ कीर्तिर्लक्ष्मीधृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिःक्षांतिस्तुष्टिश्चमातरः ॥ एता स्त्वामभिषिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिंचंतु राहुकेतुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्यो द्रुमानागादैत्याश्चाप्सरसांगणाः ॥अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्याव यवाश्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ८ ॥ इतिपुराणमंत्राः ॥ पुण्याहवाचनंसमाप्तं ॥ ॥ अथमातृकापूजनं ॥ गौरीपद्माशचीमेधासावित्रीवि जयाजया ॥ देवसेनास्वधास्वाहामातरोलोकमातरः ॥ १ ॥ धृतिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवता ॥

ब्राह्मीमाहेश्वरी चैवकौमारीवैष्णवीतथा ॥ वाराहीचतथेंद्राणीचामुंडाःसप्तमातरः ॥ गौर्यादिषोडशमातरः ॥ ब्राह्म्यादिसप्तमातरः ॥ गणपतिंदुर्गांक्षेत्रपालंचएष्वक्षतपुंजेष्वावाहयामि ॥ तदस्तु० ॥ गृह्णावै० प्रतिष्ठा प्रतिष्ठा ॥ ॐभूर्भुवःस्वःगौर्याद्यावाहितदेवताभ्यो० सुप्रतिष्ठितमस्तु ॥ ॐभूर्भुवःस्वः ॥ गौर्याद्यावाहितदेवताभ्यो० षोडशोपचारैःपूजयेत् ॥ ॐ गौरीर्मिमायसलिलानितक्षत्येकंपदीद्विपदीसाचतुष्पदी ॥ अष्टापदी नवंपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ ॐ भूर्भुवःस्वःगौर्याद्यावाहितदेवताभ्योनमः ॥ मंत्रपुष्पं० ॥ अनेनषोडशोपचारैःपूजनेनगौर्याद्यावाहितदेवताःप्रीयंतां ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ ॥ अथनांदी श्राद्धं ॥ सत्यवसुसंज्ञकाःविश्वेदेवाःनांदीमुखांःभूर्भुवःस्वः ॥ इदंवःपाद्यंस्वाहानमइयंचवृद्धिः ॥ मातृपितामहीप्रपितामह्यः ॥ नांदीमुख्यः ॥ भूर्भुबःस्वःइदं० पा० ॥ मातामहमातुःपितामहमातुःप्रपितामहाः ॥ नांदीमुखाः० इ० पा० पितृपितामहप्रपितामहाः ॥ नांदीमुखाः ॥ भूर्भुवःस्वःइदंवःपाद्यं० पुनःसत्यवसु० ॥ इदंवःआसनगंधा० ॥ पितृपितामह० इदंवःआसन० ॥ मातामह० आसन० ॥ गौर्यादिषोडशमातरःब्राह्म्यादिसप्तमातरःगणपतिंदुर्गांक्षेत्रपालं ॥ भूर्भुवःस्वःइदंवःयुग्मब्राह्मणभोजनपर्याप्तान्नस्थानेकिंचिद्धिरण्यंस्वाहानमइयंचवृद्धिःसत्यवसु० युग्मब्राह्मण० द्धिरण्यं० ॥ मातृपितामहीप्रपितामह्यःइदंवःयुग्म० द्धिरण्यं० ॥ पितृपितामहप्रपितामहाः ॥ भूर्भुवःस्वःयुग्म० ॥



द्धिरण्यं० ॥ मातामहमातुःपितामहमातुप्र० युग्म० ॥ द्धिरण्यं० ॥ ॐ उपास्मैगायतानरःपवमानायेंदवे ॥ अभिदेवा ऽँ इयक्षते ॥ अभितेमधुनापयोथर्वाणोअशिश्रयुः ॥ देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशमर्वते ॥ शंराजन्नोषधीभ्यः ॥ बभ्रवेनुस्वतवसेरुणायदिविस्पृशे ॥ सोमायगाथमर्चत ॥ हस्तच्युतेभिरद्रिभिःसुतंसोमंपुनीतन ॥ मधावाधावतामधु ॥ ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥यत्कामास्तेजुहुमस्तंनोअस्तुवयंस्यामपतयोरयीणां ॥ अनेनकृतस्यनांदीश्राद्धस्यप्रतिष्ठाफलसंसिद्ध्यर्थंद्राक्षामलकनिष्क्रयीभूतंकिंचिद्धिरण्यंस्वाहानमम ॥ मातापितामहीचैवतथैवप्रपितामही ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ मातामहस्तत्पिताचप्रमातामहकादयः ॥ एतेभवंतुमेप्रीताःप्रयच्छंतुचमंगलं ॥ इळामग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ॥ स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ अनेननांदीश्राद्धेननांदीमुखदेवताःप्रीयंतांवृद्धिः ॥ इतिनांदीश्राद्धं ॥ श्रीभवानीशंकरधूतपापेश्वरोजयति ॥ श्रीशंकर ॥ आर्यादुर्गाकुलदेवताप्रसन्ना ॥ ॥ इति सकलकर्मोपयोगीपुण्याहवाचनं समाप्तं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७ ॥ ॥ अथ समंत्रक ग्रहयज्ञ प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ श्रीसरस्वत्यैनमः ॥ अथसमंत्रकग्रहयज्ञप्रारंभः ॥ सचानित्यनैमित्तिककाम्यभे

देनत्रिधा ॥ अयनविषुवोपरागादिषुनित्यः गर्भाधानादिकर्मप्रारंभेषुनैमित्तिकः ॥ विपदपगमसंपदाद्रिका
मनासुकाम्यः ॥ अत्रमूलान्याकरतोज्ञेयानि ॥ ग्रहरूपादिज्ञात्वाकर्मकार्यं ॥ अन्यथाविफलं ॥ तदाहा
श्वलायनाचार्यः ॥ रूपवर्णायुधस्थानमंडलासनवाहनान् ॥ समित्कुंडोपहारांश्चपुष्परत्नाकृतीरपि ॥
गायत्रीमूलमंत्रांश्चनाममंत्रांश्चकेवलान् ॥ अधिप्रत्यधिदेवानांमंत्रांश्चर्ष्यादिसंयुतान् ॥ तत्तन्मूर्तीश्चजानी
याद्वोष्यन्नर्चन्नवग्रहान् ॥ अज्ञात्वैवपुमानिष्ट्वातत्फलंनैवविंदति ॥ दुःखंचाप्नोतिसुमहद्यत्नादिष्ट्वाप्यवि
त्पुमानिति ॥ गायत्रीग्रहगायत्रीप्रयोगेवक्ष्यते ॥ वर्णादयश्च ॥ मंडपकुंडादिकाम्येयथोक्तंकार्यं ॥ नित्य
नैमित्तिकयोस्त्वनित्यं ॥ नित्यंनैमित्तिकंहित्वासर्वमन्यत्समंडपमितिमात्स्योक्तेः ॥ कुंडेवास्थंडिलेपिवेति
आचार्योक्तेश्च ॥ मंडपलक्षणंहेमाद्रौमत्स्यपुराणे ॥ गृहस्योत्तरपूर्वेणमंडपंकारयेद्बुधः ॥ रुद्रायतनभूमौवा
चतुरस्रमुदक्प्लवं ॥ दशहस्तानथाष्टौवाहस्तान्कुर्याद्विधानतः ॥ तस्यद्वाराणिचत्वारिकर्तव्यानिविचक्षणैः ॥
कुंडंचस्कंदपुराणे ॥ नवग्रहमखेकुंडंहस्तमात्रंसमंततः ॥ चतुरस्रमधोहस्तंयोनिवक्त्रंसमेखलं ॥ चतुरंगुल
विस्तारामेखलातद्वदुच्छ्रिता ॥ मात्स्ये ॥ वितस्तिमात्रायोनिःस्यात्षट्सप्तांगुलविस्तृता ॥ कूर्मपृष्ठोन्नता
मध्येपार्श्वयोश्चांगुलोच्छ्रिता ॥ गजोष्ठसदृशीतद्वदायताछिद्रसंयुता ॥ मेखलोपरिसर्वत्रअश्वत्थदलसन्नि
भा ॥ गजोष्ठतुल्याश्वत्थदलतुल्यावेतिविकल्पः ॥ साचयोनिः पश्चिमतःकार्या ॥ पश्चिमेमध्यभागेतुयो
निंकुर्याद्विधानतइतिगर्गोक्तेः ॥ मात्स्ये ॥ मानहीनाधिकंकुंडमनेकभयदंभवेत् ॥ तस्यचोत्तरपूर्वेतुस्थंडि

लंहस्तमात्रकं ॥ त्रिवप्रंचतुरस्रंचवितस्त्युच्छ्रायसंमितं ॥ स्थंडिलंवेदिः ॥ वप्रोमेखला ॥ द्व्यंगुलोच्छ्रितो
वप्रःप्रथमःसमुदाहृतः ॥ अंगुलोच्छ्रायसंयुक्तंवप्रद्वयमथोपरि ॥ द्व्यंगुलस्तत्रविस्तारःसर्वेषांकथितो
बुधैरिति ॥ अन्यत्सर्ववर्णदेशनामादिप्रयोगेस्पष्टीभविष्यति ॥ अथग्रहयज्ञप्रयोगः ॥ यजमानः स्नात्वानि
त्यकर्मनिर्वर्त्यमौहूर्तिकोक्तेशुभेकालेदेशकालौसंकीर्त्यअयनादिनित्यकालेषुसंकल्पयेत् ॥ ग्रहानुकूल्यसि
द्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्यइति ॥ गर्भाधानादिनिमित्तेषुअमुककर्मकर्तुमादौग्रहानुकूल्यसि
द्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्यइति ॥ विपदपगमादिकामनायांतुअमुककामनासिद्धिद्वाराश्री
परमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्यइति ॥ ततःसंभारान्संभरेत् ॥ तत्रनित्यनैमित्तिकयोःप्रतिपदोक्तवस्तूनि
तदभावेनुकूलरूपाणिवायथाशक्तिसंपादयेत् ॥काम्येतुप्रतिनिध्यभावात् ॥ प्रतिपदोक्तवस्तून्येव ॥ ततआ
चार्यादिवरणं ॥ तत्रविधिज्ञंस्वशाखाविदंसाचारमेकंअस्मिन्ग्रहमखेत्वमाचार्यकंकुर्वितिपाणिनापाणिमुपस्पृ
श्यवृणुयात् ॥ अन्यानार्त्विज्यंकुर्वितिप्रत्येकंवृणुयात् ॥ तेचहोमानुसारेणचत्वारोष्टौषोडशवेति चकरिष्या
मीत्युक्त्वाआचामेयुः ॥ ततोयजमानस्तान्यथाशक्त्यर्चयेत् ॥ ततआचार्यः कर्मसंकल्पपूर्वकंगृहादुत्तरत
ऐशानेवाकृतायांचतुर्दिक्षुहस्तमात्रावरायांचतुर्स्त्रिंशद्व्यंगुलप्रमाणात्रिभूमिकायांग्रहवेद्यांशुक्लव्रीहितंडुलैः सक
र्णिकमष्टदलमंबुजमुल्लिख्यकर्णिकायांदलेषुचवर्तुलादिग्रहपीठानितत्तद्वर्णकाक्षतैर्बाणाकारं ॥ उत्तरदले
पीताक्षतैर्दीर्घचतुरस्रं ॥ पूर्वदलेशुक्लाक्षतैःपंचकोणं ॥ पश्चिमदलेकृष्णाक्षतैश्चापाकारं ॥ नैर्ऋत्यदले

कृष्णाक्षतैःशूर्पाकारं ॥ वायव्यदलेचित्राक्षतैर्ध्वजाकारमितिं ॥ ततउदीच्यांरंगवल्लिकारंजितपद्मोपरिधृ
तधान्यपीठेनवमव्रणंकलशंतैजसंमृन्मयंवानुलिप्तमलंकृतंशुभमभिषेककुंभंनिधाय ॥ इमंमेगंगेइत्यस्य
सिंधुक्षित्प्रैयमेधोनदीस्तुतिर्जगती ॥ ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्
न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ अनेनपुण्यजलेनपूरयित्वा ॥ नवसूत्रेणवस्त्रयुग्मेनचावे
ष्ट्यहयगजवल्मीकन्हदगोष्ठराजद्वारचतुष्पथमृदः ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहरमे
पापंयन्मयादुष्कृतंकृतं ॥ इतिकुंभेनिक्षिप्य ॥ रुवतीभीमइत्यस्यवैश्वामित्रोरेणुःपवमानसोमोजगती ॥
ॐ रुवतिंभीमोवृषभस्तविष्ययाशृंगेशिशानोहरिणीविचक्षणः ॥ आयोनिंसोमःसुकृतंनिषीदतिगव्ययी
त्वग्भवतिनिर्णिगव्ययीं ॥ १ ॥ अनेनन्यग्रोधाश्वत्थप्लक्षजंबूचूतवृक्षत्वचः ॥ प्रवोयज्ञेष्वित्यस्यवसिष्ठोवि
श्वेदेवास्त्रिष्टुप् ॥ ॐप्रवोयज्ञेषुदेवयंतोअर्चन्द्यावानमोभिःपृथिवीइषध्यै ॥ येषांब्रह्माण्यसमानिविप्राविष्वग्वियंतिवनिनोनशाखाः ॥ अनेनतेषांपल्लवान्निक्षिप्य ॥ आप्यायस्वेत्यस्यराहूगणोगौतमःसोमोगायत्री॥
ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ अनेनगोक्षीरं ॥ दधिक्राव्णइत्यस्यगौ
तमोवामदेवोदधिक्रावानुष्टुप् ॥ ॐदधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः॥सुरभिनोमुखाकरत्प्रणआयूं
षितारिषत् ॥ अनेनदधि ॥ ॐ शुक्रमसिज्योतिरसितेजोसि ॥ इतिघृतं ॥ गंधद्वारामित्यस्यांनंदःश्रीरनुष्टु



प् ॥ ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपव्हयेश्रियं ॥ अनेनगोमयं ॥
गायत्र्याविश्वामित्रःसवितागायत्री ॥ तत्सवि० अनयागोमूत्रंचनिक्षिप्य ॥ साहिरत्नानीत्यस्यश्वावाश्वःस
वितागायत्री ॥ ॐसाहिरत्नानिदाशुषेसुवातिसविताभगः ॥ तंभागंचित्रमीमहे ॥ अनेननवरत्नानिहीरक
मौक्तिकपद्मरागनीलमरकतगोमेदपुष्परागवैदूर्यप्रवालाख्यानि ॥ याओषधीरित्यस्याथर्वणोभिषगोषधयोर
नुष्टुप् ॥ ॐयाऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणामहंशतंधामानिसप्तच ॥ अनेनशतौष
धीनि ॥ तदभावेदशमूलानितदभावेसुवर्णंवा ॥ गंधद्वारामितिगंधंनिक्षिप्य ॥ ॐगंधद्वारांदुराधर्षांनित्यपु
ष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपव्हयेश्रियं ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयां
तुममशान्त्यर्थंदुरितक्षयकारकाः ॥ गंगेयचमुनेचैवगोदावरिसरस्वती ॥ नर्मदेसिंधुकावेरीजलेस्मिन्संन्नि
धंकुरु ॥ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणु
ह्यासुषोमया ॥ इत्येतैर्मंत्रैः ॥ आपोहिष्ठेतिनवर्चस्यसूक्तस्यांबरीषःसिंधुद्वीपआपोगायत्री ॥ पंचमीवर्ध
माना ॥ सप्तमीप्रतिष्ठा ॥ अंत्येद्वेअनुष्टुभौ ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्ष
से ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माऽअरंगमामवोयस्यक्षयायजिन्व
थ ॥ आपोजनयथाचनः ॥ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ ईशानावार्याणां

क्षयंतीश्चर्षणीनां॥अपोयाचामिभेषजं ॥अप्सुमेसोमोऽअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवं ॥
आपःपृणीतभेषजंवरूथंतन्वे३मम ॥ ज्योक्चसूर्यंदृशे ॥ इदमापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाहमभिदु
द्रोहयद्वाशेपउतानृतं ॥ आपोऽअद्यान्वचारिषंरसेनसमगस्महि ॥ पयस्वानग्नआगहितंमासंसृजवर्चसा ॥
अनेनसूक्तेनउदकुंभंपूरयेत् ॥ नहितेक्षत्रमित्याद्येकविंशत्यृचामाजीगर्तिःशुनःशेपोवरुणआद्यादशत्रिष्टु
भः ॥ शिष्टागायत्र्याभिः ॥ स्वादिष्ठयेतिदशर्चस्यसूक्तस्यमधुच्छंदाःपवमानसोमोगायत्री ॥ तत्रसूक्ता
नि ॥ ॐनहितेक्षत्रंनसहोनमन्युंवयश्चनामीपतयंतऽआपुः ॥ नेमाऽआपोऽअनिमिषंचरंतीर्नयेवातस्य
प्रमिनंत्यभ्वं ॥ अबुध्नेराजावरुणोवनस्योर्ध्वंस्तूपंददतेपूतदक्षः ॥ नीचीनास्थुरुपरिबुध्नएषामस्मेऽअंतर्नि
हिताःकेतवस्युः ॥ उरुंहिराजावरुणश्चकारसूर्यायपंथामन्वेतवाउ ॥ अपदेपादाप्रतिधातवेकरुतापवक्ता
हृदयाविधश्चित् ॥ शतंतेराजन्भिषजःसहस्रमुर्वीगभीरासुमतिष्टेऽअस्तु ॥ बाधस्वदूरेनिर्ऋतिंपराचैः
कृतंचिदेनःप्रमुमुग्ध्यस्मत् ॥ अमीयऋक्षानिहितासउच्चानक्तंददृश्रेकुहचिद्दिवेयुः ॥ अदब्धानिवरु
णस्यव्रतानिविचाकशच्चंद्रमानक्तमेति ॥ १ ॥ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥
अहेळमानोवरुणेहबोध्युरुशंसमानऽआयुःप्रमोषीः ॥ तदिन्नक्तंतद्दिवामह्यमाहुस्तदयंकेतोहृदऽआविचष्टे॥
शुनःशेपोयमह्वद्गृभीतःसोऽअस्मान्राजावरुणोमुमोक्तु ॥ शुनःशेपोह्यह्वद्गृभीतस्त्रिष्वादित्यंद्रुपदेषुबद्धः ॥



अवैनंराजावरुणःससृज्याद्विद्वांअदब्धोविमुमोक्तुपाशान् ॥ अवतेहेळोवरुणनमोभिरवयज्ञेभिरीमहेहवि
र्भिः ॥ क्षयन्नस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि ॥ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्र
थाय ॥ अथावयमादित्यव्रतेतवानागसोऽअदितयेस्याम ॥ यच्चिद्धितेविशोयथाप्रदेववरुणव्रतं ॥ मिनी
मसिद्यविद्यवि ॥ मानोवधायहत्नवेजिहीळानस्यरीरधः ॥ माहृणानस्यमन्यवे ॥ विमृळीकायतेमनो
रथीरश्वंनसंदितं ॥ गीर्भिर्वरुणसीमहि ॥ पराहिमेविमन्यवःपतंतिवस्यऽइष्टये॥वयोनवसतीरुप ॥ कदाक्ष
त्रश्रियंनरमावरुणंकरामहे ॥ मृळीकायोरुचक्षसं ॥ ३ ॥ तदित्समानमाशातेवेनंतानप्रयुच्छतः ॥ धृत
व्रतायदाशुषे ॥ वेदायोवीनांपदमंतरिक्षेणपततां॥वेदनावःसमुद्रियः ॥ वेदमासोधृतव्रतोद्वादशप्रजावतः ॥
वेदायऽउपजायते ॥ वेदवातस्यवर्तनिमुरोर्ऋष्वस्यबृहतः ॥ वेदायेऽअध्यासते ॥ निषसादधृतव्रतोवरुणः
पस्त्या३स्वा ॥ साम्राज्यायसुक्रतुः ॥ ४ ॥ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इंद्रायपातवेसुतः ॥
रक्षोहाविश्वचर्षणिरभियोनिमयोहतं ॥ द्रुणासधस्थमासदत् ॥ वरिवोधातमोभवमंहिष्ठोवृत्रहन्तमः ॥ प
र्षिराधोमघोनां ॥ अभ्यर्षमहानांदेवानांवीतिमंधसा ॥ अभिवाजमुतश्रवः ॥ त्वामच्छाचरामसितादिदर्थं
दिवेदिवे ॥ इंदोत्वेनऽआशसः ॥ १ ॥ पुनातितेपरिस्रुतंसोमंसूर्यस्यदुहिता ॥ वारेणशश्वतातना ॥ तमीम्

ण्वीः समर्यआगृभ्णंतियोषणोदश ॥ स्वसारः पार्येदिवि ॥ तमींहिन्वंत्यग्रुवोधमंतिबाकुरंदृतिं ॥ त्रिधातु
वारणंमधु ॥ अभी३ ममघ्न्याऽउतश्रीणंतिधेनवः शिशुं ॥ सोमऽभिंद्राय पातवे ॥ अस्येदिंद्रोमदेष्वाविश्वावृ
त्राणिजिघ्नते ॥ शूरोमघाचमंहते ॥ २ ॥ अनेनसूक्तेनचतंकुंभमभिमंत्रयेत् ॥ यद्वाकलशाभिमंत्रणेऽन्यं
मंत्रविदंयुंजीत ॥ ततःकर्मसंकल्प्यविधिवत्स्वस्तिवाचनंकृत्वाग्रहवेदिपद्मपीठेयथास्थानंयथामुखींग्रह
प्रतिमांस्थापयित्वातद्दक्षिणवामपार्श्वयोरधिदेवताप्रत्यधिदेवतेतदभिमुख्यौस्थापयेत् ॥ तदभावेपुष्पाक्षता
दिष्वावाहयेत् ॥ तत्रायंप्रकारः ॥ अद्येत्यादि० ॥ ग्रहपीठदेवतास्था० क० ॥ प्रणवस्यपरब्रह्मऋ
षिः ॥ परमात्मादेवता ॥ दैवीगायत्रीछंदः ॥ व्यस्तसमस्तव्याहृतीनामत्रिभृगुभरद्वाजप्रजापतयऋषयः ॥
अग्निवायुसूर्यप्रजापतयोदेवताःगायत्र्युष्णिगनुष्टुप्बृहत्यश्छंदांसि ॥ आदित्याद्यावाह० गः ॥ ॐ भूरादि
त्यमावाहयामि ॥ ॐ भुवरा० मि ॥ ॐ स्वरा० मि ॐ भूर्भुवःस्वरा० मि ॥ आकृष्णेनेत्यस्यहिरण्य
स्तूपःसवितात्रिष्टुप् ॥ ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोया
तिभुवनानिपश्यन् ॥ ऋचमुच्चार्य ॥ भगवन्नादित्यग्रहाधिपतेकाश्यपगोत्रकलिंगदेशेश्वरजपापुष्पोपमां
गद्युतेद्विभुजपद्माभयहस्तसिंदूरवर्णारक्तमाल्यानुलेपनज्वलन्माणिक्यखचितसर्वांगाभरणभास्करतेजोनि
धेत्रिलोकप्रकाशकत्रिदेवतामयमूर्तेनमस्तेसन्नद्धारुणध्वजपताकोपशोभितेनसप्ताश्वरथवाहनेनमेरुंप्रदक्षि



णीकुर्वन्नागच्छाग्निरुद्राभ्यांसहपद्मकर्णिकायांताम्रप्रतिमांप्राङ्मुखींवर्तुलपीठेधितिष्ठपूजार्थंत्वामावा० मी
त्यादि० आवाहयेत् ॥ तद्दक्षिणपार्श्वे ॥ ॐ भूरादित्याधिदेवतामग्निमावा० ॥ ॐ स्वरादित्याधिदेवतामग्नि० ॥
ॐ भूर्भुवःस्वरादित्याधिदेवतामाग्नि० ॥ अग्निंदूतमित्यस्यकाण्वोमेधातिथिरग्निर्गायत्री ॥ ॐ अग्निंदूतंवृ
णीमहेहोतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥ इमंमंत्रमुच्चार्यपिंगभूतश्मश्रुकेशंपिंगाक्षंत्रिनयनंअरुण
वर्णंछागस्थंसाक्षसूत्रंसप्तार्चिषंशक्तिधरंवरदहस्तद्वयमादित्याधिदेवतामाग्निमावा० ॥ तद्वामपार्श्वे ॥ ॐ
भूरादित्यप्रत्यधिदैवतंरुद्रमा० ॥ ॐ भुवरादित्याधिप्रत्यधि० रु० ॥ ॐ स्वरादित्यप्र० रु० ॥ ॐ भू
र्भुवःस्वरादि० प्र० रु० ॥ त्र्यंबकमित्यस्यवसिष्ठोरुद्रोनुष्टुप् ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥
उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ इमंमंत्रमुच्चार्यत्रिलोचनंपंचवक्त्रंवृषारूढंकपालशूलखट्वांगधा
रिणंचंद्रमौलिं सदाशिवमादित्यप्रत्यधिदैवतंरुद्रमा० ॥ ततःआग्नेयदले ॥ ॐ भूःसोममावा० ॥ ॐ भु
वःसोममावा० ॥ ॐ स्वःसोममावा० ॥ ॐ भूर्भुवःस्वःसोममावा० ॥ आप्यायस्वेत्यस्यगौतमःसोमोगा
यत्री ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ इमंमंत्रमुच्चार्यभगवन्सोम
द्विजाधिपतेसुधामयशरीरात्रिगोत्रयमुनादेशेश्वरगोक्षीरधवलांगकांतेद्विभुजगदावरदानांकितशुक्लांबरमाल्या
नुलेपनसर्वांगामुक्तमौक्तिकाभरणरमणीयसमस्तलोकाप्यायकदेवतास्वाद्यमूर्तेनमस्तेसन्नद्धधवलध्वजपता

कोपशोभितेनदशाश्वेताश्वरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छाद्रिरुमयाचसहपश्चान्नैऋदलमध्येस्फटिकप्र
तिमांप्रत्यङ्मुखींचतुरस्रपीठेधितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वेपूर्ववत् ॥ व्यस्तसमस्तव्याहृ
त्युच्चारणानंतरंअप्सुमइत्यस्यासिंधुद्वीपआपोगायत्री ॥ ॐ अप्सुमेसोमोऽअब्रवीदंतर्विश्वानिभेषजा ॥ अ
ग्निंचविश्वशंभुवं ॥ इमंमंत्रमुच्चार्यस्त्रीरूपधारिणीःश्वेतवर्णामकरवाहनाः पाशकलशधारिणीर्मुक्ताभरणभू
षिताः सोमाधिदेवताअपआवा०॥ तद्वामपार्श्वेव्यस्तसमस्तव्याहृत्युच्चारणानंतरं ॥ गौरीर्मिमायेत्यस्यदीर्घ
तमाउमाजगती ॥ ॐ गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवु
षीसहस्राक्षरापरमेव्योमन् ॥ इमंमंत्रमुच्चार्यअक्षसूत्रकमलदर्पणकमंडलुधारिणींत्रिदशपूजितांसोमप्रत्यधि
देवतामुमामावाहयामि ॥ दक्षिणदलेपूर्ववत्प्रणवव्याहृत्युच्चारणानंतरं ॥ अग्निर्मूर्धेत्यस्यविरूपोंगारकोगा
यत्री ॥ ॐ अग्निर्मूर्धादिवःककुत्पतिःपृथिव्याअयं ॥ अपांरेतांसिजिन्वति ॥ इमंमंत्रमुच्चार्यभगवन्नंगारका
ग्न्याकृतेभारद्वाजगोत्रावंतिदेशेश्वरज्वालापुंजोपमांगयुतेचतुर्भुजशक्तिशूलगदाखट्वांगधारिन्रक्तांबरमा
ल्यानुलेपनप्रवालाभरणभूषितसर्वांगदुरालोकदीप्तेनमस्तेसन्नद्धरक्तध्वजपताकोपशोभितेनरक्तमेषरथवाह
नेनमेरुंप्रदक्षिणीकुर्वन्नागच्छभूमिस्कंदाभ्यांसहप्रदक्षिणदलमध्येरक्तचंदनप्रतिमांदक्षिणामुखींत्रिकोणपीठे
धितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वेव्याहृत्युच्चारणानंतरंस्योनापृथिवीत्यस्यकाण्वोमेधातिथिःपृथि

वीगायत्री भूम्यावाहनेविनियोगः ॥ ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ इमं
मंत्रमुच्चार्यशुक्लवर्णांदिव्याभरणभूषितांचतुर्भुजांसौम्यवपुषाचंडांशुसदृशांबरांरत्नपात्रसस्यपात्रौषधिपात्रप
द्मोपेतकरांचतुर्दिग्नागपृष्ठगतांअंगारकाधिदेवतांभूमिंआवाहयामि ॥ तद्वामपार्श्वेव्याहृत्युच्चारणानंतरं ॥
कुमारश्चित्पितरमित्यस्यगृत्समदस्कंदस्त्रिष्टुप् ॥ स्कंदावाहनेविनियोगः ॥ ॐ कुमारश्चित्पितरंवंदमानंप्र
तिनानामरुद्रोपयंतं ॥ भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे ॥ इमंमंत्रमुच्चार्यषण्मुखंशिखंड
कविभूषणंरक्तांबरधरंमयूरवाहनंकुक्कुटघंटापताकाशक्त्युपेतंचतुर्भुजमंगारकप्रत्यधिदेवतांस्कंदमावाहया
मि ॥ ततःप्रागुत्तरदलेपूर्ववव्याहृत्युच्चारणानंतरं ॥ उद्बुध्यध्वमित्यस्यबुधःसौम्यस्त्रिष्टुप् ॥ बुधावाहनेवि
नियोगः ॥ ॐ उद्बुध्यध्वंसमनसःसखायःसमग्निमिंध्वंबहवःसनीळाः ॥ दधिक्रामग्निमुषसंचदेवीमिंद्रावतो
वसेनिव्ह्येवः ॥ इमंमंत्रमुच्चार्यभगवन्सौम्यसौम्याकृतेसर्वज्ञानमयात्रिगोत्रमगधदेशेश्वरकुंकुमवर्णागयुते
चतुर्भुजखड्गखेटकगदावरदानांकितपीतांबरमाल्यानुलेपनमरकताभरणालंकृतसर्वांगविबुधपतेनमस्तेस
न्नद्धपीतध्वजपताकोपशोभितेनचतुःसिंहरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छविष्णुपुरुषाभ्यांसहपश्चैशान
दलमध्येसुवर्णप्रतिमामुदङ्मुखींबाणाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि ॥ ततस्तत्पार्श्वयोरधिदेवत
योरावाहनं ॥ व्याहृतिमुक्त्वाइदंविष्णुरित्यस्यकाण्वोमेधातिथिर्विष्णुर्गायत्री ॥ सहस्रशीर्षेत्यस्यनारायणः

पुरुषोनुष्टुप् ॥ ॐ इदंविष्णुर्विचंक्रमेत्रेधानिदंधेपदं ॥ समूंळ्हमस्यपांसुरे ॥ ॐ सहस्रंशीर्षापुरुषःसहस्रा
क्षःसहस्रंपात् ॥ सभूमिंविश्वतोंवृत्वात्यतिष्ठद्दशांगुलं ॥ इमौमंत्रावुच्चार्य ॥ कौमोदकीपद्मशंखचक्रोपेतांचतु
र्भुजांसौम्याधिदेवतांविष्णुमावाहयामि ॥प्रत्यधिदेवतांपुरुषमावाहयामि॥तदुत्तरदलेपूर्ववच्चाल्हतिमंत्रं ॥बृह
स्पतेअतीत्यस्यगृत्समदोबृहस्पतिस्त्रिष्टुप्॥ॐबृहस्पतेअतियदर्यो॑अर्हा॑द्युमाद्विभातिक्रतुमज्जनेषु॥यद्दीदयच्छव
सऋतप्रजाततदस्मासुद्रविणंधेहिचित्रं ॥इमंमंत्रमुच्चार्यभगवन्बृहस्पतेसमस्तदेवताचार्यांगिरसगोत्रसिंधुदेशे
श्वरदीप्तसुवर्णसदृशांगदीप्तचतुर्भुजदंडकमंडल्वक्षसूत्रवरदानांकितपीतांबरमाल्यानुलेपनपुष्परागमयाभर
णरमणीयसमस्तविद्याधिपतेनमस्तेसन्नद्धपीतध्वजपताकोपशोभितेनपीताश्वरथवाहनेनमेरुंप्रदक्षिणीकु
र्वन्नागच्छेंद्रब्रह्मभ्यांसहपद्मोत्तरदलमध्येसुवर्णप्रतिमामुदङ्मुखींदीर्घचतुरस्रपीठेधितिष्ठपूजार्थंत्वामावाह
यामि ॥ तद्दक्षिणपार्श्वेव्याल्हत्युच्चारणानंतरं ॥ इंद्रश्रेष्ठानीत्यस्यगृत्समदइंद्रस्त्रिष्टुप् ॥ ॐ इंद्रश्रेष्ठानिद्रविणा
निधेहिचित्तिंदक्षस्यसुभगत्वमस्मे ॥ पोषंरयीणामरिष्टिंतनूनांस्वाद्मानंवाचःसुदिनत्वमन्हां॥ इमंमंत्रमुच्चार्य
चतुर्दंतगजारूढंवज्रांकुशधरंशचीपतिंनानाभरणभूषितंबृहस्पत्यधिदैवतमिंद्रमावाहयामि ॥ वामपार्श्वेव्या
ल्हत्युच्चारणानंतरं ॥ ब्रह्मणातेब्रह्मयुजेत्यस्यविश्वामित्रोब्रह्मात्रिष्टुप् ॥ ॐ ब्रह्मणातेब्रह्मयुजायुनज्मिहरीसखा





यासधमादआशू ॥ स्थिरंरथंसुखमिंद्राधितिष्ठन्प्रजानन्विद्वांउपयाहिसोमं ॥ इमंमंत्रमुच्चार्यपद्मासनस्थंजटि
लंचतुर्मुखमक्षमालास्रुवपुस्तककमंडलुधारिणंकृष्णाजिनवाससंपार्श्वस्थितहंसंबृहस्पतिप्रत्यधिदेवतांब्रह्मा
णमावाहयामि ॥ प्राग्दलेपूर्ववद्व्याल्हत्यनंतरं ॥शुक्रंतेअन्यदित्यस्यभरद्वाजःशुक्रस्त्रिष्टुप् ॥ ॐ शुक्रंतेअन्यद्य
जतंतेऽअन्यद्विषुरूपेअहनीद्यौरिवासि ॥ विश्वाहिमायाऽअवसिस्वधावोभद्रातेपूषन्निहरातिरस्तु ॥ इमंमंत्र
मुच्चार्य ॥ भगवन्भार्गवसमस्तदैत्यगुरोभार्गवगोत्रभोजकटदेशेश्वररजतोज्ज्वलांगकांतेचतुर्भुजदंडकमंड
ल्वक्षसूत्रवरदानांकितशुक्लांबरमाल्यानुलेपनवज्राभरणभूषितसर्वांगसमस्तनीतिशास्त्रनिपुणमतेनमस्तेसंन
द्धशुक्लध्वजपताकोपशोभितेनशुक्लाश्वसहितेनरथेनमेरुंप्रदाक्षिणीकुर्वन्नागच्छेंद्राणींद्राभ्यांसहपद्मपूर्वदलम
ध्येरजतप्रतिमांप्राङ्मुखींपंचकोणपीठेधितिष्ठपूजार्थंत्वामावाहयामि॥तद्दक्षिणपार्श्वेव्याल्हत्युच्चा० तरं ॥इंद्रा
णीमास्वित्यस्यवृषाकपिरिंद्राणीपंक्तिः ॥ ॐ इंद्राणीमासुनारिषुसुभगामहमश्रवं ॥ नह्यस्याऽअपरंचनजर
सामरंतेपतिर्विश्वस्मादिंद्रऽउत्तरः ॥ इमंमंत्रमुच्चार्य ॥ संतानमंजरीवरदानद्विभुजांशुक्राधिदेवतामिंद्राणी
मावा० ॥ वामपार्श्वेपूर्वव० तरं ॥ इंद्रामिद्देवतातयइत्यस्यमेधातिथिरिंद्रःप्रगाथोबृहती ॥ ॐ इंद्रमिद्देवता
तयइंद्रंप्रयत्यध्वरे ॥ इंद्रंसमीकेवनिनोहवामहइंद्रंधनस्यसातये ॥ इमंमंत्रमुच्चार्यचतुर्दंतगजारूढंवज्रांकुशध
रंशचीपतिंनानाभरणभूषितंभार्गवप्रत्यधिदेवतामिंद्रमावाहयामि ॥ पश्चिमदलेपूर्ववद्व्याल्हत्यनंतरं ॥ शम

ग्र० ग्र०

॥२३०॥

ग्निरित्यस्यरिरिंबिठिःशनैश्चरउष्णिक् ॥ ॐ शमग्निरग्निभिःकरच्छंनःस्तपतुसूर्यः ॥ शंवातोवात्वरपाऽअप स्त्रिधः ॥ इमंमंत्रमुच्चार्य भगवन्शनैश्चरभास्करतनयकाश्यपगोत्रसौराष्ट्रदेशेश्वरकज्जलनीलांगकांतेचतुर्भुजचापतूणीरकृपाणाभयांकितनीलांबरमाल्यानुलेपननीलरत्नभूषणालंकृतसर्वांगसमस्तभुवनभीषणामर्षमूर्तेनमस्तेसंनद्धनीलध्वजपताकोपशोभितेननीलगृध्ररथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छप्रजापतियमाभ्यांसहपश्चिमदलमध्येकालायसप्रतिमांप्रत्यङ्मुखीं चापाकारपीठेधितिष्ठपूजार्थंत्वामावाहया० ॥ तद्दक्षिणपार्श्वेपूर्वव० त्र ॥ प्रजापतेनत्वदित्यस्यहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ ॐप्रजापतेनत्वदेतांन्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तंनोऽअस्तुवयंस्यामपतयोरयीणां ॥ इमंमंत्रमुच्चार्य यज्ञोपवीतिनंहंसस्थमेकवक्त्रमक्षमालास्रुवपुस्तककमंडलुसहितंचतुर्भुजंशनैश्चराधिदेवतांप्रजापतिमावा० ॥ वामपार्श्वेपूर्वव० तरं ॥ यमायसोममित्यस्ययमोयमोनुष्टुप् ॥ ॐयमायसोमंसुनुतयमायजुहुताहविः ॥ यमंहयज्ञोगच्छत्यग्निदूतोऽअरंकृतः ॥ इमंमंत्रमुच्चार्य ॥ ईषत्पीनंदंडहस्तंरक्तदृशंपाशधरंकृष्णवर्णमहिषारूढंसर्वाभरणभूषितंशनैश्चरप्रत्यधिदेवतांयममावा० ॥ प्रत्यग्दक्षिणदलाग्रेपूर्वव० नंतरंकयानश्चित्रइत्यस्यवामदेवोराहुर्गायत्री ॥ ॐकयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ इमंमंत्रमुच्चार्य ॥ भगवन्राहोरविसोममर्दनसिंहिकानंदनपैठीणसगोत्रबर्बरदेशेश्वरकालमेघद्युतेव्याघ्रवदन

ग्र० प०

॥२३०॥

चतुर्भुजखड्गचर्मशूलवरदानांकितकृष्णांबरमाल्यानुलेपनगोमेदकाभरणभूषितसर्वांगशौर्यनिधेनमस्तेसन्नद्धकृष्णध्वजपताकोपशोभितेनकृष्णसिंहरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छसर्पकालाभ्यांसहपश्चनैर्ऋत्यदलमध्येसीसकप्रतिमांदक्षिणामुखींशूर्पाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वे ॥ पूर्ववद्दयाहुतीरुच्चार्य ॥ आयंगौरितिमंत्रस्यसार्पराज्ञीसर्पागायत्री॥ ॐआयंगौःपृश्निरक्रमीदसदन्मातरंपुरः॥ पितरंचप्रयन्त्स्वः ॥ इमंमंत्रमुक्त्वाअक्षसूत्रधरान्कुंडलिकाकारपुच्छयुक्तानैकभोगान्भीषणान्राह्वधिदेवताःसर्पानावाह० ॥ वामपार्श्वेपूर्ववद्दयाहुतीरुक्त्वा ॥ परंमृत्योरित्यस्यसंकुशिकोमृत्युस्त्रिष्टुप् ॥ ॐपरंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान् ॥ इमंमंत्रमुच्चार्य ॥ करालवदनंनीलांगभीषणंपाशदंडधरंसर्पवृश्चिकरोमाणंराहुप्रत्यधिदेवतांकालमावा० ॥ प्रत्युगुत्तरदलेपूर्ववद्दयाहुतीरुक्त्वा ॥ केतुंकृण्वन्नित्यस्यमधुच्छंदाःकेतुर्गायत्री ॥ ॐकेतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजायथाः ॥ इमंमंत्रमुच्चार्य ॥ भगवन्केतोकामरूपजैमिनीगोत्रमध्यदेशेश्वरधूम्रवर्णध्वजाकृतद्विभुजगदावरदानांकितचित्रांबरमाल्यानुलेपनवैदूर्यमयाभरणभूषितसर्वांगचित्रशक्तेनमस्तेसन्नद्धचित्रध्वजपताकोपशोभितेनचित्रकपोतरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छब्रह्मचित्रगुप्ताभ्यांसहवायव्यदलमध्येकांस्यप्रतिमांदक्षिणामुखींध्वजाकारपीठेधितिष्ठपूजार्थंत्वामावा० ॥ तद्दक्षिणपार्श्वेपूर्वव

द्ध्याद्ध्यनंतरं ब्रह्मजज्ञानमित्यस्यवामदेवोब्रह्मात्रिष्टुप् ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेन आवः ॥ सबुध्न्याउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ इमंमंत्रमुच्चार्य पद्मासनस्थंजटिलंचतुर्मुखमक्षमालास्रुवपुस्तककमंडलुधरंकृष्णाजिनवाससंपार्श्वस्थितहंसंकेत्वधिदेवतांब्रह्माणमावाह॰ ॥ वामपार्श्वेपूर्व॰ नंतरं ॥ सचित्रचित्रमित्यस्यभरद्वाजश्चित्रगुप्तास्त्रिष्टुप् ॥ ॐ सचित्रचित्रंचितयंतमस्मेचित्रक्षत्रचित्रतमंवयोधां॥चंद्रंरयिंपुरुवीरंबृहंतंचंद्रचंद्राभिर्गृणतेयुवस्व ॥ इमंमंत्रमुच्चार्य॥उदीच्यवेषंसौम्यदर्शनंलेखनीपत्रोपेतंद्विभुजंकेतुंप्रत्यधिदेवतांचित्रगुप्तमावा॰॥ अथकर्मसाद्गुण्यकरदेवतावाहनंशुक्लतंडुलपीठेषुकुर्यात् ॥ शनेर्वामप्रदेशेऽव्याद्ध्यनंतरं ॥ आतूनइंद्रेत्यस्यकाण्वःकुसीदोविनायकोगायत्री ॥ ॐआतूनइंद्रक्षुमंतंचित्रंग्राभंसंगृभाय ॥ महाहस्तीदक्षिणेन ॥ इमंमंत्रमुत्क्का ॥ चतुर्भुजंत्रिनेत्रंगजाननंनागयज्ञोपवीतिनंचंद्रधरंदंताक्षमालापरशुमोदकोपेतंविनायकमा॰ ॥ तद्दक्षिणतोऽव्याद्ध्यनंतरं ॥ जातवेदसइत्यस्यकश्यपोदुर्गात्रिष्टुप् ॥ ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ इमंमंत्रमुत्क्का ॥ शक्तिबाणशूलखड्ग वक्रचंद्रबिंबखेटकढालपरशुटंकोपेतदशभुजांसिंहारूढांदुर्गाख्यांदैत्यासुहारिणींदुर्गामावा॰ ॥ तद्दक्षिणतोऽव्याद्ध्यनंतरं ॥ क्षेत्रस्यपतिनेत्यस्यक्षेत्राधिप



तिरनुष्टुप् ॥ॐ क्षेत्रस्यपतिनावयंहितेनेवजयामसि ॥ गामश्वंपोषयित्न्वासनोमृळातीदृशे ॥ इमंमंत्रमुत्क्का ॥ श्यामवर्णंत्रिलोचनमूर्ध्वकेशंसुदंष्ट्रंभृकुटीकुटिलाननंनूपुरालंकृतांघ्रिंसर्पमेखलायुतसर्वांगमतिक्रुद्धंक्षुद्रघंटावबद्धगुल्फावलंबिकरोटिकामालाधारिणमुरगकौपीनंचंद्रमौलिनंदक्षिणहस्तैःशूलव्यालखड्गडुंडुभीन्दधानंवामहस्तैःकपालघंटाचर्मचापान्दधानंभीमंदिग्वाससमसितद्युतिंक्षेत्रपालमावा॰ ॥ तद्दक्षिणतोऽव्याद्ध्यनंतरं ॥ क्राणाशिशुरित्यस्यात्रितोवायुरुष्णिक् ॥ ॐक्राणाशिशुर्महीनांहिन्वन्नृतस्यदीधितिं ॥ विश्वापरिप्रियाभुवदधद्विता ॥ धावद्धरिणपृष्ठगतंध्वजवरदानधारिणंधूम्रवर्णवायुमावा॰ ॥ तद्दक्षिणतोऽव्याद्ध्यनंतरं ॥ आदित्प्रत्नेत्यस्यवत्सोंतरिक्षंगायत्री ॥ ॐआदित्प्रत्नस्यरेतसोज्योतिष्पश्यंतिवासरं ॥ परोयदिध्यतेदिवा ॥ इमंमंत्रमुत्क्का ॥ नीलोत्पलाभंनीलांबरधारिणंचंद्रार्कोपेतंद्विभुजंषंडमाकाशमावा॰ ॥ तद्दक्षिणतोऽव्याद्ध्यनंतरं ॥ अश्विनावर्तिरस्मदेत्यस्यराहूगणोऽश्विनावुष्णिक् ॥ ॐ अश्विनावर्तिरस्मदागोमद्दस्राहिरण्यवत् ॥ अर्वाग्रथंसमनसानियच्छतं ॥ इमंमंत्रमुच्चार्य ॥ प्रत्येकमोषधीपुस्तकोपेतदक्षिणवामहस्तावन्योन्यसंयुक्तदेहावेकस्यदक्षिणपार्श्वेपरस्यवामपार्श्वेरत्नभांडकरशुक्लांबरधारिनारीयुग्मोपेतौदेवभिषजावश्विनावावाहयामि ॥ ॥ अथक्रतुसंरक्षकदेवतावाहनं ॥ पूर्ववत्तंदुलपीठेषुकुर्यात् ॥ तच्चेत्थं ॥ तत्रप्राग्दलाग्रेपूर्ववद्ध्याद्ध्यतीरुत्क्का ॥ इंद्रंवइत्यस्यमधुच्छंदाइंद्रोगायत्री ॥ ॐइंद्रंवोविश्वतस्परिहवामहेजने

भ्यः अस्माकंमस्तुकेवलः ॥ इमंमंत्रमुक्त्वा ॥ स्वर्णवर्णसहस्राक्षंवज्रपाणिंशचीपतिमिंद्रमावा० ॥ आग्नेयदलेऽग्न्यात्दत्यनंतरं ॥ अग्निमीळइत्यस्यमधुच्छंदाअग्निर्गायत्री ॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ इमंमंत्रमुक्त्वा ॥ स्वर्णवर्णसप्तार्चिषंसप्तहस्तंशक्त्यन्नस्रुक्स्रुवतोमरव्यजनघृतपात्राणिदधानंस्वाहाप्रियंमेषवाहनंअग्निमावा० ॥ याम्यदलाग्रेऽग्न्यात्दतीरुक्त्वा ॥ यमायसोममित्यस्ययमोयमोनुष्टुप् ॥ ॐ यमायसोमंसुनुतयमायजुहुताहविः ॥ यमंहयज्ञोगच्छत्यग्निदूतोऽअरंकृतः ॥ इमंमंत्रमुक्त्वा ॥ रक्तवर्णदंडधरंमहिषवाहनंइळाप्रियंयममावा० ॥ नैर्ऋत्यदलाग्रे ॥ ऽग्न्यात्दत्यनंतरं ॥ मोषुणइत्यस्यघौरःकण्वोनिर्ऋतिर्गायत्री ॥ ॐ मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् ॥ पदीष्टतृष्णयासह ॥ इमंमंत्रमुक्त्वा ॥ नीलवर्णखड्गवर्मधरमूर्ध्वकेशंनरवाहनंकालिकाप्रियंनिर्ऋतिमावा० ॥ पश्चिमदलाग्रेऽग्न्यात्दत्यनंतरं ॥ उदुत्तमंमुमुग्धिनइत्यस्यशुनःशेपोवरुणोगायत्री ॥ ॐ उदुत्तमंमुमुग्धिनोविपाशंमध्यमंचृत ॥ अवाधमानिजीवसे ॥ इमंमंत्रमुक्त्वा ॥ रक्तभूषणंनागपाशधरंमकरवाहनंपद्मिनीपतिंवरुणमावा० ॥ वायव्यदलाग्रेऽग्न्यात्दत्यनंतरं ॥ तववायोइत्यस्यांगिरसोव्यश्वोवायुर्गायत्री ॥ ॐ तववायवृतस्पतेत्वष्टुर्जामातरद्भुत ॥ अवांस्यावृणीमहे ॥ इमंमंत्रमुक्त्वा ॥ श्यामवर्णहेमदंडधरंकृष्णमृगवाहनंजगत्प्राणरूपंमोहिनीप्रियंवायुमावा० ॥ उत्तरदलाग्रेऽग्न्यात्दत्यनंतरं ॥ त्वन्नःसोमइत्यस्यगौतमःसोमोगायत्री ॥ ॐ त्वन्नःसोमविश्वतोवयोधास्त्वंस्वर्विदाविशानृचक्षाः ॥ त्वंनइंदऊतिभिःसजोषाःपाहिपश्चातादुतवापुरस्तात् ॥ इमंमंत्रमुक्त्वा ॥ स्वर्णवर्णनिधीश्वरंकुंतपाणिमश्ववाहनंचित्रिणीप्रियंकुबेरमावा० ॥ ऐशान्यदलाग्रेऽग्न्यात्दत्यनंतरं ॥ कद्रुद्रायेत्यस्यकाण्वोरुद्रोगायत्री ॥ ॐ कद्रुद्रायप्रचेतसेमीळ्हुष्टमायतव्यसे ॥ वोचेमशंतमंहृदे ॥ इमंमंत्रमुक्त्वाशुद्धस्फटिकवर्णवरदाभयशूलाक्षसूत्रधरंवृषभवाहनंगौरीप्रियमीशानमावा० ॥ एवमेकचत्वारिंशद्देवताआवाह्यकलशेचवरुणंपूर्वोक्तवदावाह्यनमोंतैश्चतुर्थ्यंतैःस्वस्वनामभिःक्रमेणपूर्वोक्तद्रव्यैःपुष्पसमर्पणपर्यंतांग्रहदेवतापूजांकृत्वाकर्मसाद्गुण्यदेवताःक्रतुसंरक्षकदेवतावरुणंचमलयजगंधशतपत्रपुष्पैस्तथैवपूजयेत् ॥ अथहोमः ॥ सचसमिच्चर्वाज्यैःप्रतिद्रव्यंप्रतिग्रहंएकावराभिःसहस्रपराभिराहुतिभिर्निमित्तशक्त्यनुसारेणप्रधानदेवतादशांशेनपार्श्वदेवतानांतदर्धेनेतरेषांविंशांशेनस्वाहांतैर्नामभिस्तत्तन्मंत्रैर्वापाणिनैवसकृदवदानेनचरुहोमः ॥ ततःआचार्यःप्रत्यगग्नेरासीनःप्राणानायम्यपूर्ववत्संकल्प्याग्निमुखंवक्ष्यमाणप्रकारेणप्रागुक्तलक्षणेकुंडेस्थंडिलेवोपलेपाद्यग्निप्रतिष्ठांतंकृत्वाऋत्विगन्वारब्धःसमिद्द्वयमादायदेशकालौनिर्दिश्याद्यवक्ष्यमाणग्रहदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाप्रधानदेवतामादित्यमधिदेवतामग्निंप्रत्यधिदेवंरुद्रमर्कसमिच्चर्वाज्यैःप्रधानदेवंसोममधिदेवतामपःप्रत्यधिदेवतांगौरींपालाशसमिच्चर्वाज्यैःप्रधानदेवतामंगारकमधिदेवतांभूमिंप्रत्यधिदेवतां

स्कंदंखादिरसमिच्चर्वाज्यैःप्रधानदेवंबुधंअधिदेवांविष्णुंप्रत्यधिदेवंपुरुषंअपामार्गसमिच्चर्वाज्यैःप्रधानदेवंबृहस्पतिंअधिदेवंइंद्रंप्रत्यधिदेवंब्रह्माणंअश्वत्थसमिच्चर्वाज्यैःप्रधानदेवंशुक्रंअधिदेवामिंद्राणींप्रत्याधिदेवामिंद्रंऔदुंबरसमिच्चर्वाज्यैःप्रधानदेवंशनिमधिदेवंप्रजापतिंप्रत्याधिदेवंयमंशमीसमिच्चर्वाज्यैःप्रधानदेवंराहुंअधिदेवंसर्पंप्रत्यधिदेवंकालंदूर्वाचर्वाज्यैःप्रधानदेवंकेतुंअधिदेवंब्रह्माणंप्रत्याधिदेवंचित्रगुप्तंकुशचर्वाज्यैर्विवक्षितसंख्याकैः पार्श्वदेवताःप्रधानदशांशेनकर्मसाद्गुण्यदेवताःविनायकंदुर्गांक्षेत्रपालंवायुमाकाशमश्विनौक्रतुसंरक्षकदेवताः इंद्रमग्निंयमंनिर्ऋतिंवरुणंवायुंकुबेरमीशानंप्रधानाविंशांशेनअग्निंवायुंसूर्यंप्रजापतिंप्रभूततिलव्रीहिभिर्विवक्षितसंख्यया ॥ सूर्यमाज्येनत्रयोदशवारंअग्निंचतुस्त्रिंशद्वारंरुद्रंद्वात्रिंशद्वारंशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा ॥ भूर्भुवःस्वःस्वाहेत्यग्नावाधायप्रजापतयइदंननमेत्युद्देशत्यागौकुर्यात् ॥ ततोबर्हिःसन्नहनाद्याज्येदर्भाग्रद्वयप्रक्षेपांतंकृत्वालौकिकसिद्धान्नतिलव्रीहिभिःसहाज्यंत्रिःपर्यग्निकृत्वाज्यमुद्वास्यबर्हिषिनिधाय स्रुवस्रुक्संमार्जनंकृत्वाअन्नंपात्रांतरेपृथक्कृत्वाग्नावधिश्रित्यस्रुवेणाभिघार्योदगुद्वास्याज्याद्दक्षिणतोबर्हिष्यासाद्यप्रत्यभिघार्याग्न्यलंकरणाद्याज्यभागांतंकृत्वाक्रमेणादित्यादीशानांतेभ्यःएकत्वात्रिंशद्देवेभ्यआवाहनोक्तैस्तत्तन्मंत्रैःसमिच्चर्वाज्यैःप्रागुक्तसंख्याकाआहुतीर्जुहुयात् ॥ तत्रायंक्रमः ॥ समिधंमूलतोद्व्यंगुलंविहायमध्यमानामिकांगुष्ठैर्गृहीत्वाजुहुयात् ॥ चरुंग्राससमंपाणिनैवाज्यंस्रुवेणैवतदभावेश्वत्थपर्णेन ॥ ततोव्यस्तसमस्तव्याहृतिभिःप्रभूततिलव्रीहीन्पाणिनाहुत्वा ॥ सूर्यपावकरुद्रानाज्येनजुहुयान्मंत्रैः ॥ तेचमं



त्राः ॥ सूर्योनइतिपंचर्चस्यसूक्तस्यसूर्यपुत्रश्चक्षुःसूर्योगायत्री ॥ उदुत्यमितिमंत्रस्यकाण्वःप्रस्कण्वःसूर्योगायत्री ॥ नमोमित्रस्येतिमंत्रस्यसूर्यपुत्रोभितपाःसूर्योजगती ॥ चित्रंदेवानामितिमंत्रस्यांगिरसःकुत्सःसूर्यस्त्रिष्टुप्॥ उद्वेतिसुभगइतिपंचर्चस्यमैत्रावरुणोवसिष्ठःसूर्यस्त्रिष्टुप् ॥ त्वमग्नेप्रथमइत्यष्टादशर्चस्यसूक्तस्यांगिरसोहिरण्यस्तूपोग्निर्जगती ॥ अंत्याष्टमी ॥ षोळश्यास्त्रिष्टुभः ॥ त्वमग्नेद्युभिरितिषोळशर्चस्यसूक्तस्य गृत्समदोग्निर्जगती ॥ कद्रुद्रायेतिषळृचस्यसूक्तस्य घोरःकण्वोरुद्रोगायत्री ॥ तृतीयामैत्रावरुणी ॥ इमारुद्रायतवसइत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रोजगती ॥ अंत्येत्रिष्टुभौ ॥ आतेपितर्मरुतामितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् ॥ ॐसूर्योनोदिवस्पातुवातोऽअंतरिक्षात् ॥ अग्निर्नःपार्थिवेभ्यःस्वाहा ॥ १ ॥ ॐजोषासवितर्यस्यंतेहरःशतंसवां॰अर्हति ॥ पाहिनोदिद्युतःपतंत्याःस्वाहा ॥ २ ॥ ॐचक्षुर्नोदेवःसविताचक्षुर्नऽउतपर्वतः ॥ चक्षुर्धातादधातुनःस्वाहा ॥३॥ ॐचक्षुर्नोधेहिचक्षुषेचक्षुर्विख्यैतनूभ्यः ॥ संचेदंविचपश्येमस्वाहा ॥ ४ ॥ ॐसुसंदृशंत्वावयंप्रतिपश्येमसूर्य॥विपश्येमनृचक्षसःस्वाहा ॥ ५ ॥ ॐउदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यंस्वाहा ॥ ६ ॥ ॐनमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतंसपर्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसतस्वाहा ॥ ७ ॥ ॐचित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्चस्वाहा ॥ ८ ॥ ॐउद्वेति

सुभगोविश्वचक्षाःसाधारणःसूर्योमानुषाणां ॥ चक्षुर्मित्रस्यवरुणस्यदेवश्चर्मेवयःसमविव्यक्तमांसिस्वाहा ॥ ९ ॥ ॐउद्वेतिप्रसवीताजनानांमहान्केतुरर्णवःसूर्यस्य ॥ समानंचक्रंपर्याविवृत्सन्यदेतशोवहतिधूर्षुयुक्तःस्वाहा ॥ १० ॥ ॐविभ्राजमानउषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः ॥ एषमेदेवःसविताचच्छंदयःसमानंनप्रमिनातिधामस्वाहा ॥ ११ ॥ ॐदिवोरुक्मऽउरुचक्षाऽउदेतिदूरेऽअर्थस्तरणिर्भ्राजमानः ॥ नूनंजनाःसूर्येणप्रसूताऽअयन्नर्थानिकृणवन्नपांसिस्वाहा ॥ १२ ॥ ॐयत्राचक्रुरमृतागातुमस्मैश्येनोनदीयन्नन्वेतिपाथः ॥ उदुत्यद्दर्शतंवपुर्दिवऽएतिप्रतिह्वरेस्वाहा ॥ १३ ॥ ॐत्वमग्नेप्रथमोऽअंगिराऽऋषिर्देवोदेवानामभवःशिवःसखा ॥ तवव्रतेकवयोविद्मनापसोजायंतमरुतोभ्राजदृष्टयःस्वाहा ॥ १४ ॥ ॐत्वमग्नेप्रथमोऽअंगिरस्तमःकविर्देवानांपरिभूषसिव्रतं ॥ विभुर्विश्वस्मैभुवनायमेधिरोद्विमाताशयुःकतिधाचिदायवेस्वाहा ॥ १५ ॥ ॐत्वमग्नेप्रथमोमातरिश्वनऽआविर्भवसुक्रतूयाविवस्वते ॥ अरेजेतांरोदसीहोतृवूर्येसघ्नोर्भारमयजोमहोवसोस्वाहा ॥ १६ ॥ ॐत्वमग्नेमनवेद्यामवाशयःपुरूरवसेसुकृतेसुकृत्तरः ॥ श्वात्रेणयत्पित्रोर्मुच्यसेपर्यात्वापूर्वमनयन्नापरंपुनःस्वाहा ॥ १७ ॥ ॐत्वमग्नेवृषभःपुष्टिवर्धनऽउद्यतस्रुचेभवसिश्रवाय्यः ॥ यऽआहुतिंपरिवेदावषट्कृतिमेकायुरग्रेविशऽआविवासासिस्वाहा ॥ १८ ॥ ॐत्वमग्नेवृजिनवर्तनिंनरंसक्मन्पिपर्षिविदथेविचर्षणे ॥ यःशूरसातापरितक्म्येधनेदभ्रेभिश्चित्समृताहंसिभूयसःस्वाहा ॥ ॥ १९ ॥ ॐ त्वंतमग्नेअमृतत्वऽउत्तमेमर्तंदधासिश्रवसेदिवेदिवे ॥ यस्तातृषाणउभयायजन्मनेमयःकृणोषिप्रयआचसूरयेस्वाहा ॥ २० ॥ ॐ त्वंनोऽअग्नेसनयेधनानांयशसंकारुंकृणुहिस्तवानः ॥ ऋध्यामकर्मापसानवेनदेवैर्द्यावापृथिवीप्रावतंनःस्वाहा ॥ २१ ॥ ॐ त्वंनोऽअग्नेपित्रोरुपस्थऽआदेवोदेवेष्वनवद्यजागृविः ॥ तनूकृद्बोधिप्रमतिश्चकारवेत्वंकल्याणवसुविश्वमोपिषेस्वाहा ॥ २२ ॥ ॐत्वमग्नेप्रमतिस्त्वंपितासिनस्त्वंवयस्कृत्तवजामयोवयं ॥ संत्वारायःशतिनःसंसहस्रिणःसुवीरंयंतिव्रतपामदाभ्यस्वाहा ॥ २३ ॥ ॐ त्वामग्नेप्रथममायुमायवेदेवाऽअकृण्वन्नहुषस्यविश्पतिं ॥ इळामकृण्वन्मनुषस्यशासनींपितुर्यत्पुत्रोममकस्यजायतेस्वाहा ॥ २४ ॥ ॐ त्वंनोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषंरक्षमाणस्तवव्रतेस्वाहा ॥ २५ ॥ ॐ त्वमग्नेयज्यवेपायुरंतरोनिषंगायचतुरक्षइध्यसे ॥ योरातहव्योवृकायधायसेकीरेश्चिन्मंत्रंमनसावनोषितंस्वाहा ॥ २६ ॥ ॐ त्वमग्नऽउरुशंसायवाघतेस्पार्हंयद्रेक्णःपरमंवनोषितत् ॥ आध्रस्यचित्प्रमतिरुच्यसेपिताप्रपाकंशास्सिप्रदिशोविदुष्टरःस्वाहा ॥ २७ ॥ ॐ त्वमग्नेप्रयतदक्षिणंनरंवर्मेवस्यूतंप

रिपासिविश्ववत्तः ॥ स्वादुक्षद्मायोवसतौस्योनकृज्जीवयाजंयजंतेसोपमादिवःस्वाहा ॥ २८ ॥ इमामग्नेशरणिंमीमृषोनइममध्वानंयमगामदूरात् ॥ आपिःपिताप्रमतिःसोम्यानांभृमिरस्यृषिकृन्मर्त्यानांस्वाहा ॥ २९ ॥ ॐ मनुष्वदग्नेऽअंगिरस्वदंगिरोययातिवत्सदनेपूर्ववच्छुचे ॥ अच्छयाह्यावहादैव्यंजनमासादयबर्हिषियक्षिचप्रियंस्वाहा ॥ ३० ॥ ॐ एतेनाग्नेब्रह्मणावावृधस्वशक्तीवायत्तेचकृमाविदावा ॥ उतप्रणेष्यभिवस्योऽअस्मान्त्संनःसृजसुमत्यावाजवत्यास्वाहा ॥ ३१ ॥ ॐ त्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ॥ त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजायसेशुचिःस्वाहा ॥ ३२ ॥ ॐ तवाग्नेहोत्रंतवपोत्रमृत्वियंतवनेष्ट्रंत्वमग्निदृतायतः ॥ तवप्रशास्त्रंतमध्वरीयसिब्रह्माचासिगृहपतिश्चनोदमेस्वाहा ॥ ३३ ॥ ॐ त्वमग्नऽइंद्रोवृषभःसतामसित्वंविष्णुरुरुगायोनमस्यः ॥ त्वंब्रह्मारयिविद्ब्रह्मणस्पतेत्वंविधर्तःसचसेपुरंध्यास्वाहा ॥ ३४ ॥ ॐ त्वमग्नेराजावरुणोधृतव्रतस्त्वंमित्रोभवसिदस्मईड्यः ॥ त्वमर्यमासत्पतिर्यस्यसंभुजंत्वमंशोविदथेदेवभाजयुःस्वाहा ॥ ३५ ॥ ॐ त्वमग्नेत्वष्टाविधतेसुवीर्यंतवग्नावोमित्रमहःसजात्यं ॥ त्वमाशुहेमारिषेस्वश्व्यंत्वंनरांशर्धोऽअसिपुरूवसुःस्वाहा ॥ ३६ ॥ ॐ त्वमग्नेरुद्रोऽअसुरोमहोदिवस्त्वंशर्धोमारुतंपृक्षऽईशिषे ॥ त्वंवातैररुणैर्यासिशंगयस्त्वंपूषाविधतःपासिनुत्मनास्वाहा ॥ ३७ ॥ ॐ त्वमग्नेद्रविणोदाऽअरंकृतेत्वंदेवःसवितारत्नधाऽअसि ॥ त्वंभगोनृपतेवस्वईशिषेत्वंपायुर्दमेयस्तेविधत्स्वाहा ॥ ३८ ॥ ॐ त्वामग्नेदमऽआविश्पतिंविशस्त्वांराजानंसुविदत्रमृंजसे ॥ त्वंविश्वानिस्वनीकपत्यसेत्वंसहस्राणिशतादशप्रतिस्वाहा ॥ ३९ ॥ ॐ त्वामग्नेपितरमिष्टिभिर्नरस्त्वांभ्रात्रायशम्यातनूरुचं ॥ त्वंपुत्रोभवसियस्तेविधत्त्वंसखासुशेवःपास्याधृषःस्वाहा ॥ ४० ॐ त्वमग्नऽऋभुराकेनमस्या३ स्त्वंवाजस्यक्षुमतोरायऽईशिषे ॥ त्वंविभास्यनुदक्षिदावनेत्वंविशिक्षुरसियज्ञमातनिःस्वाहा ॥ ४१ ॥ ॐत्वमग्नेऽअदितिर्देवदाशुषेत्वंहोत्राभारतीवर्धसेगिरा ॥ त्वमिळाशतहिमासिदक्षसेत्वंवृत्रहावसुपतेसरस्वतीस्वाहा ॥ ४२ ॥ ॐत्वमग्नेसुभृतउत्तमंवयस्तवस्पार्हेवर्णऽआसंदृशिश्रियः ॥ त्वंवाजःप्रतरणोबृहन्नसित्वंरयिर्बहुलोविश्वतस्पृथुःस्वाहा ॥ ४३ ॥ ॐत्वामग्नऽआदित्यासऽआस्यं त्वांजिह्वांशुचयश्चक्रिरेकवे ॥ त्वांरातिषाचोऽअध्वरेषुसश्चिरेत्वेदेवाहविरदंत्याहुतंस्वाहा ॥ ४४ ॥ ॐत्वेऽअग्नेविश्वेऽअमृतासोऽअद्रुहऽआसादेवाहविरदंत्याहुतं ॥ त्वयामर्तासःस्वदंतऽआसुतिंत्वंगर्भोवीरुधांजज्ञिषेशुचिःस्वाहा ॥ ४५ ॥ ॐत्वंतान्त्संचप्रतिचासिमज्मनाग्नेसुजातप्रचदेवरिच्यसे ॥ पृक्षोयदत्रमहिनावितेभुवदनुद्यावापृथिवीरोदसीउभेस्वाहा ॥ ४६ ॥ ॐ येस्तोतृभ्योगोअग्रा

मश्वंपेशसमग्नेरातिमुपसृजंतिसूरयः ॥ अस्मानूचताँश्वप्रहिनेषिवस्यऽआबृहद्वदेमविदथेसुवीरास्वाहा ॥ ॥ ४७ ॥ ॐकद्रुद्रायप्रचेतसेमीळ्हुष्टमायतव्यसे ॥ वोचेमशंतमंहृदेस्वाहा ॥ ४८ ॥ ॐ यथानोऽअदितिःकरत्पश्वेनृभ्योयथागवे ॥ यथातोकायरुद्रियंस्वाहा ॥ ४९ ॥ ॐयथानोमित्रोवरुणोयथारुद्रःश्चिकेतति ॥ यथाविश्वेसजोषसःस्वाहा ॥ ५० ॥ ॐगाथपतिंमेधपतिंरुद्रंजलाषभेषजं ॥ तच्छंयोःसुम्नमीमहेस्वाहा ॥ ५१ ॥ ॐयःशुक्रइवसूर्योहिरण्यमिवरोचते ॥ श्रेष्ठोदेवानांवसुःस्वाहा ॥ ५२ ॥ ॐशंनःकरत्यर्वतेसुगंमेषायमेष्ये ॥ नृभ्योनारिभ्योगवेस्वाहा ॥ ५३ ॥ ॐइमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मिन्ननातुरंस्वाहा ॥ ५४ ॥ ॐमृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ॥ यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषुस्वाहा ॥ ५५ ॥ ॐअश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः ॥ सुम्नायन्निद्विशोअस्माकमाचरारिष्टवीराजुहवामतेहविःस्वाहा ॥ ५६ ॥ ॐत्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे ॥ आरेऽअस्मद्दैव्यंहेळोऽअस्यतुसुमतिमिद्वयमस्यावृणीमहेस्वाहा ॥५७॥ ॐ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ॥ हस्ते



बिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत्स्वाहा ॥ ५८ ॥ ॐइदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्धनं ॥ रास्वाचनोऽअमृतमर्तभोजनंत्मनेतोकायतनयायमृळस्वाहा ॥५९ ॥ ॐमानोमहांतमुतमानोऽअर्भकंमानऽउक्षंतमुतमानऽउक्षितं ॥ मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिषःस्वाहा ॥ ६० ॥ ॐमानस्तोकेतनयेमानऽआयौमानोगोषुमानोऽअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहेस्वाहा ॥ ६१ ॥ ॐउपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे ॥ भद्राहितेसुमतिर्मृळयत्तमाथावयमवइत्तेवृणीमहेस्वाहा ॥ ६२ ॥ ॐआरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरसुम्नमस्मेतेऽअस्तु ॥ मृळाचनोऽअधिचब्रूहिदेवाधाचनःशर्मयच्छद्विबर्हास्वाहा ॥ ६३ ॥ ॐअवोचामनमोऽअस्माऽअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीऽउतद्यौःस्वाहा ॥ ६४ ॥ ॐआतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयोथाः ॥ अभिनोवीरोऽअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिःस्वाहा ॥ ६५ ॥ ॐत्वादत्तेभीरुद्रशंतमेभिःशतंहिमाऽअशीयभेषजेभिः ॥ व्यस्मद्द्वेषोवितरंव्यंहोव्यमीवाश्चातयस्वाविषूचीस्वाहा ॥ ६६ ॥ ॐश्रेष्ठोजातस्यरुद्राश्रियासितवस्तम

स्तवसांवज्रबाहो ॥ पर्षिणःपारमंहसस्वस्तिविश्वाऽअभीतीरपसोयुयोधिस्वाहा ॥ ६७ ॥ ॐमात्वारुद्रचुक्रुधामानमोभिर्मादुष्टुतीवृषभमासहूती ॥ उन्नोवीरॉंअर्पयभेषजेभिर्भिषक्तमंत्वाभिषजांशृणोमिस्वाहा ॥ ॥ ६८ ॥ ॐ हवीमभिर्हवतेयोहविर्भिरवस्तोमेभीरुद्रंदिषीय ॥ ऋदूदरःसुहवोमानोऽअस्यैबभ्रुःसुशिप्रोरीरधन्मनायैस्वाहा ॥ ६९ ॥ ॐउन्मामंमंदवृषभोमरुत्वांत्वक्षीयसावयसानाधमानं ॥ घृणीवच्छायामरपाऽअशीयाविवासेयंरुद्रस्यसुम्नंस्वाहा ॥ ७० ॥ ॐक्व स्यतेरुद्रमृळयाकुर्हस्तोयोऽअस्तिभेषजोजलाषः ॥ अपभर्तारपसोदैव्यस्याभीनुमावृषभचक्षमीथाःस्वाहा ॥ ७१ ॥ ॐप्रबभ्रवेवृषभायश्वितीचेमहोमहींसुष्टुतिमीरयामि ॥ नमस्याकल्मलीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनामस्वाहा ॥ ७२ ॥ ॐ स्थिरेभिरंगैःपुरुरूपउग्रोबभ्रुःशुक्रेभिःपिपिशेहिरण्यैः ॥ ईशानादस्यभुवनस्यभूरेर्नवाऽउयोषद्रुद्रादसुर्यंस्वाहा ॥ ॥ ७३ ॥ ॐ अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं ॥ अर्हन्निदंदयसेविश्वमभ्वंनवाऽओजीयोरुद्रत्वदस्तिस्वाहा ॥ ७४ ॥ ॐ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं ॥ मृळाजरित्रेरुद्रस्तवानोन्यंतेऽअस्मन्निवपंतुसेनाःस्वाहा ॥७५॥ ॐकुमारश्चित्पितरंवंदमानंप्रतिनानामरुद्रोपयंतं ॥ भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मेस्वाहा ॥ ७६ ॥ ॐ यावोभेषजामरुतःशुचीनियाशंतमावृषणोयामयोभु ॥ यानिमनुरवृणीतापितानस्ताशंचयोश्चरुद्रस्यवश्मिस्वाहा ॥ ७७ ॥ ॐ परिणोहेतीरुद्रस्यवृज्याःपरित्वेषस्यदुर्मतिर्महीगात् ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृळस्वाहा ॥ ७८ ॥ एवाबभ्रोवृषभचेकितानयथादेवनहृणीषेनहंसि ॥ हवनश्रुन्नोरुद्रेहबोधिबृहद्वदेमविदथेसुवीराःस्वाहा ॥ ७९ ॥

एतैरेकोनाशीतिमंत्रैःप्रतिमंत्रंस्वाहांतैःआज्यंहुत्वाघंटादिवादित्रशब्दैःवेद्यामाराधितचत्वारिंशद्देवताभ्योवरुणायचधूपदीपनैवेद्यतांबूलादीन्समर्प्य ॥ प्रसीदंतुभवंतइतितान्संप्रार्थ्यर्त्विगन्वारब्धश्चरुतिलव्रीहिशेषेणस्विष्टकृतंहुत्वाइध्मसन्नहनीमग्नौप्रास्यप्रायश्चित्तादिहोमशेषंसमाप्ययजमानान्वारब्धःआचार्यः पूर्णाहुतिंस्थालीपाकेवक्ष्यमाणप्रकारेणहुत्वाविश्वेभ्योदेवेभ्यःसंस्रावंहुत्वापूर्णपात्रनिनयनोपस्थानपरिस्तरणविसर्जनपरिसमूहनपर्युक्षणाग्न्यार्चनपात्रोत्सर्जनादिकुर्यात् ॥ अथमंडपईशानेपंचरंगैःस्वस्तिकंकृत्वाचतुष्पादंदीर्घचतुरस्रंसोत्तरच्छदंतत्रपीठंनिधायतत्रोदगग्रान्हरितदर्भानास्तीर्यतत्रत्यंयजमानंप्राङ्मुखमुपवेश्याचार्यर्त्विग्भिःसहमंगलवाद्यैरभिषेककुंभोदकंपात्रांतरेआदायप्रत्यङ्मुखस्तिष्ठन्सपलाशयादुंबर्यार्द्रशाखयासहिरण्यपवित्रयासकुशदूर्वापल्लवयाहस्तमंतर्धायोदकपृषद्भिरब्लिंगाभिर्वारुणीभिःपावमानीभिरन्याभिश्चशांतिपवित्रलिंगाभिर्ग्रहाभिषेकमंत्रैःसुरास्त्वामितिसूक्तेनेमाआपःशिवतमाइतितृचेनदेवस्यत्वेतिचयजुषाभ्

भुवःस्वरितिच व्याहृतिभिरभिषिंचेत् ॥ तेचमंत्राः ॥ आपोहिष्ठेतिनवर्चस्यसूक्तस्यांबरीषःसिंधुद्वीपआपो गायत्री ॥ पंचमीवर्धमाना ॥ सप्तमीप्रतिष्ठा ॥ अंत्येद्वेअनुष्टुभौ ॥ प्रसम्राजइत्यष्टर्चस्यसूक्तस्यात्रिर्वरुण स्त्रिष्टुप् ॥ स्वादिष्ठयेतिदशर्चस्यसूक्तस्यमधुच्छंदाःपवमानसोमोगायत्री ॥ शंनइंद्राग्नीतिपंचदशर्चस्यसू क्तस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ पवित्रंतेविततमितिपंचर्चस्यांगिरसःपवमानसोमोगायत्री ॥ ॐ आपोहि ष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमात रः ॥ तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनां ॥ अपोयाचामिभेषजं ॥ अप्सुमेसोमोअब्रवीदंतर्वि श्वानिभेषजा ॥ अग्निंचविश्वशंभुवं ॥ आपःपृणीतभेषजंवरूथंतन्वे३ मम ॥ ज्योक्चसूर्यंदृशे ॥ इद मापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं ॥ आपोअद्यान्वचारिषंरसेनसमगस्म हि ॥ पयस्वानग्नऽआगहितंमासंसृजवर्चसा ॥ ॐ प्रसम्राजेबृहदर्चागभीरंब्रह्मप्रियंवरुणायश्रुताय ॥ वि योजघानशमितेवचर्मोपस्तिरेपृथिवींसूर्याय ॥ वनेषुव्यं१ तरिक्षंततानवाजमर्वत्सुपयऽउस्रियासु ॥ हृ त्सुक्रतुंवरुणोअप्स्वग्निं१ दिविसूर्यमदधात्सोममद्रौ ॥ नीचीनबारंवरुणःकवंधंप्रससर्जरोदसीअंतरिक्षं ॥ तेन

विश्वस्यभुवनस्यराजायवंनवृष्टिर्व्युनत्तिभूम ॥ उनत्तिभूमिंपृथिवीमुतद्यांयदादुग्धंवरुणोवष्ट्यादित् ॥ सम भ्रेणवसतपर्वतासस्तविषीयंतःश्रथयंतवीराः ॥ इमामूष्वासुरस्यश्रुतस्यमहींमायांवरुणस्यप्रवोचं ॥ मानेनेव तस्थिवाँअंतरिक्षेवियोममेपृथिवींसूर्येण ॥ १ ॥ इमामूनुकवितमस्यमायांमहींदेवस्यनकिरादधर्ष ॥ एकंयदुद्नानपृणंत्येनीरासिंचंतीरवनयःसमुद्रं ॥ अर्यम्यंवरुणमित्र्यंवासखायंवासदमिद्भ्रातरंवा ॥ वेशंवा नित्यंवरुणारणंवायत्सीमागश्चकृमाशिश्रथस्तत् ॥ कितवासोयद्रिरिपुर्नदीवियद्वाघासत्यमुतयन्नविद्म ॥ स र्वाताविष्यशिथिरेवदेवाधातेस्यामवरुणप्रियासः ॥ २ ॥ ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इंद्रा यपातवेसुतः ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहतं ॥ द्रुणासधस्थमासदत् ॥ वरिवोधातमोभवमंहिष्ठो वृत्रहंतमः ॥ पर्षिराधोमघोनां ॥ अभ्यर्षमहानांदेवानांवीतिमंधसा ॥ अभिवाजमुतश्रवः ॥ त्वामच्छाचरा मसितदिदर्थंदिवेदिवे ॥ इंदोत्वेनऽआशसः ॥ १ ॥ पुनातितेपरिस्रुतंसोमंसूर्यस्यदुहिता ॥ वारेणशश्वतात ना ॥ तमीमण्वीःसमर्यआगृभ्णंतियोषणोदश ॥ स्वसारःपार्येदिवि ॥ तमींहिन्वंत्यग्रुवोधमंतिबाकुरंदृतिं ॥ त्रिधातुवारणंमधु ॥ अभी३ममघ्न्याउतश्रीणंतिधेनवःशिशुं ॥ सोममिंद्रायपातवे ॥ अस्येदिंद्रोमदेष्वाविश्वा

वृत्राणिजिघ्नते ॥ शूरोमघाचमंहते ॥ २ ॥ ॐशन्नइंद्राग्नीभवतामवोभिःशन्नइंद्रावरुणारातहव्या ॥ शमिंद्रासोमासुवितायशंयोःशन्नइंद्रापूषणावाजसातौ ॥ शन्नोभगःशमुनःशंसोऽअस्तुशंनःपुरंधिःशमुसंतुरायः ॥ शंनःसत्यस्यसुयमस्यशंसःशंनोऽअर्यमापुरुजातोऽअस्तु ॥ शन्नोधाताशमुधर्तानोऽअस्तुशंनऽउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशंनोऽअद्रिःशंनोदेवानांसुहवानिसंतु ॥ शंनोऽअग्निर्ज्योतिरनीकोऽअस्तुशंनोमित्रावरुणावश्विनाशं ॥ शंनःसुकृतांसुकृतानिसंतुशन्नऽइषिरोऽअभिवातुवातः ॥ शंनोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोऽअस्तु ॥ शंनऽओषधीर्वनिनोभवंतुशंनोरजसस्पतिरस्तुजिष्णुः ॥ १ ॥ शंनऽइंद्रोवसुभिर्देवोऽअस्तुशमादित्येभिर्वरुणःसुशंसः ॥ शंनोरुद्रोरुद्रेभिर्जलाषःशंनस्त्वष्टाग्नाभिरिहशृणोतु ॥ शंनःसोमोभवतुब्रह्मशंनःशंनोग्रावाणःशमुसंतुयज्ञाः ॥ शन्नःस्वरूणांमितयोभवंतुशंनःप्रस्वःशम्वस्तुवेदिः ॥ शंनःसूर्यउरुचक्षाउदेतुशंनःश्चतस्रःप्रदिशोभवंतु ॥ शंनःपर्वताध्रुवयोभवंतुशंनःसिंधवःशमुसंत्वापः ॥ शंनोऽअदितिर्भवतुव्रतेभिःशंनोभवंतुमरुतःस्वर्काः ॥ शंनोविष्णुःशमुपूषानोऽअस्तुशंनोभवित्रंशम्वस्तुवायुः ॥ शंनोदेवःसवितात्रायमाणःशंनोभवंतूषसोविभातीः ॥ शंनःपर्जन्योभवतुप्रजाभ्यः



शंनःक्षेत्रस्यपतिरस्तुशंभुः ॥ २ ॥ शंनोदेवाविश्वदेवाभवंतुशंसरस्वतीसहधीभिरस्तु ॥ शमभिषाचःशमुरातिषाचःशंनोदिव्याःपार्थिवाःशंनोऽअप्याः ॥ शनःसत्यस्यपतयोभवंतुशंनोऽअर्वतःशमुसंतुगावः ॥ शंनऽऋभवःसुकृतःसुहस्ताःशंनोभवंतुपितरोहवेषु ॥ शंनोऽअजएकपाद्देवोऽअस्तुशंनोहिर्बुध्न्यःशंसमुद्रः ॥ शंनोऽअपांनपात्पेरुरस्तुशंनःपृश्निर्भवतुदेवगोपा ॥ आदित्यारुद्रावसवोजुषंतेदंब्रह्मक्रियमाणंनवीयः ॥ शृण्वंतुनोदिव्याःपार्थिवासोगोजाताऽउतयेयज्ञियासः ॥ येदेवानांयज्ञियायज्ञियानांमनोर्यजत्राऽअमृताऽऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ ३ ॥ ॐपवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्राणिपर्येषिविश्वतः ॥ अतप्ततनूर्नतदामोऽअश्नुतेशृतासऽइद्वहंतस्तत्समाशत ॥ तपोष्पवित्रंविततंदिवस्पदेशोचंतोअस्यतंतवोव्यस्थिरन् ॥ अवंत्यस्यपवीतारमाशवोदिवस्पृष्ठमधितिष्ठंतिचेतसा ॥ अरूरुचदुषसःपृश्निरग्रियऽउक्षाबिभर्तिभुवनानिवाजयुः ॥ मायाविनोममिरेअस्यमाययानृचक्षसःपितरोगर्भमादधुः ॥ गंधर्वइत्थापदमस्यरक्षतिपातिदेवानांजनिमान्यद्भुतः ॥ गृभ्णातिरिपुंनिधयानिधापतिःसुकृत्तमामधुनोभक्षमाशत ॥ हविर्हविष्मोमहिसद्मदैव्यंनभोवसानःपरियास्यध्वरं ॥ राजापवित्ररथोवाजमारुहःसहस्रभृष्टिर्जय

सिश्रवोबृहत् ॥ १ ॥ अथग्रहमंत्राः ॥ ग्रहाणामादिरादित्योलोकरक्षणकारकाः ॥ विषमस्थानसंभूतांपीडांहरतुतेरविः ॥ १ ॥ रोहिणीशःसुधामूर्तिःसुधागात्रःसुधाशनः ॥ विषमस्थानसंभूतांपीडांहरतुतेविधुः ॥ ॥ २ ॥ भूमिपुत्रोमहातेजाजगतांभयकृत्सदा ॥ वृष्टिकृद्वृष्टिहर्ताचपीडांहरतुतेकुजः ॥ ३ ॥ उत्पातरूपोजगतांचंद्रपुत्रोमहाद्युतिः ॥ सूर्यप्रियकरोविद्वान्पीडांहरतुतेबुधः ॥ ४ ॥ देवमंत्रीविशालाक्षःसदालोकहितेरतः ॥ अनेकशिष्यसंपूर्णःपीडांहरतुतेगुरुः ॥ ५ ॥ दैत्यमंत्रीगुरुस्तेषांप्राणदश्चमहामतिः ॥ प्रभुस्ताराग्रहाणांचपीडांहरतुतेभृगुः ॥ ६ ॥ सूर्यपुत्रोदीर्घदेहोविशालाक्षःशिवप्रियः ॥ मंदचारःप्रसन्नात्मापीडांहरतुतेशनिः ॥ ७ ॥ महाशिरामहावक्त्रोदीर्घदंष्ट्रोमहाबलः ॥ अतनुश्चोर्ध्वकेशश्चपीडांहरतुतेतमः ॥ ॥ ८ ॥ अनेकरूपवर्णैश्चशतशोथसहस्रशः ॥ उत्पातरूपोजगतःपीडांहरतुतेशिखी ॥ ९ ॥ अथदेवमंत्राः ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणःपवनश्चैवधनाध्यस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा ॥ ३ ॥ कीर्तिर्लक्ष्मीधृतिर्मेधापुष्टिश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिःक्षांतिःस्तुष्टिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः ॥ देवदानवगं



धर्वायक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानि च ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ ८ ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ९ ॥ एतैर्मंत्रैःप्रतिमंत्रमभिषिच्यश्रीसूक्तेनाहिरण्यवर्णांहरिणीमित्यादिनाइमाआपःशिवतमाइतितृचेनदेवस्यत्वेतियजुषाभूर्भुवःस्वरितिव्याहृतिभिश्चाभिषिंचेत् ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यकर्दमानंदश्चिक्लीतेंदिरासुताऋषयः ॥ श्रीर्देवता ॥ आद्यास्तिस्रोनुष्टुभः ॥ ततएकाप्रस्तारपंक्तिः ॥ ततोद्वेत्रिष्टुभौततोष्टावनुष्टुभोंत्याप्रस्तारपङ्क्तिः ॥ अभिषेकेबिनियोगः ॥ ॐ हिरण्यवर्णांहरिणींसुवर्णरजतस्रजां ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहं ॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीं ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीर्जुषतां ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीं ॥ पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं ॥ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां ॥ तांपद्मिनीमींशरणमहंप्रपद्येअलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ १ ॥ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्याअलक्ष्मीः ॥ उपैतुमांदेव

सखः कीर्तिश्चमणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ क्षुत्पिपासामलांज्येष्ठाअलक्ष्मींनाश
याम्यहं ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभू
तानांतामिहोपह्वयेश्रियं ॥ मनसःकाममाकूतिंवाचःसत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांय
शः ॥ २ ॥ कर्दमेनप्रजाभूतामयिसंभ्रमकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीं ॥ आपःसृजंतु
स्निग्धानिचिक्लीतवसमेगृहे ॥ नीचदेवींमातरंश्रियंवासयमेकुले ॥ आर्द्रांयःकरिणींयष्टींसुवर्णांहेममालिनीं॥
सूर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ आर्द्रांपुष्करिणींपुष्टींपिंगलांपद्ममालिनीं ॥ चंद्रांहिरण्मयींलक्ष्मीं
जातवेदोमआवह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विंदे
यंपुरुषानहं ॥ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं॥सूक्तंपंचदशर्चंचश्रीकामःसततंजपेत् ॥ ३ ॥ इमा
आपइतितिसृणांसप्तऋषयआपोनुष्टुप् ॥ अभिषेकेवि० ॥ ॐ इमाऽआपःशिवतमाऽइमाःसर्वस्यभेषजीः ॥
इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं ॥ ताभिरद्भि
रभिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह ॥ महांतत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनि
त्र्यजीजनत् ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ अश्विनोर्भैषज्येन ॥ ते



जसेब्रह्मवर्चसायाभिषिंचामि ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ सरस्व
त्यैभैषज्येन ॥ वीर्यायान्नाद्यायाभिषिंचामि ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ता
भ्यां ॥ इंद्रस्येंद्रियेण ॥ श्रियैयशसेबलायाभिषिंचामि ॥ एवमभिषिक्तोयजमानःश्वेताहतवस्त्रयुग्मंगंधमा
ल्याभरणंचबिभृयात् ॥ ततआचार्योदिक्षुविदिक्षुचबलिमुत्क्षिप्यसुवासिनीभिर्नीराजनंकारयेत् ॥ अथय
जमानोग्रहदेवतानांचतुर्थ्यंतदेवतानामभिःपुष्पाणिसमर्प्याचार्येणव्यात्हृत्युच्चारणपूर्वकंग्रहोद्वासनंकारयि
त्वाआचार्यप्रभृतिभ्यःजपहोमफलंगृहीत्वातेभ्योदक्षिणांदद्यात् ॥ गौःशंखःरक्तोनड्वान्हिरण्यंपीतवासःश्वेता
श्वःकृष्णागौःकालायसंहस्तीछागोवेतिग्रहक्रमेण ॥ अत्रन्यूनदक्षिणाबुधदक्षिणयाहिरण्येनसमाकार्याआद्य
गवावाएतदभावेसर्वेभ्योयथाशक्तिहिरण्यंवादद्यात् ॥ आचार्यायद्विगुणं ॥ अन्येभ्यश्चयथाशक्तिभूयसीं ॥
ततःकांस्यपात्रगताज्ये ॥ रूपंरूपंप्रतिरूपोबभूवेतिमंत्रेणसकुटुंबःस्वप्रतिरूपंप्रेक्ष्य ॥ आज्यंतेजःमुमुद्दिष्ट
माज्यंपापहरंस्मृतं ॥ आज्यंसुराणामाहारआज्येदेवाःप्रतिष्ठिताः॥इतिमंत्रंपठित्वातदाज्यंसदक्षिणंब्राह्मणाय
दद्यात् ॥ ततोभूरिदक्षिणांदत्त्वासंकल्प्यवा ॥ एकस्यआहुतेरेकंशतस्यैकंसहस्रस्यवाएकंयथाशक्तिवाब्राह्म
णान्भोजयित्वातेभ्यःशांतिःपुष्टिस्तुष्टिश्चास्त्वित्याद्याशिषोगृहीत्वातान्संप्रार्थ्यप्रणिपत्य ॥ यस्यस्मृत्याचना
मोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातुसद्योवंदेतमच्युतमितिपठित्वा ॥ प्रमादात्कुर्वतांकर्मप्रच्यवे

ताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ इत्युत्कान्यूनातिरिक्ताच्छिद्रत्वार्थयथाशक्तिअ
च्युतानंतगोविंदेतिनाममंत्रजपंकृत्वाग्रहयज्ञफलंश्रीविष्णवेसमर्प्यस्वयंत्दष्टमनावंधुभिःसहभुंजीत ॥ अयं
चाश्वलायनगृह्यपरिशिष्टोक्तोग्रहमखः ॥ स्मार्ताग्निमतामाश्वलायनानामेव ॥ बह्वल्पंवास्वगृह्योक्तंयस्यक
र्मप्रचोदितं ॥ तस्यतावतिशास्त्रार्थेकृतेसर्वःकृतोभवेदितिवचनात् ॥ एवमन्येषामपियदिस्वगृह्यादावुक्तः
तदासएव ॥ येषांतुस्वगृह्यादौनोक्तस्तेषांयाज्ञवल्क्यादिस्मृत्युक्तः ॥ मत्स्यपुराणाद्युक्तोवानुष्ठेयःस्मृत्यादेः
साधारण्यादितिदिक् ॥ ॥ इतिसमंत्रक नवग्रह मखप्रयोगः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ १८ ॥ ॥ अथ उपनयन विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथोपनयनोक्तविचारः ॥ तद्गर्भाष्टमेअष्टमेवाब्देकार्यं ॥ मनुः ॥ ब्रह्मवर्चसका
मस्यकार्यंविप्रस्यपंचमे ॥ विष्णुः ॥ षष्ठेतुधनकामस्यविद्याकामस्यसप्तमे ॥ अष्टमेसर्वकामस्यनवमेकां
तिमिच्छतः ॥ तथाचसंग्रहे ॥ सप्तमेचाष्टमेवर्षेनवमेदशमेतथा ॥ एकादशेद्वादशेवाह्युपनेयाद्विजातयः ॥
ब्रह्मवर्चस्यमायुष्यंतेजोन्नाद्यंतथैंद्रियं ॥ पशून्कामयमानावैप्राप्नुवंतियथाक्रमं ॥ नृसिंहः ॥ उत्तरायणगेसू
र्येकर्तव्यंह्युपनायनं ॥ श्रुतिः ॥ वसंतेब्राह्मणंमुपनयीत ॥ वराहः ॥ माघादिपंचमासेषुमेखलाबंधनंशि
शोः ॥ ज्येष्ठमासेनज्येष्ठस्यजन्ममासेनसर्वेषां ॥ शुक्लपक्षेद्वितीयादिस्वाध्यायतिथिषुनानध्यायेननैमित्ति
कानध्यायेपूर्वाण्हेशुभमुहूर्तेशुभचंद्रादौगुरुशुक्रयोर्बाल्यवार्धक्यास्तराहित्यादौज्योतिर्वित्प्रोक्तेशुभकालेउ

पनयनंकार्यं ॥ पितैवोपनयेत्पुत्रंतदभावेपितुःपिता ॥ तदभावेपितुर्भ्रातातदभावेतुसोदरः ॥ अ
धिकारसिद्ध्येप्रायश्चित्तमाहवृद्धवसिष्ठः ॥ कृच्छ्रत्रयंचोपनेतात्रीन्कृच्छ्रांश्चवटुश्चरेत् ॥ आचार्योद्वादशसा
हस्रंगायत्रींजपेत् ॥ तथा ॥ नांदीश्राद्धेकृतेपश्चादनध्यायस्त्वकालिकः ॥ मौजीबंधंतदाकुर्याद्वेदारंभंन
कारयेत् ॥ अकालिकोगर्जनानिर्घातादिनिमित्तकः ॥ आश्वलायनानांउपनयनदिनेवेदारंभाभावात् ॥
वेदारंभकरणंयजुर्वेदिविषयं ॥ आश्वलायनस्तुवृद्धिश्राद्धदिनात्षट्दिनमध्येमुहूर्तांतरेसति ॥ तेनैव
नांदीश्राद्धेनतत्रोपनयनंकुर्यात् ॥ तदूर्ध्वंतुमुहूर्ते ॥ श्राद्धांतरपूर्वकमुपनयनंयथाकालंकुर्यात् ॥ इत्युपनय
नोक्तविचारःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १९ ॥ ॥ अथ समंत्रक उपनयन प्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥अथउपनयनप्रयोगप्रारंभः॥उक्तकालेउपनिनीषुराचार्यःपूर्वेद्युर्बटोःपरिधानार्थंशुक्लमी
षद्धौतंनवंसदशंपरेणाधृतंवस्त्रमुत्तरीयार्थंचकाषायवस्त्रमजिनंवाकृष्णमृगस्ययज्ञोपवीतंमौजीमेखलांपालाश
मव्रणमृजुंसौम्यदर्शनंबटोःकेशसंमितंसाग्रंदंडंकौपीनंतद्बंधनसूत्रंभिक्षाभाजनंचसंपाद्यस्वस्योपनेतृत्वाधि
कारसिद्ध्येकृच्छ्रत्रयंद्वादशसहस्रगायत्रींचजप्त्वा॥कुमारेणापिकामचारकामवादकामभक्षणादिदोषापनोदा
र्थंकृच्छ्रत्रयंकारयित्वास्वस्तिवाचनांकुरार्पणग्रहयज्ञनांदीश्राद्धादिसंकल्पपूर्वकंकृत्वामंडपप्रतिष्ठांकुर्यात्॥ त

वसंकल्पः ॥ अस्यकुमारस्योपनयनेग्रहानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्ये ॥ ग्रहयज्ञंस
माप्यास्यकुमारस्यद्विजत्वसिद्धयावेदाध्ययनाधिकारार्थंश्वउपनयनंकरिष्ये ॥ तदंगभूतमग्रगणमतिपूजनपू
र्वकंस्वस्तिवाचनंमातृकापूजननांदीश्राद्धंमंडपप्रतिष्ठांकुलदेवतादिस्थापनंचकरिष्ये ॥ उपनयनेनसहचौल
करणपक्षेतदपिसंकल्पेकीर्तयेत् ॥ तंत्रेणचस्वस्तिवाचनग्रहयज्ञनांदीश्राद्धादीनिकुर्यात् ॥ अथापरेद्युःकृतनि
त्यक्रियःकृतमंगलस्नानमलंकृतंकुमारमुक्तस्वस्त्ययनंकृतकौतुकबंधंमातुरुत्संगेभोजयित्वादेशकालौसंकीर्त्य
अस्यकुमारस्योपनयनंकर्तुंतत्प्राच्यांगभूतंवापनादिकरिष्ये॥इतिसंकल्प्य॥कृतवापनंस्नापितंबद्धशिखंकुमारं
मौहूर्तिकोक्तेशुभमुहूर्तेस्वसमीपमानीय ॥ लक्ष्मीःकौस्तुभपारिजातकेत्यादिमंगलाष्टकपठनांतेतन्मुखंसम्य
गीक्षेत ॥पश्चाद्विप्राः येयज्ञेनदक्षिणयेत्यादिवेदमंत्रांश्चपठेयुः ॥ तइमेमंत्राः ॥ येयज्ञेनदक्षिणयासमक्ताइंद्र
स्यसख्यममृतत्वमानश ॥ तेभ्योभद्रमंगिरसोवोअस्तुप्रतिगृभ्णीतमानवंसुमेधसः ॥ यउदाजन्पितरोगोमयं
वस्वृतेनाभिंदन्परिवत्सरेवलं ॥ दीर्घायुत्वमंगिरसोवोअस्तुप्रतिगृभ्णी० ॥ यऋतेनसूर्यमारोहयंदिव्यप्रथयन्पृ
थिवींमातरंवि ॥ सुप्रजास्त्वमंगिरसोवोअस्तुप्रतिगृ० ॥ अयंनाभावदतिवल्गुवोगृहेदेवपुत्राऋषयस्तच्छृणोत
तन ॥ सुब्रह्मण्यमंगिरसोवोअस्तुप्रतिगृभ्णी० ॥ विरूपासइदृषयस्तइद्गंभीरवेपसः ॥ तेअंगिरसःसूनवस्ते
अग्नेःपरिजज्ञिरे ॥ १ ॥ येअग्नेःपरिजज्ञिरेविरूपासोदिवस्परि ॥ नवग्वोनुदशग्वोअंगिरस्तमःसचादेवेषु

मंहते ॥ इंद्रेणयुजानिःसृजंतवाघतोव्रजंगोमंतमश्विनं ॥ सहस्रंमेददतोअष्टकर्ण्यः श्रवोदेवेष्वक्रत ॥
प्रनूनंजायतामयंमनुस्तोक्मेवरोहतु ॥ यःसहस्रंशताश्वंसद्योदानायमंहते ॥ नतमश्नोतिकश्चनदिवइवसा
न्वारभं ॥ सावर्ण्यस्यदक्षिणाविसिंधुरिवपप्रथे ॥ उतदासापरिविषेस्मद्दिष्टीगोपरीणसा ॥ यदुस्तुर्वश्चमा
महे ॥ सहस्रदाग्रामणीर्मारिषन्मनुःसूर्येणास्ययतमानैतुदक्षिणा ॥ सावर्णेर्देवाःप्रतिरंत्वायुर्यस्मिन्नश्रांताअ
सनामवाजं ॥ २ ॥ परावतोयेदिधिषंतआप्यंमनुप्रीतासोजनिमाविवस्वतः ॥ ययातेर्येनहुष्यस्यबर्हिषिदे
वाआसतेतेअधिब्रुवंतुनः ॥ विश्वाहिवोनमस्यानिवंद्यानामानिदेवाउतयज्ञियानिवः ॥ येस्थजाताअदिते
रद्भ्यस्परियेपृथिव्यास्तेमइहश्रुताहवं ॥ येभ्योमातामधुमत्पिन्वतेपयःपीयूषंद्यौरदितिरद्रिबर्हाः ॥ उक्थशु
ष्मान्वृषभरांत्स्वप्नसस्तांआदित्यांअनुमदास्वस्तये ॥ नृचक्षसोअनिमिषंतोअर्हणाबृहद्देवासोअमृतत्वमान
शुः ॥ ज्योतीरथाअहिमायाअनागसोदिवोवर्ष्माणंवसतेस्वस्तये ॥ सम्राजोयेसुवृधोयज्ञमाययुरपरिह्वृताद
धिरेदिविक्षयं ॥ तांआविवासनमसासुवृक्तिभिर्महोआदित्यांअदितिंस्वस्तये ॥ ३ ॥ कोवस्तोमंराधतियंजु
जोषथविश्वेदेवासोमनुषोयतिष्ठन ॥ कोवोध्वरंतुविजाताअरंकरद्योनःपर्षदत्यंहःस्वस्तये ॥ येभ्योहोत्रांप्रथ

मामयिजेमनुःसमिद्धाग्निर्मनसासप्तहोतृभिः ॥ तआदित्याअभयंशर्मयच्छतसुगानःकर्तसुपथास्वस्तये ॥ य
ईशिरेभुवनस्यप्रचेतसोविश्वस्यस्थातुर्जगतश्चमंतवः ॥ तेनःकृतादकृतादेनसस्पर्यद्यादेवासःपिपृतास्वस्त
ये ॥ भरेष्विंद्रंसुहवंहवामहेंहोमुचंसुकृतंदैव्यंजनं ॥ अग्निंमित्रंवरुणंसातयेभगंद्यावापृथिवीमरुतःस्वस्तये ॥
सुत्रामाणंपृथिवींद्यामनेहसंसुशर्माणमदितिंसुप्रणीतिं ॥ दैवींनावंस्वरित्रामनागसमस्रवंतीमारुहेमास्वस्तये
॥ ४ ॥ विश्वेयजत्राअधिवोचतोतयेत्रायध्वंनोदुरेवायाअभिह्रुतः ॥ सत्ययावोदेवहूत्याहुवेमशृण्वतोदेवा
अवसेस्वस्तये ॥ अपामीवामपविश्वामनाहुतिमपारातिंदुर्विदत्रामघायतः ॥ आरेदेवाद्वेषोअस्मद्युयोतनोरु
णःशर्मयच्छतास्वस्तये ॥ अरिष्टःसमर्तोविश्वएधतेप्रप्रजाभिर्जायतेधर्मणस्परि ॥ यमादित्यासोनयथासुनी
तिभिरतिविश्वानिदुरितास्वस्तये ॥ यंदेवासोवथवाजसातौयंशूरसातामरुतोहितेधने ॥ प्रातर्यावाणंरथमिंद्र
सानसिमरिष्यंतमारुहेमास्वस्तये ॥ स्वस्तिनःपथ्यासुधन्वसुस्वस्त्याप्सुवृजनेस्वर्वति ॥ स्वस्तिनःपुत्रकृ
थेषुयोनिषुस्वस्तिरायेमरुतोदधातन ॥ स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावाममेति ॥ सानोअमासो
अरणेनिपातुस्वावेशाभवतुदेवगोपा ॥ एवाप्लतेःसूनुरवीवृधद्वोविश्वआदित्याअदितेमनीषी ॥ ईशानासोन
रोअमर्त्येनास्तावि जनोदिव्योगयेन ॥ ५ ॥ बृहस्पतेप्रथमंवाचोअग्रंयत्प्रैरतनामधेयंदधानाः ॥ यदेषांश्रे



ष्ठंयदरिप्रमासीत्प्रेणातदेषांनिहितंगुहाविः ॥ सक्तुमिवतितउनापुनंतोयत्रधीरामनसावाचमक्रत ॥ अत्रास
खायःसख्यानिजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचि ॥ यज्ञेनवाचःपदवीयमायंतामन्वविंदन्नृषिषुप्रविष्टां ॥
तामाभृत्याव्यदधुःपुरुत्रातांसप्तरेभाअभिसंनवंते ॥ उतत्वःपश्यंनददर्शवाचमुतत्वःशृण्वंनशृणोत्येनां ॥
उतोत्वस्मैतन्वंविसस्रेजायेवपत्यउशतीसुवासाः ॥ उतत्वंसख्येस्थिरपीतमाहुर्नैनंहिन्वंत्यपिवाजिनेषु ॥
अधेन्वाचरतिमाययैषवाचंशुश्रुवाँअफलामपुष्पां ॥ १ ॥ यस्तित्याजसचिविदंसखायंनतस्यवाच्यपिभा
गोअस्ति ॥ यदींशृणोत्यलकंशृणोतिनहिप्रवेदसुकृतस्यपंथां ॥ अक्षण्वंतःकर्णवंतःसखायोमनोजवेष्वस
माबभूवुः ॥ आदघ्नासउपकक्षासउत्वेह्रदाइवस्नात्वाउत्वेददृश्रे ॥ हृदातष्टेषुमनसोजवेषुयद्ब्राह्मणाःसं
यजंतेसखायः ॥ अत्राहत्वंविजहुर्वेद्याभिरोहब्रह्माणोविचरंत्युत्वे ॥ इमेयेनार्वाङ्नपरश्चरंतिनब्राह्मणासो
नसुतेकरासः ॥ तएतेवाचमभिपद्यपापयासिरीस्तंत्रंतन्वतेअप्रजज्ञयः ॥ सर्वेनंदंतियशसागतेनसभासाहे
नसख्यासखायः ॥ किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय ॥ ऋचांत्वःपोषमास्तेपुपुष्वान्गा
यत्रंत्वोगायतिशक्वरीषु ॥ ब्रह्मात्वोवदतिजातविद्यांयज्ञस्यमात्रांविमिमीतउत्वः ॥ २ ॥ इतिमंत्रानूपटित्वा

ततस्तंस्वदक्षिणतउपवेश्यउपलेपाद्यग्निप्रतिष्ठांतंकृत्वा समिद्द्वयमादायतिथ्यादिसमुच्चार्यअस्यकुमारस्याद्वि
जत्वसित्ध्यर्थंक्रियमाणेउपनयनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्याद्याघारा
वाज्येनेत्यंतमुक्त्वात्रिरग्निंपवमानंप्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्येइत्यंतमुक्त्वाऽन्याहुति
भिरग्नावाधानपरिसमूहनाद्याज्यसंस्कारांतंकृत्वाआचार्योग्नेःपश्चादवस्थायकुमारंप्राङ्मुखमवस्थाप्यकौपी
नार्थंत्रिवृतंकार्पाससूत्रंकटावाबध्य कौपीनंपरिधाप्ययद्वितीयजन्मन्युल्बप्रतिनिधिभूतमहतंशुक्लंवासःसमंत्रकं
परिधाप्यान्येनकाषायवाससातथैवप्रावारयेत् ॥ तत्रमंत्रः ॥ युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रि
ष्टुप् ॥ वासोधारणेविनियोगः ॥ ॐयुवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः ॥ अवातिरतमनृ
तानिविश्वंऋतेनमित्रावरुणासचेथे ॥ प्रावरणार्थंकृष्णाजिनंवा ॥ तच्च ॥ त्र्यंगुलंतुबहिर्लोमयद्वास्याश्चतुरंगु
लं ॥ अजिनंधारयेद्द्विप्रश्चतुर्विंशाष्टषोडशैः ॥ मित्रस्यचक्षुरित्यस्यवामदेवोजिनंत्रिष्टुप् ॥ अजिनधारणेवि
नियोगः ॥ ॐमित्रस्यचक्षुर्धरुणंबलीयस्तेजोयशस्वीस्थविरंसमिद्धं ॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्य
जिनंदधेहं ॥ ततोद्विजत्वचिन्हार्थंयज्ञोपवीतंदद्यात् ॥ यज्ञोपवीतमित्यस्यपरब्रह्मपरमात्मात्रिष्टुप् ॥ श्रौ
तस्मार्तकर्मानुष्ठानसिद्ध्यर्थंद्विजत्वसिद्धयेयज्ञोपवीतधारणेविनियोगः ॥ ॐयज्ञोपवीतंपरमंपवित्रंप्रजापते
र्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः ॥ इतिमंत्रंवाचयित्वातद्दक्षिण



बाहुमुद्धार्यउपवीतंधारयित्वा ॥ कुमारमात्मनोग्नेश्चमध्येनयज्ञपात्रोत्तरभागंगमयित्वातत्रविधिवदाचमय्यपु
नस्तथैवानीयस्वदक्षिणेउपवेश्यबर्हिरास्तरणादिस्रुवसंमार्जनांतंकृत्वाब्रह्मचार्यन्वारब्धइध्माधानाद्याज्यभा
गवर्जंकुर्यात् ॥ ततःअग्नआयूंषीतितिसृणांशतंवैखानसाऋषयः ॥ अग्निःपवमानोदेवता ॥ गायत्रीच्छंदः॥
उपनयनप्रधानाज्यहोमेविनियोगः ॥ ॐअग्नऽआयूंषिपवसऽआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनां
स्वाहा ॥ अग्नयेपवमानायेदंनममेतित्यागः॥ एवमग्रेपि ॥ ॐअग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः ॥तमी
महेमहागयंस्वाहा ॥ अग्नयेपव० ॥ ॐअग्नेपवस्वस्वपाऽअस्मेवर्चःसुवीर्यं ॥ दधद्रयिंमयिपोषंस्वाहा ॥ अ
ग्नयेपवमाना० ॥ प्रजापतेत्यस्यहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ उपनयनप्रधानाज्यहोमेविनियोगः ॥ ॐप्र
जापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयंस्यामपतयोरयीणां
[illegible]हा ॥ प्रजापतयइदंनमम ॥ अथाचार्यउत्तरतोग्नेःप्राङ्मुखस्तिष्ठेत् ॥ कुमारोप्यग्न्याचार्ययोर्मध्येनग
[illegible]चार्याभिमुखस्तिष्ठेत् ॥ अथाचार्यःसंयतात्माकुमारस्यशुचित्वसिद्धयेसवितृदेवतातृप्तयेचांजलिक्षार
[illegible] ॥ तच्चेत्थं ॥ शुद्धोदकेनशिष्यांजलिमापूर्यस्वस्यांजलिमन्येनपूरयित्वा ॥ तत्सवितुरित्यस्यश्या
[illegible]नानुष्टुप् ॥ अवक्षारणेविनियोगः ॥ ॐ तत्सवितुर्वृणीमहेवयंदेवस्यभोजनं ॥ श्रेष्ठंसर्वधातमंतु
[illegible]रं ॥ अनेनस्वांजल्युदकंशिष्यांजलावक्षार्यतज्जलंकुमारांजलिनैवावक्षारयेत् ॥ ततःशिष्य

टोर्हस्तंगृण्हीयात् ॥ तत्रमंत्रः ॥ ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांहस्तं
तयजुरंतेऽमुकशर्मन्निितिकुमारस्याभिवादनीयंनामशर्मातंसंबुध्यानिर्दिश्यदक्षिणेनपाणिनाकुमार
गुष्ठंदक्षिणपाणिंगृहीत्वापुनरपिपूर्ववदुदकपूरणादिकृत्वा ॥ ॐ सवितातेहस्तमग्रभीदसावितिद्वितीय
तमंत्रांतेपूर्ववद्बटुनामोक्त्वाहस्तंगृहीत्वापुनरपिपूर्ववत्पूरयित्वा ॥ अग्निराचार्यस्तवासावितितृतीयमिति
त्रांतेपूर्ववत्तन्नामनिर्दिश्यहस्तंगृण्हीयात् ॥ अथाचार्योब्रह्मचारिणासहनिष्क्रम्यदेवसवितरेषतेब्रह्मचारीतं
गोपायसमामृतेत्युच्चार्यसंरक्षणार्थंव्रतपतयेआदित्यायबटुंददामीतिमनसास्मरन् ॥ ब्रह्मचारिणमादित्यमी
क्षयेत् ॥ ततःउभावपिपूर्ववदुत्तरतोग्नेरन्योन्याभिमुखौतिष्ठेतां ॥ अथाचार्यःकस्यब्रह्मचार्यसिप्राणस्यब्रह्म
चार्यसिकस्त्वाकमुपनयतेकायत्वापरिददामीतिमंत्रंजपन्कुमारंप्रजापतयेरक्षणार्थंबटुंमनसासमर्प्य ॥ युवा
सुवासाइत्यस्यकौशिकोविश्वामित्रोयूपस्त्रिष्टुप् ॥ पूर्वार्द्धर्चस्यप्रदक्षिणावर्तनेउत्तरार्द्धर्चस्यपाणिभ्यांबटो
र्हृदयालंबनेविनियोगः ॥ ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ इत्यर्धर्चमुच्चार्य
न्बटुंप्रदक्षिणमावर्त्यप्राङ्मुखमवस्थापयेत् ॥ ततःकुमारांसयोरुपरिस्वपाणिंगमयित्वा ॥ ॐ तंधीरासःक
वयउन्नयंतिस्वाध्योमनसादेवयंतः ॥ इत्युत्तरार्धर्चमुच्चार्यतद्धृदयप्रदेशंसकृत्पाणिभ्यांस्पृशेत् ॥ ततआचार्य
आत्मानमग्निंचांतरेणबटुंनीत्वाप्रत्यगग्नेःस्वयमुपविश्यस्वस्यदाक्षिणतःप्राङ्मुखंतमुपवेशयेत्॥ ततोबटुरग्नेः



परिसमूहनपर्युक्षणेकृत्वावृत्तिकारमतेत्वकृत्वा ॥ अग्नयेसमिधमित्यस्यहिरण्यगर्भोग्निर्बृहती ॥ समिदाधा
नेवि० ॥ ॐ अग्नयेसमिधमाहार्षंबृहतेजातवेदसे ॥ तयात्वमग्नेवर्धस्वसमिधाब्रह्मणावयंस्वाहेतिसमिध
माधाय ॥ अग्नयेदंनममेत्युद्देशत्यागौकृत्वा ॥ पाणिंप्रक्षाल्याग्निंस्पृष्ट्वा ॥ ॐ तेजसामासमनज्मीतिसंवृतो
ष्ठद्वयंमुखमवाङ्निमृज्यपाणिंप्रक्षाल्यपुनरग्निंस्पृष्ट्वामंत्रेणतथैवमुखंनिमृज्यपाणिंप्रक्षालयेत् ॥ ततस्तिष्ठन्
प्रणतिमुद्रांकृत्वामयिमेधामितिषण्णांहिरण्यगर्भऋषिः ॥ पूर्वेषांत्रयाणामग्नींद्रसूर्यादेवताः ॥ उत्तरत्रयाणाम
ग्निर्देवता ॥ आसुरीगायत्रीच्छंदः ॥ अग्न्युपस्थानेविनियोगः ॥ ॐ मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातु ॥
मयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातु ॥ मयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु ॥ यत्तेअग्नेतेजस्तेनाहंतेज
स्वीभूयासं ॥ यत्तेअग्नेवर्चस्तेनाहंवर्चस्वीभूयासं ॥ यत्तेअग्नेहरस्तेनाहंहरस्वीभूयासमितिषण्मंत्रैराग्निमुप
स्थाय ॥ मानस्तोकेतिकुत्सोरुद्रोजगती ॥ विभूतिग्रहणेविनियोगः ॥ ॐ मानस्तोकेतनयेमानऽआयौमा
नोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे ॥ इत्यनेनभस्मादा
यथाचारंत्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्यायुषमितिकंठे ॥ अगस्त्यस्यत्र्यायुषमितिनाभौ ॥ यद्दे
वानांत्र्यायुषमितिदक्षिणांसे ॥ तन्मेअस्तुत्र्यायुषमितिवामांसे ॥ सर्वमस्तुशतायुषमितिशिरसीतिधारयेत् ॥
पुनःपरिसमूहनपर्युक्षणेकृत्वाकृतांजलिस्तिष्ठन् ॥ ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउ

पयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ स्वस्तिश्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआ
रोग्यंदेहिमेहव्यवाहनोन्नमइत्यग्निमुपस्थाय ॥ अग्नेरुत्तरतोगत्वाप्रत्यङ्मुखीभूयाचार्याभिमुखोभूत्वादक्षिण
जानुंभूतलेनिधायपाणिभ्यांयथासव्यदक्षिणंश्रोत्रेसंस्पृश्यव्यस्तपाणिराचार्यस्यदक्षिणपादंस्वदक्षिणहस्तेन
सव्यंचसव्यहस्तेनजानुप्रभृतिपादपर्यंतंस्पृष्ट्वाऽमुकगोत्रोमुकशर्माहंभोअभिवादयइत्युच्चारयन्शिरोवन
तिपूर्वकमभिवाद्याचार्येणायुष्मान्भवसौम्यदेवदत्ताइतिप्रयुक्ताशीर्वादोविनयावनतोभूत्वासाविन्युपदेशंवां
छन् अधीहिभोःसावित्रींभोऽनुब्रूहीत्याचार्यंप्रत्युक्त्वास्वबामपाणिमुत्तानीकृत्यदक्षिणपाणिंन्यङ्मुखी
कृत्यसंधायपाणिपृष्ठमंगुलीश्चांगुष्ठौचदृढीकृत्यकृतंब्रह्मांजालिंदक्षिणांकेनिक्षिप्याचार्यांतिकआसीत ॥ अ
थाचार्यस्तदंजलिंतत्परिधानीयवाससाआच्छाद्यस्वपाणिभ्यांतदंजलिंपरिगृह्यप्रणवव्याहृतिपूर्वकंसावित्रींप्र
थमंपादशःस्वयमुक्त्वावाचयेत् ॥ ततोर्धर्चशस्ततःसर्वाम्एवंग्रहणाशक्तौयथाशक्तिस्वयमुक्त्वावाचयेत् ॥
तद्यथा ॥ प्रणवस्यपरब्रह्मऋषिःपरमात्मादेवता ॥ दैवीगायत्रीछंदः ॥ व्याहृतिमंत्रस्यप्रजापतिःप्रजापति
र्बृहतीगायत्र्याविश्वामित्रःसवितागायत्री ॥ उपनयनेविनियोगः ॥ गायत्रींवाचयित्वा ॥ ततःममव्रतइति
मंत्रस्यप्रजापतिर्ऋषिः ॥ बृहस्पतिर्देवता ॥ त्रिष्टुप्छंदः ॥ बटोर्हृदयेऊर्ध्वांगुलिपाणिनिधानेविनियोगः ॥
ॐ ममंव्रतेहृदयंतेदधामिममंचित्तमनुचित्तंतेअस्तु ॥ ममवाचमेकव्रतोजुषस्वबृहस्पतिष्ट्वानियुनक्तुमह्य

मिति ॥ स्वपाणिमूर्ध्वांगुलिंब्रह्मचारिणोहृदयदेशेनिधायतस्यरक्षार्थंशुद्ध्यर्थंचमेखलामाबध्नीयात् ॥ इयंदु
रुक्तादितिद्वयोर्वामदेवोमेखलात्रिष्टुप् ॥ मेखलाबंधनेविनियोगः॥ॐइयंदुरुक्तात्परिबाधमानाच्छर्मवरूथंपुन
तीनआगात् ॥ प्राणापानाभ्यांबलमाभरंतीप्रियादेवानांसुभगामेखलेयं ॥ ऋतस्यगोप्त्रीतपसःपरस्पीघ्नती
रक्षःसहमानाअरातीः ॥ सानःसमंतमनुपरीहिभद्रयाभर्तारस्तेमेखलेमारिषामेतिमंत्रंवाचयित्वामेखलांत्रिराव
र्त्यनाभिप्रदेशेग्रंथित्रयंकुर्यात् ॥ तदाबटुःसरहस्यांगसहितवेदत्रयेणावृतोहमितिमन्येत ॥ ततस्तद्धर्मस्य
योगक्षेमार्थंअधर्मनिवृत्तयेचकेशसंमितंपलाशदंडंदद्यात् ॥ स्वस्तिनइत्यस्यस्वस्त्यात्रेयोविश्वेदेवात्रिष्टुप् ॥
दंडदानेविनियोगः ॥ ॐस्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यादितिरनर्वणः ॥ स्वस्तिपूषाऽअसुरोदधा
तुनःस्वस्तिद्यावापृथिवीसुचेतुना ॥ ततोबटोस्तद्ग्रहणेमंत्रः ॥ अदांतंदमयित्वामांमार्गेसंस्थापयन्स्वयं ॥
दंडःकरेस्थितोयस्मात्तस्माद्रक्षयतोभयमितिवाचयेत् ॥ ततःकुमारस्याचारमादिशेत् ॥ ब्रह्मचार्यसि
अपोशान ॥ शास्त्रविहितंआचमनंकुरु ॥ मूत्रपुरीषादौशुत्ध्यर्थमित्यर्थः ॥ कर्मकुरु ॥ संध्योपासनादिक
र्मकुर्वित्यर्थः ॥ दिवामास्वाप्सीः ॥ दिवानिद्रांनकुर्यादित्यर्थः ॥ आचार्याधीनोवेदमधीष्व ॥ सायंप्रातर्भिक्षे
थाः ॥ सायंप्रातःसमिधमाधेहि ॥ द्वादशवर्षाणिवेदग्रहणांतंवाब्रह्मचर्यंचरेति ॥ प्रैषार्थान्बोधयेत् ॥ ततः
स्विष्टकृदादिहोमशेषंसमाप्याग्निंमेधाजननांतंरक्षेत् ॥ तत्रैवसायंप्रातरग्निकार्यंकुर्यात् ॥ ततोनुप्रवचनीयहो

मन्नाह्मणभोजनपर्याप्तांतंडुलरूपांभिक्षांयाचयेत् ॥ भिक्षांभवतीतदात्विति ॥ इदंप्रथमभिक्षायाम् ॥ अन्यत्रभवच्छब्दःपूर्वम् ॥ अथवापितरं ॥ भिक्षांभवान्ददात्विति ॥ तत्रक्रमः ॥ भिक्षापात्रमादायादौमातरंभवतिभिक्षांददात्विति ॥ अथवापितरंभवान्भिक्षांददात्विति ॥ एवंमातुःस्वसारंस्वभगिनीमन्यानपिबांधवान्प्रत्याख्यायिनोप्रत्याख्यायिनीश्चयाचयित्वाभैक्ष्यमाचार्यायनिवेद्यबटुर्मध्याह्नसंध्यांकुर्यादितिप्रयोगपारिजाते ॥ नेतिकृष्णभट्टीकारः ॥ ततोब्राह्मणाशिषांग्रहणम् ॥ द्वेशतेशतंवाब्राह्मणाउपनयनेभोज्याः ॥ ततोगुरुसन्निधावचपलस्तिष्ठन्नहःशेषंनीत्वासायंवेदितसंध्यऔपनायनिकाग्नेरांतिकआसीनः ॥ प्राणानायम्यसायमग्निकार्यंकरिष्यइतिसंकल्प्य ॥ परिसमूहनपर्युक्षणेपूर्ववत्समिधमाधायत्रिर्मुखंपूर्ववदवमृज्यउक्तषणमंत्रैरुपस्थायमानस्तोकेतिभस्मादायत्र्यायुषमितितत्तत्स्थानेषुपूर्ववद्धृत्वापुनःपरिसमूहनपर्युक्षणेकृत्वाकृतांजलिस्तिष्ठन्नोंचमइत्युपतिष्ठेत ॥ ॥ इति उपनयन प्रयोगः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०० ॥ ॥ अथ समंत्रक अनुप्रवचनीयहोम विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥ अथअनुप्रवचनीयहोमप्रारंभः ॥ अथाचार्योऽस्तमितेग्नेःपश्चात्स्वासीनःप्राणानायम्यब्रह्मचारिणंदक्षिणतउपवेश्यतिथ्यादिसंकीर्त्यउपनयनांगभूतमनुप्रवचनीयहोमंकरिष्ये ॥ इतिसंकल्प्य ॥ अत्रकरिष्यमाणेऽनुप्रवचनीयहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्याद्याघारावाज्येनेत्यंतमुक्त्वाऽत्रप्रधानंसदसस्पतिंसवितारमृषीनितिप्रधा

नदेवताश्चरुद्रव्येणशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वाभुर्भुवःस्वःस्वाहेतिसमिधोहुत्वापरिसमूहनादिप्रणीताप्रणयनांतंकृत्वातद्भिक्षाद्रव्यंचतुरश्चतुरोमुष्टीन्तूष्णींदेवतात्रयस्यविप्रत्रयभोजनस्यचपर्याप्तंनिरूप्यतूष्णींप्रोक्ष्य त्रिःफलीकृत्य त्रिःप्रक्षाल्यश्रपयित्वाशृतःस्थालीपाकइत्याचार्यायनिवेदयेद्बटुःबटोरेवंकरणाशक्तौतद्बंधुनान्येनवाकारयेत् ॥ ततोब्रह्मचारिणान्वारब्धोगुरुराज्यसंस्काराद्याघारांतंकृत्वाप्रधानहोमंकुर्यात्अवदानधर्मेणावदाय ॥ सदसस्पतिमित्यस्यकाण्वोमेधातिथिः सदसस्पतिर्गायत्री ॥ अनुप्रवचनीयप्रधानहोमेविनियोगः ॥ ॐ सद॒स॒स्पति॒मद्भु॑तंप्रि॒यमिंद्र॑स्य॒काम्यं॑ ॥ स॒निं मे॒धाम॑याशि॒षं॑स्वाहा॑ ॥ सदसस्पतयइदंनमम ॥ तत्सवितुरित्यस्यगाथिनोविश्वामित्रःसवितागायत्री ॥ अनुप्रवचनीयहोमेविनियोगः ॥ तत्स॑वि॒तु० स्वाहा॑ ॥ सवित्रइदंनमम ॥ ॐ ऋषिभ्यःस्वाहा ॥ ऋषिभ्यइदंनमम ॥ एवंत्रिभिर्मंत्रैर्हुत्वास्विष्टकृदादिहोमशषंसमाप्यतदवशिष्टान्नेनत्र्यवरान्ब्राह्मणान्भोजयित्वातैर्वेदसमाप्तिंवाचयेत् ॥ ततोब्रह्मचार्यक्षारालवणमन्नंभुक्त्वाधःशयीत ॥ मेधाजननंयावत्तावदेवगुरुंप्रसादयन्वर्तेत ॥ यदागर्जनाद्यनध्यायशंकातदादिवैवचरुंश्रपयेत् ॥ होमस्तुसायंसंध्योत्तरमेवतदानानध्यायदोषः ॥ तदुक्तंसंग्रहे--नसंध्यागर्जितेकालेनवृष्ट्युत्पातदूषिते ॥ ब्रह्मौदनंपचेदग्नौपक्वंचेन्ननिवर्तते ॥ तथा ॥ ब्रह्मौदनंपचेदन्हिपक्वमन्नंनदुष्यति ॥ तथाचोपनयनानुप्रवचनीयचरुश्रपणयोरंतरानध्यायेपुनरुपनयनम् ॥ एवंप्रयोगःस्वस्वकालकृतसंस्कारस्य ॥ असंस्कृतस्यतुविशेषउच्यते ॥ आचार्यउपनयनात्पूर्वदिनेबटुनासहमं

गलस्नातः ॥ प्राणानायम्यतिथ्यादिसंकीर्त्यममकुमारस्यगर्भाधानपुंसवनसीमंतविष्णुबलिजातकर्मनामकर
णनिष्क्रमणान्नप्राशनचौलांतानांनवसंस्काराणांकालातिपत्तिदोषपरिहारप्रायश्चित्तद्वाराश्रीपरमेश्वरप्रीत्यर्थं
प्रायश्चित्तहोमंकरिष्यइतिसंकल्प्योपलेपादिपूर्णपात्रनिधानांतंकृत्वाविधिवदाज्यंसंस्कृत्याधारांतंकृत्वातीत
कर्मसंख्यया ॥ ॐभूर्भुवःस्वःस्वाहेत्याज्याहुतीर्हुत्वास्विष्टकृदादिहोमशेषंसमाप्यचौलातिरिक्तसंस्का
राणांप्रमादकरणेप्रत्येकंपादकृच्छ्रंचौलकरणेर्धकृच्छ्रंबुद्धिपूर्वकचौलातिरिक्ताकरणेप्रत्येकमर्धकृच्छ्रंबटुनाकार
येत् ॥ अशक्तौतत्प्रत्याम्नायत्वेनगोदानतिलाहुतिसहस्रदशसहस्रगायत्रीजपद्वादशब्राह्मणभोजनादिष्वेकं
प्रायश्चित्तंकारयित्वाऽतीतानिजातकर्मादीनिकृत्वापूर्वोक्तप्रकारेणोपनयनंतंत्रंसर्वमाचरेत् ॥उपनयनेनसहचौ
लकरणेपूर्वेद्युःसंस्कारद्वयंसंकीर्त्ययुगपत्स्वस्तिवाचनग्रहयज्ञनांदीश्राद्धानिकृत्वापरेद्युर्मंगलस्नानादिव्रीह्या
दिपात्रचतुष्टयदानांतंपूर्वोक्तंचौलप्रयोगंसर्वंकृत्वापुनस्तिथ्यादिसंकीर्त्यउपनयनसंकल्पाद्यनुप्रवचनीयहोमांतं
सर्वंकार्यं ॥ ॥ इति अनुप्रवचनीयहोमः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ १०१ ॥ ॥ अथ समंत्रक मेधाजननप्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ प्रागुक्तक्रमेणाचरितव्रतस्यब्रह्मचारिणोमेधासिद्ध्यर्थआचार्यश्चतुर्थदिवसेमेधाजन
नाख्यंकर्मकुर्यात् ॥ तत्रायंक्रमः ॥ प्रत्यग्वायव्योदक्प्रागुदक्पूर्वान्यतमस्यांदिशिशाखावर्जितंपलाशंतद
भावेसशाखंवातदभावेकुशस्तंबंवातदसंभवेगृहऐशानदिग्भागेसर्वतोद्वादशांगुलांत्रिमेखलांवेदींकृत्वातस्यां



पत्रांकुरसमन्वितामार्द्रांपलाशशाखांसमूलंकुशस्तंबंवाप्रतिष्ठाप्यब्रह्मचारिणान्वारब्धःसंकल्पपूर्वकंपूजांकु
र्यात् ॥ तत्रक्रमः ॥ तिथ्यादिसंकीर्त्यममकुमारस्योपनयनव्रतसमाप्तिंवेदग्रहणसामर्थ्यलक्षणमेधासिद्धि
द्वाराश्रीपरमेश्वरप्रीत्यर्थंमेधाजननाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्य ॥ पलाशशाखायांमेधायैनमइतिनाम
मंत्रेणावाहनाद्युपचारान्कृत्वायावकसक्तुमोदकमिश्रमन्नंनिवेद्यपुनश्चपूर्ववदभ्यर्च्यब्रह्मचारिणाप्रणमय्यशु
द्धजलपात्रोदकेनसेचनंकुर्वताबटुनात्रिःप्रदक्षिणांकारयन्मंत्रंवाचयेत्प्रणामयेच्च ॥ ॐसुश्रवःसुश्रवाअसि
यथात्वंसुश्रवःसुश्रवाअस्येवंमांसुश्रवःसौश्रवसंकुरु ॥ यथात्वंदेवानांयज्ञस्यनिधिपोस्येवमहंमनुष्याणांवेद
स्यनिधिपोभूयासमितिप्रतिप्रदक्षिणंमंत्रावृत्तिंप्रणामंचकारयेत् ॥ ततोब्रह्मचारीस्नात्वानवयज्ञोपवीताजिन
मेखलादंडाद्युपनयनवत्समंत्रकंधृत्वापुराणानिपलाशसंनिधौविसृज्यपूर्ववद्धृतवाससीगुरवेदत्त्वामेधामह्यमि
तिसूक्तंविप्रैःपाठयित्वाविधिवत्स्वस्तिवाचनंकृत्वाब्राह्मणेभ्योदक्षिणांयथाशक्तिदत्त्वातान्भोजयित्वानमस्कृ
त्याशिषोगृण्हीयात् ॥ अथमेधामह्यमितिसूक्तं ॥ ॐमेधामह्यमंगिरसोमेधांसप्तऋषयोददुः ॥ मेधामिंद्र
श्चाग्निश्चमेधांधातादधातुते ॥ मेधांतेवरुणोराजामेधांदेवीसरस्वती ॥ मेधांतेअश्विनौदेवावाधत्तांपुष्करस्र
जा ॥ यांमेधाअप्सरसोगंधर्वेषुचयन्मनः ॥ दैवीयामानुषीमेधासामायाविशतादिमाम् ॥ यन्मेनोक्तंतद्रम
तांशकेयंयदनुब्रुवे ॥ निशामतन्निशामयेमयिव्रतंसहव्रतेषुभूयासंब्रह्मणासंगमेमहि ॥ शरीरंमेविचर्षणंवा

इ॒मे॒मधुं॒मदुहां॒म् ॥ अहं॒द्ध॒महमसौ॒सू॒र्यो॒ब्र॒ह्मणा॒नीरथः॒श्रु॒तंमेमाप्र॒हासीत् ॥ मे॒धादे॒वीमन॑सारेजमानागंध॒र्व जुष्टांप्रति॑नोजुषस्व ॥ मह्यंमे॒धांवद॒मह्यांश्रि॒यंवद॒मेधावीभूयासम॒जराजरि॒ष्णु ॥ सद॑सस्पतिमद्भुतंप्रि॒यमिंद्र॑स्य॒काम्यं॑ ॥ स॒निंमे॒धाम॑याशिषं ॥ यांमे॒धांदे॑वग॒णाःपि॒तरश्चो॒पासते ॥ तया॒माम॒द्य मेधयामामेधाविनंकुरु ॥ मे॒धाव्यं॑सु॒मनाःसु॒प्रतीकःश्र॒द्धाम॑नाःस॒त्यम॒तिःसु॒शेवः ॥ म॒हाय॒शाधा॒रयि॒ष्णुःप्र॒यु॒क्ताभूयासम॒स्यैस्वध॒याप्रयो॒गे ॥ ॥ इति मेधाजननप्रयोगः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०२ ॥ ॥ अथ समंत्रक ब्रह्मचारीव्रतलोपप्रायश्चित्त प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथब्रह्मचारीव्रतलोपप्रायश्चित्तप्रारंभः ॥ तत्रबौधायनः ॥ अत्रशौचाचमनसंध्यावंदनदर्भपाणिभिक्षाअग्निकार्यराहित्यशूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलादंडाजिनत्यागादिवास्वापछत्रधारणपादुकाध्यारोहणमालाधारणोद्वर्तनाऽनुलेपांजनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखंडादिसंभाषणपर्युषितभोजनादिब्रह्मचारीव्रतलोपजसकलदोषपरिहारार्थंब्रह्मचारीकृच्छ्रत्रयंचरेन्महाव्याहृतिहोमंचकुर्यात् ॥ तद्यथा ॥ लौकिकाग्निंप्रतिष्ठाप्यान्वाधानाद्याज्यभागांतंकृत्वाप्रथमंव्यस्तसमस्तव्याहृतिभिश्चतस्रआज्याहुतीर्हुत्वा ॥ ॐभूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥ १ ॥ ॐभुवोवायवेचांतरिक्षायमहतेचस्वाहा ॥२॥ ॐसुवरादित्यायचदिवेचमहतेचस्वाहा ॥३॥ ॐभूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चमहतेचस्वाहा ॥ ४ ॥ ॐपाहिनोअग्नएनसेस्वाहा ॥ ५ ॥ ॐपाहिनोविश्ववेदसेस्वाहा ॥ ६ ॥ ॐ यज्ञंपाहिविभावसोस्वाहा ॥ ७ ॥ ॐ सर्वंपाहिशतक्रतोस्वाहा ॥ ८ ॥ ॐ पुन॑रू॒र्जानिवर्तस्व॒पुन॑रग्न॒इ॒षायुषा ॥ पुन॑र्नः॒पाह्यंह॑सः॒स्वाहा ॥ ९ ॥ ॐ सहरय्यानिवर्तस्वाग्नेपिन्वधारया ॥ विश्वप्स्न्याविश्वतस्परिस्वाहा ॥ १० ॥ पुनर्व्याहृतिभिर्हुत्वास्विष्टकृदादिहोमशेषंसमापयेदिति ॥ एतदल्पधर्मलोपेप्रायश्चित्तं ॥ बहुधर्मलोपेतुप्रायश्चित्तविशेषोऋग्विधानेशौनकेनोक्तः ॥ तंवोधियाजपेन्मंत्रंलक्षंचैवशिवालये ॥ ब्रह्मचारीस्वधर्मंचन्यूनंचेत्पूर्णमेवतदिति ॥ महानाम्न्यादिव्रतेषुलुप्तेषुतारतम्येनत्रीन्षट्द्वादशवाकृच्छ्रान्कृत्वापुनर्व्रतंप्रारभेतेतिस्मृत्यर्थसारे ॥ ॥ इति ब्रह्मचारीव्रतलोपप्रायश्चित्तं समाप्तं ॥ ॥ छ ॥

## ॥ १०३ ॥ ॥ अथ समंत्रक समावर्तन प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथसमावर्तनप्रयोगप्रारंभः ॥ आचरितब्रह्मचारीनियममहानाम्न्यादिव्रतचतुष्टयोब्रह्मचारीविद्यांतेगुरुमर्थंदानेनसंपूज्य तेनानुज्ञातोज्योर्विदोक्तेशुभकालेआचार्यगृहेसमावर्तनंनामकर्मकुर्यात् ॥ ब्रह्मचारीनियमव्रतचतुष्टयलोपपक्षेप्रायश्चित्तंकृत्वाशुद्धःसन्निदंकुर्यात्तत्रायंक्रमः ॥ पूर्वेद्युस्तिथ्यादिसंकीर्त्यममशौचाचमनादिसर्वब्रह्मचर्यनियमलोपप्रायश्चित्तद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमपूर्वकंकृच्छ्रत्रयमाचरिष्ये ॥ इतिसंकल्प्य ॥ लौकिकाग्निंप्रतिष्ठाप्याज्यहोमधर्मेणान्वाधानपूर्वकंपूर्वोक्ताष्टादशाज्याहुती

हुत्वाकृच्छ्रत्रयप्रत्याम्नायत्वेनकल्पितगोदानसहस्रतिलहोमदशसहस्रगायत्रीजपादिष्वन्यतमंचरित्वाहो
मशेषंसमापयेत् ॥ महानाम्न्यादिव्रतलोपपक्षेप्रत्येकंगायत्र्याशतसंख्याष्टाविंशतिमष्टौवाज्याहुतीर्हुत्वाएकै
कंकृच्छ्रंचरित्वाशुभदिनेमहानाम्नीव्रतंकृत्वातथैवमहाव्रतादिव्रतत्रयंकृत्वागुरवेदक्षिणांदत्वातेनानुज्ञातो म
ण्यादीन्येकादशोपकल्पयेत् ॥ तानिचमणिंकुंडलेवस्त्रयुगंछत्रमुपानद्युगंदंडंस्रजमेकवींजंकरंजफलपिष्टं
श्रीखंडाद्यनुलेपनमंजनमुष्णीषामिति ॥ एतान्यात्मनेचाचार्यायच ॥ यद्युभयोर्नविंदेताचार्यायैवसंपाद्या
नि ॥ यस्मिन्नहनिसमावर्तनंतस्मिन् प्रातरपराजितांदिशंगत्वायज्ञियवृक्षस्यैशानींशाखांछित्वाआत्मप्रादेशसं
मितांसमिधमाहृत्यभूमेरन्यत्रोपरिनिदध्यात् ॥ तत्रक्रमः ॥ ब्रह्मचारीकृतनित्यक्रियःकृतप्रातरग्निकार्य
श्चप्राणानायम्यतिथ्यादिसंकीर्त्यममगृहस्थाद्याश्रमांतरप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसमावर्तनंकरिष्ये ॥ इ
तिसंकल्प्य ॥ तदंगभूतस्वस्तिवाचनांकुरार्पणंग्रहयज्ञाभ्युदयिकानिसंकल्पपूर्वकंकृत्वाप्रागुक्तलक्षणांसमि
धमाहृत्योपरिनिधायब्रह्म वर्यव्रतसंपूर्तयेब्राह्मणायगांदत्त्वाद्विजान् भोजयित्वाविधिवत्कौतुकमाबध्यशुभका
लेस्थंडिलोल्लेखनाद्यग्निप्रतिष्ठापनांतंकृत्वापुनर्देशकालौनिर्दिश्यमयाक्रियमाणेसमावर्तनहोमेदेवतापरिग्रहा
र्थमन्वाधानंकरिष्ये ॥ अस्मिमन्वाहितेग्नावित्याद्याघारावाज्येनेत्यंतमुक्त्वात्रिवारमग्निंपवमानंप्रजापतिंचैताः
प्रधानदेवताआज्येनअग्निर्मूर्धसमिधाविश्वान्देवान्दशसमिद्भिःशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमु
क्त्वासमिद्द्वयमग्नावाधायपूर्णपात्रनिधानांतंपुरस्तनंतंत्रमनुष्ठायोदगग्नेरास्तीर्णेषुदर्भेपुव्रीहियवमाषतिलैःपृथ

क्पूरितानिचत्वारिशरावाणिक्रमेणैकैकशःप्राक्संस्थान्यासादयेत् ॥ ताम्रमयंलोहंवाक्षुरंशीतमुष्णंचोदकं
नवनीतंदधिद्रप्सान्वामण्याद्येकविंशद्रव्याणिचाग्नेरुत्तरतआसादयेत् ॥ ततःप्रत्यगग्नेरासीनस्यकर्तुर्दक्षिण
तोमाताप्राङ्मुख्यासीततस्यापुरःअग्नेःपश्चादेकस्मिन्शरावेशमीपर्णान्यपरस्मिन्आनडुहंगोमयमासादये
त् ॥ ततोब्रह्मैकविंशतिकुशांकुरान्दधानोमातुर्दक्षिणतस्तिष्ठेत् ॥ ततोब्रह्मचारीपुरस्तनंतंत्रमाघारांतंकृत्वा
अग्नऽआयूंषीतितिसृणांशतंवैखानसाऋषयः ॥ अग्निःपवमानोग्निर्गायत्री ॥ प्रधानाज्यहोमेविनियोगः ॥ॐ
अग्नआयूंषिपवसऽआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनांस्वाहा ॥ अग्नयेपवमानायेदंनमम ॥ इति
मंत्रेणत्यागः ॥ एवमग्रेपि ॥ ॐअग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः ॥ तमीमहेमहागयंस्वाहा ॥२ ॥
ॐअग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं ॥ दधद्रयिंमयिपोषंस्वाहा ॥ ३ ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रि
ष्टुप् ॥प्रधानाज्यहोमेविनियोगः ॥ ॐप्रजापतेनत्वदेतांन्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजु
हुमस्तन्नोऽअस्तुवयंस्यामपतयोरयीणांस्वाहा ॥ प्रजापतयइदंनमम ॥ ततोब्रह्माशीतोष्णवारिणीपात्रा
भ्यांपृथगानीयबटोःपश्चिमदेशेस्थित्वातदुदकमन्यस्मिन्पात्रे ॥ ॐ उष्णेनवायउदकेनेहीतिमंत्रेणयुगपन्नि
नीय तैदेकदेशंगृहीत्वानवनीतेनदध्नावामिश्रयित्वा ॥ बटोर्वामश्मश्रुप्रदेशमारभ्यप्रदक्षिणम् ॥ ॐ अदि

तिःश्मश्रूणिवपत्वापउंदंतुजीवसे ॥ इतिमंत्रंप्रतिक्लेदनमावर्तयन्त्रिवारंश्मश्रूण्येवक्लेदयित्वा ॥ स्वहस्तास्थि
तेष्वेकविंशतिकुशांकुरेषुत्रीनंकुरानादाय दक्षिणश्मश्रुभागंब्रह्मचार्यभिमुखंप्रश्रिमाग्रंनिदध्यात् ॥ तदाब्र
ह्मचारी ॥ ॐओषधेत्रायस्वमामितिजपेत् ॥ततोब्रह्मातेषुकुशांकुरेषुताम्रमयंक्षुरंनिदध्यात् ॥ तदाब्रह्मचारी
ॐस्वधितेमामाहिंसीः ॥ येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान्॥ तेनब्रह्माणोवपतेदमस्यायुष्मा
न्जरदष्टिर्यथासदितिजपेत् ॥ ततोब्रह्मचारिणायेनावपदितिमंत्रेउच्चारितेब्रह्मासश्मश्रुकान्कुशांकुरांश्छि
त्वातानंकुरान्प्रागग्रान्शरावस्थशमीपर्णैःसहैकीकृत्यमातुःकरेदद्यात् ॥साचतान्सश्मश्रुशमीपर्णकुशांकुरा
नानडुहेगोमयेनिदध्यात् ॥ एवंद्वितीयादिच्छेदनेषुकुशांकुरत्रयनिधानादिसमंत्रकंकार्यं ॥ छेदनमंत्रेतुविशे
षः ॥ ॐ येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ नेनतआयुषेवपामिसुश्लोक्यायस्वस्तये ॥ इतिद्विती
यच्छेदनेमंत्रः ॥ ॐ येनभूयश्चराञ्यांज्योक्चपश्यातिसूर्यं ॥ तेनतआयुषेवपामिसुश्लोक्यायस्वस्तये ॥ इ
तितृतीयच्छेदने ॥ चतुर्थेतु ॥ ॐ येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान्॥ तेनब्रह्माणोवपतेदम
स्यायुष्मान्जरदष्टिर्यथासत् ॥ ॐ येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनतआयुषेवपामिसुश्लोक्या
यस्वस्तये ॥ ॐ येनभूयश्चराञ्यांज्योक्चपश्यातिसूर्यं ॥ तेनतआयुषेवपामिसुश्लोक्यायस्वस्तये ॥ इति
त्रयोपिमंत्राः ॥ एवंदक्षिणश्मश्रुभागे चत्वारिच्छेदनानिकृत्वोत्तरश्मश्रुभागेप्यनयारीत्याचत्वारिच्छेदना
निप्रत्येकंमंत्रैः कुर्यात् ॥ सर्वमंत्रैश्चतुर्थं ॥ ततःक्षुरधारां ॥ यत्क्षुरेणमर्चयतासुपेशसावप्तावपासिकेशान् ॥

शुंधिशिरोमुखंमास्यायुः प्रमोषीरिति अनेनाग्रतआरभ्यामूलमवमृज्यनापितमाहूय ॥ शीतोष्णाभिरद्भिरब
र्थंकुर्वाणोक्षण्वन्कुशलीकुर्विति प्रैषेणानुशास्यप्रैषार्थंचावबोध्यनापितेनपूर्वावशेषितशीतोष्णांबुभिरार्द्रीकृ
त्यकेशश्मश्रुलोमनखान्युदक्संस्थानिवापयित्वातद्व्रीह्यादिशरावचतुष्टयंनापितायदद्यात् ॥ ततः करं
जपिष्टेनस्वशरीरमुद्वर्त्यशीतोष्णैरुदकैः स्नात्वा द्विराचम्यपुनर्वन्हेरंतिकंगत्वाएकंवस्त्रंसमंत्रकंपरिधायान्यद्व
स्त्रंप्रावृणुयात् ॥ तत्रमंत्रः ॥ युवंवस्त्राणीत्यस्यदीर्घतमामित्रावरुणौत्रिष्टुप् ॥ वासोधारणेविनियोगः ॥ ॐ यु
वंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः ॥ अवातिरतमनृतानिविश्वंऋतेनमित्रावरुणासचेथे ॥
ततोद्विराचम्यपाणिनाजलमादाय ॥ ॐअश्मनस्तजोसिचक्षुर्मेपाहीतिमंत्रावृत्त्यासव्यदक्षिण चक्षुषीक्रमेणां
क्त्वा॥तथैव ॥ ॐअश्मनस्तेजोसिश्रोत्रंमेपाहीत्यनेन कुंडलाभ्यांदक्षिणसव्येश्रोत्रेअलंकृत्यकुंकुमाद्यनुलिप्ता
भ्यांपाणिभ्यांपूर्वंमुखमनुलिप्यपश्चादितरांगान्यनुलिप्यकरौप्रक्षाल्य ॥ ॐ अनातांस्यनातोंहंभूयासमित्यनेन
शिरसिस्रजंबद्ध्वा ॥ॐ देवानांप्रतिष्ठेस्थःसर्वतोमापातमित्यनेन चर्ममय्यावुपानहौदक्षिणसव्यपादाभ्यामा
रुह्य ॥ ॐ दिवइछन्नासीतिमंत्रेणछत्रंधृत्वा ॥ ॐवेणुरसिवानस्पत्योसिसर्वतोमांपाहीतिवैणवंदंडंगृहीत्वा ॥
आयुष्यमितिसूक्तेनसुवर्णमणिंकंठेबध्नीयात् ॥ आयुष्यमितिसूक्तस्यसनकसनंदनसनातनादयऋषयः ॥
हैरण्यंदेवता ॥ आद्याश्चतस्रोनुष्टुभः ॥ पंचमीत्रिष्टुप् ॥ षष्ठ्यनुष्टुप् सप्तमीशाक्करी अष्टमीनवम्यौत्रिष्टुभौ

दशम्यनुष्टुबेकादशीजगती ॥ कंठेमणिधारणेविनियोगः ॥ ॐ आयुष्यंवर्चस्यंरायस्पोषमौद्भिदं ॥ इदंहि
रण्यंवर्चस्वज्जैत्रायाविशतादिमां ॥ उच्चैर्वाजिपृतनाषाट्सभासाहंधनंजयं ॥ सर्वाःसमग्राऋद्धयोहिरण्ये
स्मिन्त्समाहिताः ॥ शुनमहंहिरण्यस्यपितुर्नामेवजग्रभं ॥ तेनमांसूर्यत्वचमकरंपुरुषुप्रियं ॥ सम्राजंचवि
राजंचाभिष्टिर्याचमेध्रुवा ॥ लक्ष्मीराष्ट्रस्ययामुखेतयामामिंद्रसंसृज ॥ अग्नेःप्रजातंपरियद्धिरण्यममृतंजज्ञे
अधिमर्त्येषु ॥ यएनद्वेदसइदेनदर्हतिजरामृत्युर्भवतियोबिभर्ति ॥ यद्वेदराजावरुणोयदुदेवीसरस्वती ॥
इंद्रोयद्वृत्रहावेदतन्मेवर्चसआयुषे ॥ नतद्रक्षांसिनपिशाचास्तरंतिदेवानामोजः प्रथमजंह्येतत् ॥
योबिभर्तिदाक्षायणाहिरण्यंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ यदाबध्नंदाक्षायणाहिरण्यं
शतानीकायसुमनस्यमाना ॥ तन्मआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासत् ॥ घृतादुल्लुप्तंमधु
मत्सुवर्णंधनंजयंधरुणंधारयिष्णु ॥ ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय ॥ प्रियंमाकुरुदेवेषु
प्रियंराजसुमाकुरु ॥ प्रियंविश्वेषुगोप्तेषुमयिधेहिरुचारुचं ॥ अग्निर्येनविराजतिसूर्योयेनविराजति ॥ वि
राज्येनविराजतितेनास्मान्ब्रह्मणस्पतेविराजसमिधंकुरु ॥ ॥ अनंतरमुष्णीषेणप्रादक्षिण्येनशिरःसंवेष्ट्य
उपानहौसंत्यज्यउपरिनिहितांप्रागुक्तांसामिधंगृहीत्वातिष्ठन्नेवस्मृतंचमेइत्यादीन्स्वाहांतान्मंत्रानुक्त्वाग्ना

वादध्यात् ॥ एषांमंत्राणांप्रजापतिरग्निरृषिः ॥ समिदाधानेविनियोगः ॥ ॐ स्मृतंचमे अस्मृतंचमेतन्मउ
भयव्रतं ॥ निंदाचमे अनिंदाचमेतन्मउभयव्रतं ॥ विद्याचमे अविद्याचमेतन्मउभयव्रतं ॥ श्रद्धाचमेअ
श्रद्धाचमेतन्मउभयव्रतं ॥ प्रज्ञाचमेअप्रज्ञाचमेतन्मउभयव्रतं ॥ इष्टंचमेअनिष्टंचमेतन्मउभयव्रतं ॥ दत्तं
चमेअदत्तंचमेतन्मउभयव्रतं॥अधीतंचमेअनधीतंचमेतन्मउभयव्रतं ॥कृतंचमेअकृतंचमेतन्मउभयव्रतं॥स
त्यंचमेअसत्यंचमेतन्मउभयव्रतं ॥ श्रुतंचमेअश्रुतंचमेतन्मउभयव्रतं ॥ व्रतंचमेअव्रतंचमेतन्मउभय
व्रतं ॥ यदग्नेसेंद्रस्यसप्रजापतिकस्यसऋषिकस्यसऋषिराजन्यस्यसपितृकस्यसपितृराजन्यस्यसमनुष्य
स्यसमनुष्यराजन्यस्यसाकाशस्यसातीकाशस्यसानूकाशस्यसप्रतीकाशस्यसदेवमनुष्यस्यसगंधर्वाप्सरस्क
स्यसहारण्यैश्चपशुभिर्ग्राम्यैश्चयन्मआत्मनआत्मनिव्रतंतन्मेसर्वव्रतमिदमहमग्नेसर्वव्रतोभवामिस्वाहेति ॥
अग्नयइदंनमम ॥ अथोपविश्यान्याःप्रादेशसंमितादशसमिधोममाग्नेवर्चोविहवेष्वित्यनेनसूक्तेन प्रत्यृचंऋ
गंतेवाग्नावादध्यात् ॥ पश्चात्स्वाहाकारमुच्चारयेत् ॥ अस्यसूक्तस्यविहव्यऋषिः ॥ विश्वेदेवादेवता ॥
आद्याजगत्यन्यास्त्रिष्टुभः ॥ समिदाधानेविनियोगः ॥ ॐ ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधानास्तन्वंपुषेम ॥
मह्यंनमंतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेमस्वाहा ॥ १ ॥ विश्वेभ्योदेवेभ्यइदंनमम ॥ एवमग्रेपि ॥
ॐ ममदेवाविहवेसंतुसर्वइंद्रवंतोमरुतोविष्णुरग्निः ॥ ममांतरिक्षमुरुलोकमस्तुमह्यंवातःपवतांकामेअस्मि

न्स्वाहा ॥ २ ॥ ॐ मयिदेवा द्रविणमायजंतां मय्याशीरस्तु मयिदेवहूतिः ॥ दैव्याहोतारोवनुषंतपूर्वेरिष्टास्या
मतन्वासुवीरास्वाहा ॥३॥ ॐ मह्यंयजंतुममयानिहव्याकूतिः सत्यामनसोमेअस्तु ॥ एनोमानिगांकतमच्चना
हंविश्वेदेवासोअधिवोचतानःस्वाहा ॥४॥ ॐ देवीःषळुर्वीरुरुनःकृणोतविश्वेदेवासइहवीरयध्वं ॥ माहा
स्महिप्रजयामातनूभिर्मारधामद्विषतेसोमराजन्स्वाहा ॥ ५ ॥ ॐ अग्नेमन्युंप्रतिनुदन्परेषामदब्धोगोपाःप
रिपाहिनस्त्वं ॥ प्रत्यं वोयंतुनिगुतःपुनस्ते ३ मैषांचित्तंप्रबुधांविनेशत्स्वाहा॥६॥ॐ धाताधातॄणांभुवनस्ययस्प
तिर्देवंत्रातारमभिमातिषाहं ॥ इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपांतुयजमानंन्यर्थात्स्वाहा ॥ ७ ॥ ॐ उरु
व्यचानोमहिषःशर्मयंसदस्मिन्हवेपुरुहूतःपुरुक्षुः ॥ सनःप्रजायैहर्यश्वमृळयेंद्रमानोरीरिषोमापरादाःस्वाहा ॥
॥ ८ ॥ ॐ येनःसपत्नाअपतेभवंत्विंद्राग्निभ्यामवबाधामहेतान् ॥ वसवोरुद्राआदित्याउपरिस्पृशंमोग्रंचे
त्तारमधिराजमक्रन्स्वाहा ॥ ९ ॥ ॐ अर्वांचमिंद्रममुतोहवामहेयोगोजिद्धनजिदश्वजिद्यः ॥ इमंनोयज्ञं
विहवेजुषस्वास्यकुर्मोहरिवोमेदिनंत्वास्वाहा ॥ १० ॥ इतिदशमंत्राः ॥ ततःस्विष्टकृदादिहोमशेषंसमा
पयेत् ॥ ततः स्नातकोनैमित्तिकंविनानक्तंनग्नश्चनस्नामिनग्नांस्त्रियंनेक्षेवर्षतिनधावामिवृक्षंनारोहामिकूपं
नावरोहामिनबाहुभ्यांनदींतरेप्राणसंशयंनाभ्यापद्ये इत्येवंसंकल्पयेत् ॥ ततःकौपीनंमेखलांचविसृजेत् ॥



केशश्मश्रुनखलोमान्यपराजितायांदिशिनिखनति ॥ ततोयत्रमधुपर्कादिपूजायस्यसंभवतीतितत्रैतांरात्रिंव
सेत् ॥ समावर्तनानंतरंत्रिरात्रमाशौचंकुर्यात् ॥ इति समावर्तन प्रयोगःसमाप्तः ॥छ॥ ॥छ॥

॥ १०४ ॥ ॥ अथ विवाहेवरकन्यावरणनिर्णयप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ श्रीसरस्वत्यैनमः ॥ तत्रनात्रत्तदुपयोगितयाकिंचित्संक्षेपेणोच्यते ॥ अनाश्रमीन
तिष्ठेत्तदिनमेकमपिद्विजः ॥ आश्रमेणविनातिष्ठन्प्रायश्चित्तीयतेहिसइतिदक्षस्मृतेः ॥ गुरवेतुवरंदत्वास्ना
यीतत्तदनुज्ञया ॥ वेदव्रतानिवापारंनीत्वाह्युभयमेववा ॥ अविप्लुतब्रह्मचर्योलक्षण्यांस्त्रियमुद्वहेत् ॥ अनन्य
पूर्विकांकांतामसपिंडांयवीयसीं ॥ अरोगिणींभ्रातृमतीमसमानार्षगोत्रजामितिचयाज्ञवल्क्योक्तेस्त्रिविधोपि
वेदव्रतोभयस्नातकोऽविलंबेनलक्षणादिनाशिष्टांस्त्रियंनपुंसकव्यावृत्तयेस्त्रीत्वेनपरीक्षितामुद्वहेत् ॥ तत्रापिकु
लमग्रेपरीक्षेतेतिगृह्यवचनाद्दादौसदाचारादिगुणवत्तयाहीनक्रियारोगादिदोषहीनतया चपरीक्ष्यकुलंतच्चोद्वा
ह्या ॥ तदनुलक्षणादपिपरीक्ष्यलक्षणानिचशुभाशुभसूचकानितनुलोमकेशदशनत्वादीनिप्रत्यक्षगम्यानि
बाह्यान्यांतराणिचाष्टौपिंडान्कृत्वेत्यादिनागृह्योक्तानिविविधान्यपिमहाग्रंथेभ्योज्ञेयानिविस्तरभियात्विहनो
च्यंते ॥ दानेनोपभोगेनवापुरुषांतरपूर्विकानभवतितामनन्यपूर्विकांतामनेनवाकदत्तामनोदत्तामग्निपरिगतास
प्तमपदंनीताभुक्तागृहीतगर्भाप्रसूतावेतिसप्तपुनर्भुवोव्यावर्त्यंतेकांतांवोढुर्मनोनयनयोराह्लादकरींसमानए
कःपिंडःपिंडदानक्रियामूलपुरुषशरीरंवायस्यानविद्यतेसाऽसपिंडातां कथंचिदेकपिंडक्रियानुप्रवेशेननिर्वा

प्यसापिंड्यंकेचिदाहुः ॥ एकशरीरावयवान्वयेनावयवसापिंड्यंविज्ञानेश्वरादयोनिर्दोषंमेनिरे ॥ अत्रबहुत
तरंवक्तव्यंविचाररत्नतापत्याप्रयोगरत्नताभंगभीत्यानोच्यते ॥ नन्वेवंविधातृशरीरावयवान्वयेनसापिंड्या
तिप्रसंगेननकाप्यसपिंडेत्यतआहयाज्ञवल्क्यः ॥ पंचमात्सप्तमादूर्ध्वंमातृतःपितृतस्तथेतिमातृपक्षेपंच
मातृपितृपक्षेसप्तमादूर्ध्वंसापिंड्यंनिवर्ततइतिविशेषः ॥ कूटस्थमारभ्यात्रगणना ॥ तदुक्तं ॥ वध्वावरस्य
वातातःकूटस्थाद्यदिसप्तमः ॥ पंचमीचेत्तयोर्मातातत्सापिंड्यंनिवर्ततइति ॥ कूटस्थोमूलपुरुषः ॥ यतः
संतानभेदःसमूलपुरुषः ॥ एवंचमातृपितृद्वारकसापिंड्यवतीनांकन्यकानामियंसंख्यासंकलना ॥ उद्वोढौ
पितरौपितुश्चानितरौतज्जन्मकृद्दंपतीद्वंद्वंतस्यचतुष्कमष्टकमतोप्यस्यक्रमात्षोडशं ॥ वंशारंभकदंपतीप्रमि
तिरित्यासप्तकक्ष्यंरदाएकैकान्वयकन्यकाःपितृकुलेत्वासप्तकक्ष्यंब्रुवे ॥ १ ॥ यद्यप्येकस्यबव्ह्योपिसुताः
स्युस्तदपीहनु ॥ संबंधसाम्यादेकैवगणितेत्यवधार्यताम् ॥ २ ॥ एकस्मान्मिथुनात्सुतोथदुहिताद्वंद्वद्वयंत
द्वयात्तस्माद्वंद्वचतुष्कमष्टचततोतःषोडशातोरदाः ॥ यावत्सप्तमकक्ष्यमग्निऋतवःकन्याइहैकान्वयेसादंतै
र्गुणितारसैकखदशोवंशेसपिंडाःपितुः ॥ ३ ॥ मातुर्जन्मचदंपतीचमिथुनद्वंद्वंतयोःसागरास्तस्यापंचमक
क्ष्यमश्वमतिरित्येकान्वयःपुंसुते ॥ द्वंद्वाद्वंद्वयुगंततोब्धयइतोष्टापंचकक्ष्यंशरःक्षोण्यःसप्तगुणाःशराभ्रविधवो
मातुःसपिंडाःकुले ॥ ४ ॥ कुलद्वयस्यकन्यकायुतामिथःसपिंडकाःहिमांशुदग्धरादशो २१२१ वि
वाहकर्मवर्जिताइति ॥ ५ ॥ यवीयसींस्वापेक्षयावयसावपुषाचन्यूनांअरोगिणींअचिकित्स्यस्वजयक्ष्मादि

रोगरहितांभ्रातृमतीमितिपुत्रिकाकरणशंकानिवृत्त्यर्थं ॥ यत्रतुपुत्रिकाकरणाभावनिश्चयस्तामभ्रातृकामप्युद्वहे
त् ॥ असमानार्षगोत्रजांऋषेरिदमार्षंगोत्रप्रवर्तकस्यमुनेर्व्यावर्तकःप्रवरइत्यर्थः ॥ गोत्रंवंशपरंपराप्रसिद्धं ॥
स्वसमानेआर्षगोत्रेयस्यतज्जानभवातितां ॥ यास्कवाधूलमौनमौकानांभिन्नगोत्राणामपिभार्गववैतहव्यसा
वेतसेइतिप्रवरैक्यमस्तितत्रविवाहोमाभूदित्यसमानार्षगोत्रजामित्युक्तं ॥ आंगिरसांबरीषयौवनाश्वेतिमांधा
त्रंबरीषयौवनाश्वेति ॥ आंगिरसमांधातृप्रवरभेदेपियौवनाश्वेगोत्रैक्यंतादृशोविवाहवारणायासमानगोत्रजा
मित्युक्तं ॥ तथाचगोत्रप्रवरौपृथक्पर्युदासेनिमित्तभूतौ ॥ प्रवरैक्येविशेषमाहबौधायनः ॥ पंचानांत्रिषुसा
मान्यादविवाहस्त्रिषुद्वयोः ॥ भृग्वंगिरोगणेष्वेवंशेषेष्वेकोपिवारयेदिति ॥ गोत्रप्रवरनिर्णयःसपिंडसप्रवर
गोत्रविवाहप्रायश्चित्तादिचमहाग्रंथतोवसेयंविस्तरभियेहनोच्यते ॥ सापत्नमातामहकुलेष्वतिदेशिकात्सा
पिंड्यादविवाहः ॥ तथाचसुमंतुः ॥ पितृपत्न्यःसर्वामातरस्तद्भ्रातरोमातुलास्तद्भगिन्योमातृस्वसारस्तद्दुहि
तरश्चभगिन्यस्तदपत्यानिभागिनेयान्यन्यथासंकरणकारिणःस्युरिति ॥ अत्रयावद्वचनंवाचनिकमितिन्याये
नपरिगणितेष्वेवातिदेशिकंसापिंड्यंनतुपंचमसप्तमपर्यंतं ॥ क्वचित्तुवचनादेवविवाहनिषेधः ॥ तथागृह्य
परिशिष्टे ॥ अथविवाहइत्युपक्रम्यमध्येअविरुद्धसंबंधामुपयच्छेतेत्युक्त्वातेदंपत्योर्मिथःपितृमातृसाम्ये
विरुद्धसंबंधोयथाभार्यास्वसुर्दुहितापितृव्यपत्नीस्वसाचेतिस्त्रयमेवविरुद्धसंबंधेनिवृत्ते ॥ तथाचनारदः ॥
प्रत्युद्वाहोनैवकार्योनैकस्मैदुहितृद्वयं ॥ नचैकजातयोःपुंसोरेकजन्येचकन्यके ॥ नैवंकदाविदुद्वाहोनैकदामुं

डनद्वयं ॥ अन्यत्रापि ॥ एकजन्मेनुकन्येद्वेपुत्रयोर्नैकजन्मनोः ॥ नपुत्रीद्वयमेकस्मैप्रदद्यात्तुकदाचनेति ॥
अथवरगुणाः ॥ तत्रबुद्धिमतेकन्यांप्रयच्छेदितिगृह्यं ॥ यमः ॥ कुलंचशीलंचवयश्चरूपंविद्यांचवित्तंचस
नाथतांच ॥ एतान्गुणान्सप्तपरीक्ष्यदेयाकन्याबुधैःशेषमचिंतनीयं ॥ अन्यांपिगुणदोषविचारोग्रंथांतराद
वसेयः ॥ अन्यच्च ॥कुलेऋतुत्रयादर्वाक्मंडनान्नतुमुंडनं॥पुत्रोद्वाहान्नैवपुत्रीविवाहोपिऋतुत्रये ॥ अब्दांत
रान्मुंडनंचनैकदामुंडनद्वयं ॥ अब्दभेदेतुनदोषइतिसंहितासारावल्याम् ॥ फाल्गुनेचैत्रमासेतुपुत्रोद्वाहोप
नायने ॥ भेदादब्दस्यकुर्वीतिनर्तुत्रयविलंबनमिति ॥ देयकन्याकालोमहाग्रंथतोज्ञेयः ॥ वधूवरयोःबृहस्प
त्यादिशुद्धिर्विवाहेकालशुद्धिर्वर्णवश्यादिघटनांतेषुसाधकव्यवस्था ज्योतिषग्रंथेभ्योविवेचनीयेतिदिक् ॥
तथा ॥ ज्येष्ठमासेज्येष्ठगर्भस्यजन्मभाशौचसर्वेषांमंगलकार्यंनिषिद्धंरत्नकोशे ॥ जन्मर्क्षेजन्मदिवसेजन्म
मासेशुभंत्यजेत् ॥ ज्येष्ठमासाद्यगर्भस्यशुभंवर्ज्यंस्त्रियाअपीति ॥ ॥ इति विवाहेवरकन्यानिर्णयः समाप्तः ॥

॥ १०५ ॥ ॥ अथ कन्यादातृनिर्णय प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथकन्यादातारः ॥ तत्रयाज्ञवल्क्यः ॥ पितापितामहोभ्रातासकुल्योजननीत
था ॥ कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरःपरः ॥ अप्रयच्छन्समाप्नोतिभ्रूणहत्यामृतावृतौ ॥ गम्यत्वभावदातॄ
णांकन्याकुर्यात्स्वयंवरं ॥ स्वकुल्यप्रत्यासत्तिक्रमेणादौपितृकुलस्थस्तदभावेमातामहकुलस्थःसर्वाभावेजन
नी ॥ प्रकृतिस्थउन्मादादिदोषहीनःगम्यंगमनार्हंसावर्ण्यादिगुणयुक्तं ॥ नारदोपि ॥ पितादद्यात्स्वयंकन्या



भ्राताचानुमतेपितुः ॥ मातामहोमातुलश्चसकुल्योबांधवस्तथा ॥ मातात्वभावेसर्वेषांप्रकृतौयदिवर्तते ॥
तस्यामप्रकृतिस्थायांकन्यांदद्युःस्वजातयः ॥ यदातुनैवकश्चित्स्यात्कन्याराजानमाव्रजेदिति ॥ ॥ इति
कन्यादातृनिर्णयः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ १०६ ॥ ॥ अथ विवाह भेद प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथविवाहभेदप्रारंभः ॥ मनुः ॥ ब्राह्मोदैवस्तथाचार्षःप्रजापत्यस्तथासुरः ॥
गांधर्वोराक्षसश्चैवपैशाचस्त्वष्टमोमतः ॥ एतेषांलक्षणंफलंचालंकृतयकन्यामितिगृह्यखंडेवगंतव्यं ॥ एतेषां
व्यवस्थास्मृतौ ॥ चत्वारोब्राह्मणस्याद्याप्राज्ञांगांधर्वराक्षसौ ॥ राक्षसश्चासुरोवैश्येशूद्रेचांत्यस्तुगर्हितः ॥ अं
त्यःपैशाचः ॥ गांधर्वादिष्वपिभार्यापतिभावायपश्चाद्धोमादिसप्तपद्यंतंकार्यं ॥ गांधर्वासुरपैशाचाविवाहो
राक्षसश्चयः ॥ पूर्वंपरिग्रहस्तेषुपश्चाद्धोमोविधीयतेइतिपरिशिष्टात् ॥ होमाद्यभावेवरांतरायदेयासातितुनेति॥
बौधायनआह ॥ बलादपहृताकन्यामंत्रैर्यदिनसंस्कृता ॥ अन्यस्मैविधिवद्देयायथाकन्यातथैवसेति ॥ ब
लादितिछलादेरप्युपलक्षणं ॥ इत्यादिसर्वंविचार्यपरिवित्तिपरिवेत्तृत्वदिधिषुत्वादिचयथानस्यात्तथाविवा
हःकार्यः ॥ अस्माभिस्तुविस्तरभीतैर्नलिख्यते ॥ ॥ इति विवाह भेदःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ १०७ ॥ ॥ अथ वाग्दान प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथवाग्दानप्रारंभः ॥ अथमुख्यब्राह्मविवाहांगभूतवाग्दानविधिःगृह्यपरिशिष्टा

सुमासेषुशोभनमस्त्विातिद्विजान्प्रार्थयेत् ॥ तेचतथास्त्विातिब्रूयुः ॥ ततोद्विजांश्चंदनतांबूलदक्षिणादिनापूज यित्वातदाशिषोमंत्रोक्तागृण्हीयात् इत्यादिदेशकुलाचारानुसारेणकार्यं ॥ इति देवकोत्थापनंसमाप्तम् ॥

॥ १२० ॥ ॥ अथ वध्वाःप्रथम गृह प्रवेश प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथवध्वाःप्रथमगृहप्रवेशप्रारंभः ॥ वधूप्रवेशःप्रथमेतृतीयेशुभप्रदःपंचमकेतथा न्हि ॥ द्वितीयकेवाथचतुर्थकेवाषष्ठेवियोगःमयदुःखदःस्यात् ॥ लल्लः ॥ स्वभवनपुरप्रवेशेदेशानांविप्लवेत थोद्वाहे ॥ नवध्वागृहगमनेप्रतिशुक्रविचारणानास्ति ॥ माण्डव्यः ॥ नित्ययानेगृहेजीर्णेप्राशनांतेषुसप्तसु ॥ वधूप्रवेशमांगल्येनमौढ्यंगुरुशुक्रयोः ॥ ज्योतिःप्रकाशः ॥ वामेशुक्रेनवोढायाःसुखंहानिश्चदक्षिणे ॥ धनं धान्यंचपृष्ठस्थेसर्वनाशःपुरःस्थिते ॥ नवोढायास्तुवैधव्यंयदुक्तंसंमुखेभृगौ ॥ तदेवंविबुधैर्ज्ञेयंकेवलंतुद्विरा गमे ॥ पूर्वतोभ्युदितेशुक्रेप्रयायाद्दक्षिणापरे ॥ पश्चिमाभ्युदितेचैवयायात्पूर्वोत्तरेदिशौ ॥ तथाभाद्रपदमास मारभ्यपूर्वादिमुख्यदिक्षुप्रतिदिशंमासत्रयंकपाटंज्ञेयं ॥ चैत्रमारभ्यपूर्वाद्यष्टदिक्षुमुख्यदिशिमासद्वयंवि दिक्ष्वेकमासंक्रमेणकंटकंजानीयात् ॥ इदंद्वयंग्रामांतरेनववधूगमनेवर्ज्यं ॥ नियतकालेपिकदाचिन्निषेधमा हगर्गः ॥ व्यतीपातेचसंक्रांतौग्रहणेवैधृतावपि ॥ श्राद्धंविनाशुभंनैवप्राप्तकालेतिमानवः ॥ तथा ॥ अ मासंक्रांतिविष्ट्यादौप्राप्तेकालेपिनाचरेदिति ॥ ॐ इहप्रियंप्रजायांतेसमृध्यतामस्मिन्गृहेगार्हपत्याय



जागृहि ॥ एनापत्यातन्वं संसृजस्वाधाजिव्रीविदथमावदाथः ॥ इतिवधूंगृहंप्रवेश्यसवधूकोवरोगणप तिंलक्ष्मींचयथाचारंसंपूज्यपुण्याहंवाचयित्वाविप्राशिषोगृण्हीयात् ॥ विवाहात्प्रथमेपौषेआषाढेचाधिमासि के ॥ भर्तुर्गृहेस्त्रीनयायाच्चैत्रेतातगृहेतथा ॥ ॥ इति गृहगमन विधिः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ १२१ ॥ ॥ अथ विवाहे आशौचादि निर्णय प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथविवाहआशौचादिनिर्णयप्रारंभः ॥ विधिवत्कृतेकन्यामरणेत्रिरात्रादिव्रतस माप्तिपर्यंतंमध्येआशौचप्राप्तौतदपोह्यसद्यःशौचंविधीयतइतिचंद्रिकाकारआह ॥ तत्रयाज्ञवल्क्यः ॥ दाने विवाहेयज्ञेचसंग्रामेदेशविप्लवे ॥ आपद्यपिचकष्टायांसद्यःशौचंविधीयतइति ॥ दातुर्वरस्यकन्यायाःसद्यःशौ चंविधीयतइत्यर्थः ॥ बृहस्पतिः ॥ विवाहोत्सवयज्ञेषुत्वंतराम्तृतसूतके ॥ पूर्वसंकल्पितार्थेषुनदोषःपरिकी र्तितः ॥ षट्त्रिंशन्मते ॥ विवाहोत्सवयज्ञेषुत्वंतराम्तृतसूतके ॥ परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्तमैः ॥ विष्णुः ॥ व्रतयज्ञविवाहेषुश्राद्धेहोमार्चनेजपे ॥ प्रारब्धेसूतकंनस्यादनारब्धेतुसूतकं ॥ प्रारंभश्चतेनैवोक्तः ॥ प्रारंभवरणंयज्ञेसंकल्पोव्रतसत्रयोः ॥ नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेति ॥ नांदीमुखावधिश्चावश्य कत्वेधिकउक्तः ॥ एकविंशत्यहर्यज्ञेविवाहेदशवासराः ॥ त्रिषट्चौलोपनयनेनांदीश्राद्धंविधीयतइति ॥ ते नएकविंशत्याद्यहरंतःपातियथायज्ञादिभवतितथाआवश्यकेयज्ञादौपूर्वंश्राद्धंकुर्यादित्यर्थः ॥ प्रारंभाभावेपि कन्यायाःधार्यत्वेसन्निहितलग्नांतराभावेचहोमादिपूर्वकंविष्णुरनुज्ञामाह ॥ अनारब्धविशुध्यर्थंकूष्मांडैर्जु

हुयाद्भूतं ॥ गांदद्यात्पंचगव्याशीततःशुद्ध्यतिसूतकीति ॥ उपकल्पितबहुसंभारस्यापिसन्निहितलग्नांत राभावेनसंभारधारणाशक्तौआशौचाभावमाह ॥ विष्णुः ॥ नदेवप्रतिष्ठाविवाहयोःपूर्वसंभृतयोरिति ॥ अ थविवाहकालेकन्याऋतुमतीचेत्तत्राह ॥ यज्ञपार्श्वः ॥ विवाहेवितते तंत्रेहोमकालउपस्थिते ॥ कन्यांऋतु मतींदृष्ट्वाकथंकुर्वीतयाज्ञिकः ॥ स्नापयित्वातुतांकन्यामर्चयित्वायथाविधि ॥ युंजानामाहुतिंहुत्वाततःक र्मणियोजयेत् ॥ आहुतिमंत्रस्तैत्तिरीयशाखायां ॥ युंजानःप्रथमंमनस्तत्वायसविताधियः ॥ अग्निंज्योति र्निचाय्यअग्निपृथिव्याअध्याभरदिति ॥ यद्वा ॥ विवाहहोमेप्रक्रांतेयदिकन्यारजस्वला ॥ त्रिरात्रंदंपतीस्यातां पृथक्शय्यासनाशनौ ॥ चतुर्थेहनिसंस्नातौतस्मिन्नग्नौयथाविधिइति ॥ जुहुयातामितिशेषः ॥ ॥ इति विवाह आशौचादि निर्णयःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ १२२ ॥ ॥ अथ प्रसंगात्पुनर्विवाह विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ अथप्रसंगात्पुनर्विवाहउच्यते ॥ कृतेविवाहेपंचांगशुद्धिराहित्यादिदोषश्चेज्ज्ञातस्तदा ज्योतिःशास्त्रोक्तकालविशेषेपुनर्विवाहः कार्यः ॥ तदाहनृसिंहः ॥ श्रीधरीये ॥ पुनर्विवाहंवक्ष्यामिदंपत्योः शुभवृद्धिदं ॥ लग्नेंदुलग्नयोर्दोषेग्रहतारादिसंभवे ॥ अन्येष्वशुभकालेषुदुष्टयोगादिसंभवे ॥ विवाहे चापिदंपत्योराशौचादिसमुद्भवे ॥ तस्यदोषस्यशांत्यर्थंपुनर्वैवाह्यमिष्यते ॥ अयनंचोत्तरंश्रेष्ठंवर्षेयेत्तुविशे षतः ॥ आषाढमार्गशीर्षौद्वौवर्ज्यौदोषाःशुभावहाः ॥ विवाहोक्तर्क्षतिथ्यंशराशिवारादिवर्गजाः ॥ करणायोग



संज्ञानिग्रहगोचरयोगकाः ॥ तस्मिन्विवाहसमयेशुभदाश्चतथैवहि ॥ पूर्वाण्हेपूर्वरात्रौचविवाहःशुभदोभवे दिति ॥ ॥ इतिपुनर्विवाहः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ १२३ ॥ ॥ अथ द्वितीयादिविवाहविधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथद्वितीयादिविवाहविधिप्रारंभः ॥ तत्राधिवेदनीयाआहयाज्ञवल्क्यः ॥ सुरापी व्याधिताधूर्तावंध्यार्थघ्न्यप्रियंवदा ॥ स्त्रीप्रसूश्चाधिवेत्तव्यापुरुषद्वेषिणीतथा ॥ अधिविन्नातुभर्तव्यामहदे नोन्यथाभवेत् ॥ अधिवेत्तव्यातदुपरिरूयंतरंकर्तव्यमित्यर्थः ॥ आपस्तंबः ॥ धर्मप्रजासंपन्नेदारेनान्यांकु र्वीतेति ॥ अधिवेदनेप्रतीक्षाकालंमनुराह ॥ वंध्याष्टमेधिवेत्तव्यादशमेतुमृतप्रजा ॥ एकादशेस्त्रीजननी सद्यस्त्वप्रियवादिनीति ॥ संग्रहे ॥ अप्रजांदशमेवर्षेस्त्रीप्रजांद्वादशेत्यजेत् ॥ मृतप्रजांपंचदशेसद्यस्त्वप्रि यवादिनीं ॥ रत्यर्थेतुविवाहांतरेविशेषः ॥ एकामुत्क्रम्यकामार्थमन्यांलब्धुंयइच्छति ॥ समर्थस्तोषयित्वा र्थैस्त्वन्यांरम्यांसमुद्वहेत् ॥ याज्ञवल्क्यस्तु ॥ आज्ञासंपादिनींदक्षांवीरसूंप्रियवादिनीं ॥ त्यजन्दाप्यस्तृ तीयांशमद्रव्योभरणंस्त्रियः ॥ सधनोधनतृतीयांशमधनोऽशनाच्छादनात्मकभरणंदाप्यमित्यर्थः ॥ यात्वेता वतापरितुष्टागृहान्निर्गच्छेत्तांप्रत्याहमनुः ॥ अधिविन्नातुयानारीनिर्गच्छेद्रोषितागृहात् ॥ सासद्यःसन्निरो द्धव्यात्याज्यावाकुलसन्निधाविति ॥ बहुभार्योज्येष्ठयैवसहधर्मंसपत्नीकसाध्यंकुर्यादितिहेमाद्रौकात्यायनः॥ अग्निशिष्टादिशुश्रूषाबहुभार्यःसवर्णया ॥ कारयेत्तद्बहुत्वंचे[illegible]गगर्हितांनचेति ॥ शिष्टशुश्रूषाआति

श्यादिपूजा ॥ साचपत्नीसंपाद्यधर्ममात्रोपलक्षणार्था ॥ गार्हिताधर्मायोग्यत्वापादकपातित्यादिदोषवतीन
चेदित्यर्थः ॥ तादृशीचेन्नतदाकिंत्वनेवंविधयाकनिष्ठयापिकारयेत् ॥ याज्ञवल्क्यः ॥ सत्यामन्यांसवर्णा
यांधर्मकार्यंनकारयेत् ॥ सवर्णासुविधौधर्म्येज्येष्ठयानाविनेतरा ॥ अन्यांअसवर्णां ॥ इदंचाधानेसहाधिकृ
तानेकभार्याविषयं ॥ अनधिकृतायास्तुप्रसक्त्यभावएव ॥ तत्रापिकेवलक्रत्वर्थमाज्यावेक्षणादियजमानैर्दु
बरीसन्मानवदेकयैकसवर्णयाज्येष्ठयाकारयेत् ॥ पत्नीसन्नहनादितुकर्तृसंस्कारकंसहाधिकृताभिःसर्वाभि
रित्यादिमीमांसामांसलमनसांसुविज्ञानं ॥ स्मार्ताग्निसाध्येतुकर्मणिसर्वासांसहाधिकारः ॥ प्रथमविवाहा
ग्नावेवापरविवाहहोमविधानात्तदसंभवेग्निद्वयसंसर्गविधानाच्च अतस्तत्राप्युक्तएवकर्मसुकर्तृविवेकः ॥ द्विती
यादिविवाहेअग्निनियममाहहोमादि॥कात्यायनः॥ सदारोन्यान्पुनर्दारानुद्वोढुंकारणांतरात् ॥ यदिच्छेदग्नि
मान्कुर्वन्क्वहोमोस्यविधीयते ॥ स्वाग्नावेवभवेद्धोमोलौकिकेनकदाचनेति ॥ अयंचनियमासंभवेग्रामांतरा
दावसंभवेतुलौकिकाग्नौहुत्वातयोर्यथाकालंवक्ष्यमाणसंसर्गविधिःकार्यः ॥ अत्रद्वितीयादिविवाहेजीव
त्पितृकोपिस्वयमेवनांदीश्राद्धंकुर्यात् ॥ नांदीश्राद्धंपिताकुर्यादाद्येपाणिग्रहेपुनः ॥ अतऊर्ध्वंप्रकुर्वीतस्वय
मेवतुनांदिकमितिस्मृतेः ॥ तत्रपितृवर्गंविवाहायमातृमातामहवर्गयोः कुर्यात् ॥ मातरिजीवत्यांमातामहव
र्गस्यैवतस्मिन्नपिजीवतिद्वारलोपाद्वृद्धिश्राद्धलोपएव ॥ सोपिसाग्निकश्चेद्येभ्यः स्वयमेवदद्यात् ॥ येभ्यएव
पितादद्यात्तेभ्यःकुर्वीतसाग्निकइतिवचनात् ॥ अन्यअनग्निकोपिपितृदेवताभ्योदद्यात् ॥ नतुलोपः ॥ वृ



द्धौतीर्थेचसंन्यस्तेतातेचपतितेसति ॥ येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइतिमैत्रायणीयपरिशिष्टादित्या
दिरस्मत्कृतेत्रिस्थलीसेतौविस्तरोज्ञेयः द्वितीयादिविवाहकालविशेषउक्तःसंग्रहेप्रमदामृतवासरादितःपुनरु
द्वाहविधिर्वरस्यच ॥ विषमेपरिवत्सरेशुभोयुगुलेचापिमृतिप्रदोभवेत् ॥ जीवंत्यांपूर्वपत्न्यांद्वितीयादिवि
वाहेनायंकालनियमः ॥ इति द्वितीयादिविवाहविधिः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥

॥ १२४ ॥ ॥ अथ विवाहोत्तरकर्तव्यसमंत्रकस्थालीपाक प्रारंभः ॥

श्रीगणेशायनमः ॥ तत्रांगानामुक्तानामन्येष्वतिदेशेनस्थालीपाकप्राप्तेः ॥ सचविवाहानंतरंकर्तव्यगृहप्रवेश
नीयहोमोत्तरभाविन्यांपौर्णमास्यामारंभणीयः नत्वमावास्यायां ॥ चतुर्थीहोमात्प्रागपिपौर्णमासीचेत्तत्रारंभः॥
यदिचारंभकालेमलमासगुरुशुक्रास्तबाल्यवार्धकग्रहणपौषमासादिभवतितदापिप्रारंभःकार्यः ॥ यानितु
तत्रारंभनिषेधकानि ॥ उपरागोधिमासश्चयदिप्रथमपर्वणि ॥ तथामलिम्लुचेपौषेनान्वारंभणमिष्यते ॥
गुरुभार्गवयोर्मौढ्ये चंद्रसूर्यग्रहेतथेत्यादीनिसंग्रहकारादिवचनानितानिआलस्यादिनास्वकालानुपक्रांत
स्थालीपाकादिप्रारंभविषयाणीतिप्रयोगपारिजातकारः ॥ तथाचापरार्कस्थंगर्गवचनमुदाजहार ॥ नामक
र्मचदर्शेष्टिंयथाकालंसमाचरेत् ॥ अतिपातेसतितयोःप्रशस्तेमासिपुण्यभइति ॥ इतिस्थालीपाकप्रारंभ
कालः ॥ अथपर्वनिर्णयः ॥ ॥ पूर्णिमादर्शश्चपर्व ॥ तत्रान्वाधानंप्रतिपदीष्टिरित्युत्सर्गः ॥ तत्रपर्वचतु
र्थांशःप्रतिपदश्चाद्याःत्रयोंशाःसूर्योदयोत्तरमुहूर्तत्रयेविद्यमानोयागकालः ॥ सूर्यास्तमानपर्यंतंयत्रपर्वाखंडंतत्र

नसंदेहः ॥ यदितुखंडंपर्वतत्रनिर्णयः ॥ अन्हीमध्येततःपूर्वंव।पर्वप्रतिपदोःसंधौतदहर्याग:पूर्वेद्युरन्वाधानं॥
मध्यान्हात्परेसंधौतदहरन्वाधानंपरेद्युर्यागइति ॥ संधिश्चप्रतिपदो॰न्हासवृत्थ्योरर्धपर्वणि॰ ॰ेप्यज्ञेयः ॥
इष्टेःपर्वणिसमाप्तौपुनरिष्टेःकर्तव्यतापत्तेः साप्रतिपद्येवसमापनीयानपर्वमध्ये ॥ अपराण्हसंधौपरेद्युःप्रति
पच्चतुर्थांशेपियागेनदोषः ॥ चंद्रदर्शनदिनेइष्टिनिषेधवचनानिनिर्णायका।निसंभवेयोज्यानि ॥ यातुपौर्ण
मासीसंगवादूर्ध्वमावर्तनात्पूर्वंसंधिमतीसासद्यस्कालेतितस्यामेवान्वाधानंयागश्च ॥ अथविकृतौनिर्णयः ॥
आवर्तनेततःपूर्वंवापर्वसंधौतदहरादौप्रकृतियागंकृत्वापश्चादाग्रयणादिविकृतिःकार्या ॥ परसंधौतुविकृति
य।गएवसंधिदिनेप्रकृतिस्तुतदुत्तरदिनइति ॥ ॥ अथस्थंडिलकरणादिनिर्णयः ॥ तत्रचौलादिहोमोलौ
किकाग्नौ ॥ पार्वणस्थालीपाकश्रवणाकर्मादिहोमोगृह्याग्नौ ॥ तत्रलौकिकाग्नौहोमेस्थंडिलकरणादिअग्निप्र
तिष्ठापनांतोविधिर्नियतः ॥ गृह्याग्निहोमेपिगृहप्रवेशवास्तुहोमशूलगवान्वष्टक्यादिषुनियतः ॥ धार्यायतने
तदसंभवात् ॥ यदापिसमिदादावग्निसमारोपःतदागृह्याग्निकर्तव्येपिस्थालीपाकादौनियतः ॥ एतत्सर्वम
भिप्रेत्य ॥ यत्रक्वचहोष्यन्त्स्यादितिगृह्योक्ताग्निप्रतिष्ठापनविधेर्विषयंप्रदर्शयितुमाहकारिकाकारः ॥ प्रतिष्ठा
प्याथलेखासुहोमायालंहविर्भुजं ॥ एतदंतंप्रकुर्वीतहोष्यन्संस्थापितेनलइति ॥ अन्यथासंस्थापितेनले
होष्यन्नितिव्यर्थंस्यात् ॥ एवंस्थंडिलकरणादिविषयंनिर्णीयस्थंडिलादिकुर्यात् ॥ अथकर्मविशेषेग्निनामा
नि ॥ पावकोलौकिकोह्यग्निःप्रथमःसंप्रकीर्तितः ॥ अग्निस्तुमरुतोनामगर्भाधानेविधीयते ॥ ततःपुंसवने



ज्ञेयःपावमान्यस्तथैवच ॥ सीमंतमंगलोनामप्रबलोजातकर्मणि ॥ नाम्निवैपार्थिवोह्यग्निःप्राशनेतुशुचिः
स्मृतः ॥ सभ्योनामसचौलेतुव्रतादेशेसमुद्भवः ॥ गोदानेसूर्यनामाग्निर्विवाहेयोजकोमतः ॥ आवासथ्योद्वि
जोज्ञेयोवैश्वदेवेतुरुक्मकः ॥ प्रायश्चितेविटश्चैवपाकयज्ञेषुपावकः ॥ देवानांहव्यवाहश्चपितॄणांकव्यवाह
नः ॥ शांतिकेवरदःप्रोक्तःपौष्टिकेबलवर्धनः ॥ पूर्णाहुत्यामिलोनामक्रोधाग्निश्चाभिचारिके ॥ वश्यार्थेकाम
दोनामवनदाहेतुदूषकः ॥ कुक्षौतुजाठरोज्ञेयःक्रव्यादोमृतिदाहने ॥ वन्हिनामालक्षहोमेकोटिहोमेहुता
शनः ॥ समुद्रेवाडवोह्यग्निःक्षयेसंवर्तकस्तथा ॥ ब्रह्मावैगार्हपत्यश्चईश्वरोदक्षिणस्तथा ॥ विष्णुराहवनीयः
स्यादग्निहोत्रेत्रयोग्नयः ॥ ज्ञात्वैवमग्निनामानिगृह्यकर्मसमारभेत् ॥ स्मृत्यर्थसारेग्निनामानि ॥ तत्रयज
मानःकृतनित्यक्रियःशुचिःपरिहितधौतवासादर्भपाणिःपीठोपविष्टःप्राङ्मुखोवाग्यतोद्विराचम्यप्राणानाय
म्यदेशकालौसंकीर्त्यश्रीपर०र्थममुककर्मांक० ॥ तदंगहोमंकर्तुंस्थंडिलादिकरिष्ये ॥ इतिसंकल्प्य ॥ गो
मयादिलिप्तेशुद्धेदेशेशुद्धमृदाईशान्यारंभमुदक्संस्थंचतुरंगुलोन्नतमंगुलोन्नतंवाचतुर्दिक्षुमितित्वाद्विसप्तत्यं
गुलपरिमितंफलितमष्टादशांगुलविस्तृतंहोमानुसारेणतदाधिकंवानतुततोन्यूनंमध्योन्नतंस्थंडिलंकुर्यात् ॥ त
द्गोम॰नेनप्रदक्षिणमुपलिप्यदक्षिणेष्टौप्रतीच्यांचतुःउदीच्यांद्वेप्राच्यामर्धमित्यंगुलानित्यक्त्वादक्षिणोपक्रमामु
दक्संस्थांप्रादेशमात्रामेकांलेखांलिखित्वातस्यादक्षिणोत्तरयोःप्रागायतेपूर्वरेखयाअसंस्पृष्टेप्रादेशसंमितेद्वेले
खेलिखित्वातयोर्मध्येपरस्परमसंस्पृष्टाउदक्संस्थाःप्रागायताःप्रादेशसंमितास्तिस्रइतिषड्रेखायाज्ञियशकलमू

लेनदक्षिणहस्तेनोल्लिख्यलेखासुतच्छकलमुदगग्रंनिधायस्थंडिलमद्भिरभ्युक्ष्यशकलमाग्नेय्यांनिरस्यपाणिंप्र
क्षाल्यवाग्यतोभवेत्॥उल्लिखेदुदगायामान्तस्याउभयतोपरे॥पूर्वायतेउदक्संस्थेअसंस्पृष्टेचपूर्वया॥मध्येतिस्र
उदक्संस्थाःपूर्वायामाससंहताः॥लिखितायेनशकलंयाज्ञियंतंनिधायच ॥अद्भिरभ्युक्ष्यशकलंनिरस्यापउपस्पृ
शेत् ॥ ततस्तैजसेनासंभवेमृन्मयेनवापात्रयुग्मेनसंपुटीकृत्यसुवासिन्याश्रोत्रियागारात्स्वगृहाद्वासमृद्धंनिर्धू
ममग्निमाहृतंस्थंडिलादाग्नेय्यांनिधाय ॥ जुष्टोदमूनाआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप् ॥ एह्यग्नेराहूगणोगौतमोग्नि
स्त्रिष्टुप् ॥ अग्न्याह्वानेवि० ॥ ॐजुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् ॥ विश्वाअग्नेअभियुजो
प्रविहत्याशत्रूयतामाभराभोजनानि ॥ एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः॥ अवतांत्वारोदसीविश्व
मिन्वेयजामहेसौमनसायदेवान् ॥ इत्यक्षतैरावाह्यआच्छादनंदूरीकृत्य॥ समस्तव्याहृतीनांपरमेष्ठीप्रजापतिः
जापतिर्बृहती ॥ अग्निप्रतिष्ठापनेविनियोगः ॥ ॐभूर्भुवःस्वरित्यात्माभिमुखंपाणिभ्यांषट्लेखासुतत्तत्कर्मसु
विहितनामकममुकनामकमग्निंप्रतिष्ठापयामीत्यग्निंप्रतिष्ठाप्य ॥ प्रोक्षितेंधनानिनिक्षिप्यवेणुधमन्याप्रबोध्य
ध्यायेदेवम् ॥ चत्वारिशृंगागौतमोवामदेवोग्निस्त्रिष्टुप् ॥ अग्निमूर्तिध्याने० ॥ ॐचत्वारिशृंगात्रयोअस्य
पादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याआविवेश ॥ स्मृतिमंत्राश्च ॥ स
प्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षि
णेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामेघृतपात्रंचधारय



न् ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखोमम
संमुखोवरदोभव ॥ ततोयदिसमिदादौसमारोपितोग्निस्तर्हिप्रत्यवरोहणंकार्यं ॥ तच्चैवं ॥ प्रत्यवरोहेत्य
स्यहिरण्यगर्भोग्निस्त्रिष्टुप् ॥ अग्निप्रत्यवरोहणेविनियोगः ॥ ॐप्रत्यवरोहजातवेदःपुनःस्त्वंदेवेभ्योहव्यंवहनः
प्रजानन् ॥ प्रजांपुष्टिंरयिमस्मासुधेह्यथाभवयजमानायशंयोः ॥ इतिमंत्रेणसमारोपिताग्निंसमिधंस्थापिते
ग्नौप्रक्षिपेदिति ॥ एतदंतंसंस्थापितेग्नौहोमेकार्यं ॥ नित्यधारितहोमेतुनैतावत् ॥ ततःपार्वणस्थालीपा
केप्रधानदिनात्पूर्वदिनेसद्यस्कालायांपौर्णमास्यामशक्तौवाप्रधानदिनएवप्रातरौपासनंहुत्वान्वाधानंकुर्यात् ॥
तच्चेत्थं ॥ आचम्यप्राणानायम्यसमिद्वयंत्रयंवादायदेशकालौस्मृत्वाममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्री
त्यर्थंदर्शपूर्णमासाभ्यांस्थालीपाकाभ्यांयक्ष्ये ॥ तत्रेदानींपौर्णमासस्थालीपाकेनयक्ष्ये ॥ दर्शेतुपूर्वसंकल्पि
तेनदर्शस्थालीपाकेनयक्ष्यइतिविशेषः ॥ तत्रदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ इतिसंकल्प्यास्मिन्न
न्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजापतिंप्रजापतिंचाघारदेवतेआज्येनअग्नीषोमौचक्षुषीआज्येनअग्निम
ग्नीषोमौचप्रधानदेवतेचरुद्रव्येण ॥ दर्शेतुअग्निमिंद्राग्नीचप्रधानदेवतेचरुद्रव्येणेतिविशेषः ॥ शेषेणस्वि
ष्टकृतमग्निमिध्मसन्नहनेनरुद्रमयासमग्निंदेवान्विष्णुंअग्निंवायुंसूर्यंप्रजापतिंचैताः प्रायश्चित्तदेवताआज्ये
नज्ञाताज्ञातदोषनिबर्हणार्थंत्रिवारमग्निंमरुतश्चाज्येनविश्वान्देवान्संस्रावेणयक्ष्ये ॥ अंगदेवताः प्रधानदे

वताः सर्वाःसन्निहिताःसंतु ॥ एवंसांगोपांगेनकर्मणाश्वोयक्ष्ये ॥ सद्यस्कालेतुसद्योयक्ष्यइतिसंकल्प्यतूष्णीं
समस्तव्याहृतिभिर्वासमिद्धोमंकुर्यात् ॥ व्याहृतिपक्षेव्याहृतीनामित्यादिपूर्ववत् ॥ अन्वाधानसमिद्धोमे
वि० ॥ॐभूर्भुवःस्वःस्वाहेतिप्रजापतयइदंनममेतित्यागः ॥ तं वाग्निंधारयेत् ॥ संकटेतुतुभ्यंताइत्यृचाज्या
हुतिंहुत्वासमारोपयेत् ॥ तद्यथा ॥ तुभ्यंताविरूपोग्निर्गायत्री ॥ कृतान्वाधानाग्नेःसमारोपाधिकारार्थंप्रा
यश्चित्ताज्यहोमेविनियोगः ॥ ॐतुभ्यंताअंगिरस्तमविश्वाःसुक्षितयःपृथक् ॥ अग्नेकामायर्येमिरेस्वाहा ॥
अग्नयइदंनमम ॥ ततस्त्रिभिस्त्रिभिः कुशदलैः सव्यंपाणिमधोदक्षिणंचोपरिकुर्वन् ॥ पूर्वदलाग्रैरुत्तरद
लमूलैश्चत्रिसंधिंद्विगुणांरज्जुंकृत्वापुनर्दक्षिणमधः सव्यंचोपरिकुर्वन् ॥ तथैवत्रिगुणयेत् ॥ अंतेप्रदक्षिणं
ग्रंथिंदद्यात् ॥ एवंषट्त्रिंशद्दर्भदलैरेकारज्जुर्भवति ॥ ततस्तस्यामुदगग्रायांप्रादेशमात्रान्मुष्टिपरिमितान्
दर्भान्विधाय ॥ तयाबर्हिर्द्विरावेष्ट्यरज्ज्वग्रेणरज्जुमूलंसकृदावेष्ट्यतदग्रशेषंपूर्ववेष्टितरज्ज्वाधस्तान्निनीयपरि
स्तरणाद्यर्थदर्भैः सहाग्न्यायतनात्पश्चाद्भागोपरिनिदध्यात् ॥ ततोन्ययातादृशैवकृतयारज्ज्वाउदगग्रयापा
लाशंखादिरमसंभवेशमीवटादियज्ञियवृक्षमयमरत्निमात्रंवितस्तिमात्रंवापंचदशदारुकमिध्मंप्रागग्रंसकृदा
वेष्ट्यरज्ज्वग्रेणरज्जुमूलंसकृदावेष्ट्यपूर्ववन्निदध्यात् ॥ अत्रेध्माबर्हिषोर्बंधनेकेचिन्मंत्रानिच्छंति ॥ तत्रबर्हि
षि ॥ इंद्राण्यैः सन्नहनं ॥ पूषातेग्रंथिंग्रंध्नातु ॥ सतेमास्थादितिइध्मे ॥ यत्कृष्णोरूपंकृत्वाप्राविशस्त्वं

वनस्पतीन् ॥ ततस्त्वापंचदशधासंभरामिसुसंभृताइतिएकविंशतिधेत्यत्रपंचदशधेत्यूहेन ॥ अन्येत्वनूह
माहुः ॥ अपरेतुमंत्रौनेच्छंति ॥ ततःपत्नीअग्न्यायतनालंकरणंकुर्यात् ॥ ततोगंधादिभिःस्वशरीरेअलंकृ
त्यतद्दिनेकलहक्रयविक्रयप्रहासानृतबहुभाषणचौर्यादिव्यसनपर्यंकशयनदंतधावनकरंभकुलित्थकोद्रवच
णकमसुरवृंताकक्षारलवणकोरदूषकमधुमाषमांसमद्यपरान्नोपवासतैलमैथुनानिवर्जयंतौ ॥ दधिघृतपयोमि
श्रंहविष्यान्नंदिवैवसकृद्भुंजीयातां ॥ श्राद्धकर्ताश्राद्धशेषंमाषाद्यन्नंभुंजीत ॥ व्रतलोपेव्रात्यैःसहसंवेशने
वाउपोष्यत्वमग्नेव्रतपाइत्यृचाज्याहुतिंजुहुयात् ॥ त्वमग्नइत्यस्यवत्सोग्निर्गायत्री ॥ व्रतलोपजनितदोष
परिहारार्थमाज्यहोमेविनियोगः ॥ ॐत्वमंग्नेव्रतपाअंसिदेवआमर्त्येष्वा ॥ त्वंयज्ञेष्वीड्यःस्वाहा ॥ व्रतपा
ग्नयइदं० ॥ यद्वा ॥ निर्वापादिपूर्वकंव्रतपायाग्नयेपार्वणस्थालीपाकेनसमानतंत्रंचरुंप्रधानात्पूर्वंजुहुयात् ॥
ततःप्रतिपदिप्रातरौपासनंहुत्वाग्निंपरिसमुह्यपरिस्तृणीयात् ॥ तच्चेत्थं ॥ अग्न्यायतनादष्टांगुलपरिमितेदेशेऐ
शानींदिशमारभ्यप्रदक्षिणंसमंतात्सोदकेनपाणिनात्रिःपरिमृज्यपूर्वमुपरिनिहितदर्भैर्दशांगुलमितेदेशेप्राच्या
दिषुपरिस्तृणीयात् ॥ तत्रप्राच्यांप्रतीच्यांचोदगग्रादर्भाः ॥ अवाच्यामुदीच्यांचप्रागग्राः ॥ पूर्वपश्चात्परिस्तर
णमूलयोरुपरिदक्षिणपरिस्तरणंउत्तरपरिस्तरणंतुतदग्रयोरधस्तात् ॥तेचदर्भाअनियतसंख्याएकैकस्यांदिशिच
त्वारश्चत्वारइत्येवंषोडशवा ॥ ततोग्नेर्दक्षिणतोब्रह्मासनार्थंउत्तरतश्चपात्रासादनार्थंकांश्चित्प्रागग्रान्दर्भाना
स्तृणीयात् ॥ अग्नेरीशानतस्त्रिरंभसापरिषिच्यउत्तरास्तीर्णेषुदर्भेषुदक्षिणसव्यपाणिभ्यांक्रमेणचरुस्थाली

प्रोक्षण्यौदर्वीस्रुवौप्रणीताआज्यपात्रेइध्माबर्हिषीशूर्पंकृष्णाजिनेउलूखलमुसले चेतिद्वंद्वंद्वंउदगपवर्गंप्राक्संस्थंचन्युब्जान्यासादयेत् ॥आज्यमात्रहोमेतुप्रोक्षणीस्रुवौप्रणीताआज्यपात्रेइध्माबर्हिषीचेत्येतावतामेवासादनं ॥ ततःप्रोक्षणीपात्रमुत्तानंकृत्वातत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रकुशद्वयरूपेपवित्रेनिधायशुद्धाभिरद्भिस्तत्पात्रंपूरयित्वागंधपुष्पाक्षतादिक्षिप्त्वाहस्तयोरंगुष्ठोपकनिष्ठिकाभ्यांउदगग्रेपृथक्पवित्रेधृत्वाअपस्त्रिरुत्पूयपात्राण्युत्तानानिकृत्वाइध्मंचविस्रस्यसर्वाणिपात्राणित्रिःप्रोक्षयेत् ॥ ताआपःकिंचित्कमंडलौक्षिपेदित्येके ॥ ततोयथोक्तलक्षणमीशानदिगवस्थितंब्रह्माणमस्मिन्कर्मणिब्रह्माणंत्वामहंवृणइतितत्पाणिंपाणिनागृहीत्वावृणुयात् ॥ ततोब्रह्मव्रतोस्मीत्युक्त्वाप्राङ्मुखोयज्ञोपवीत्याचम्यसमस्तपाण्यंगुष्ठोभूत्वाग्रेणाग्निंपरीत्यदक्षिणतउदङ्मुखःस्थित्वाआसनार्थदर्भेषुदक्षिणभागस्थमेकंदर्भमंगुष्ठानामिकाभ्यांगृहीत्वानिरस्तःपरावसुरितिनैर्ऋत्यांनिरस्यापःस्पृष्ट्वेदमहमर्वावसोःसदनेसीदामीत्युक्त्वोदङ्मुखएववामोपरिदक्षिणपादंसंस्थाप्योपविश्यगंधाक्षतादिभिरर्चितःसन्॥ॐबृहस्पतिर्ब्रह्माब्रह्मसदनआशिष्यतेबृहस्पतेयज्ञंगोपायसयज्ञंपाहिसयज्ञपतिंपाहिसमांपाहीतिजपित्वासदायज्ञमनाएववर्तेत ॥ ततोयजमानःप्रणीतापात्रमग्नेःप्रत्यङ्निधायतत्रप्रागग्रेपवित्रेनिधायोत्पूताभिरद्भिःस्तत्पात्रंपूरयित्वागंधपुष्पाक्षतान्निक्षिप्यमुखसममुत्धृत्याग्नेरुत्तरतोदर्भेषुनिधायतेपवित्रेगृहीत्वान्यैर्दर्भैराच्छादयेत् ॥ ततःप्रत्यगग्नेःकुशेषुशूर्पंनिधायतत्रप्रागग्रेपवित्रेनिधायाग्नयेत्वाजुष्टंनिर्वपामीतिमंत्रावृत्याव्रीहीणांयवानांवाचतुरश्चतुरोमुष्टीन्निरूप्याग्नीषोमाभ्यांत्वाजुष्टंनिर्वपा



मीतितथैवनिरूप्यतेपवित्रेव्रीहीणामुपरिनिधायोत्पूताभिरद्भिरग्नयेत्वाजुष्टंप्रोक्षामीतिनिर्वापसंख्ययोत्पूताभिरद्भिःप्रोक्षयेत् ॥ एवमग्नीषोमाभ्यांत्वाजुष्टंप्रोक्षामीतितथैवप्रोक्षयेत् ॥ दर्शेतुअग्नीषोमस्थानेइंद्राग्निभ्यांत्वेत्यादिनिर्वापेप्रोक्षणेचविशेषः ॥ एवंनाममंत्रकहोमेनिर्वापप्रोक्षणंचयथाप्रधानदैवतंदेवतानामग्रहणेनकार्यं ॥ समंत्रकहोमेतुश्रवणाकर्मादौतूष्णींचतुरश्चतुरोमुष्टीन्निर्वपेत्प्रोक्षेच्च ॥ ततःपात्राणामुत्तरतःप्राग्रीवमास्तीर्णेऊर्ध्वलोम्निकृष्णाजिनेनिहितेउलूखलेमुसलेनपत्न्यवहत्यत्रिःशुक्लीकुर्यात्॥ तांस्त्रिःप्रक्षालितान्पृथक्पात्रेएकपात्रेवाअविदग्धमनवस्रावितमंतरूष्मपक्वंसुशृतंचरुंपचेत् ॥ ततःपवित्रेआज्यपात्रेनिधायतत्पात्रंपुरतःसंस्थाप्यतस्मिन्नाज्यमासिच्यअग्नेरुत्तरतःस्थितांगारान्भस्मनासहाग्नेरुदक्परिस्तरणाद्बहिर्निरूह्यतेष्वाज्यपात्रमधिश्रित्यज्वलतादर्भोल्मुकेनावज्वल्यांगुष्ठपर्वमात्रंप्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्यपुनर्ज्वलतातेनैवदर्भोल्मुकेनचरुणासहाज्यंत्रिःपर्यग्निकृत्वातदुल्मुकमपास्यापःस्पृष्ट्वातत्रस्थमेवाज्यं ॥ सवितुष्ट्वाहिरण्यस्तूपःसवितापुरउष्णिक् ॥ आज्यस्योत्पवनेविनियोगः ॥ ॐ सवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणवसोः सूर्यस्यरश्मिभिरितिमंत्रेणैकश्रुत्योच्चारितेनैकवारंद्विस्तूष्णींउत्तानपाणिद्वयांगुष्ठोपकनिष्ठिकाभ्यामंतयोरसंस्पृष्टगृहीताभ्यामुदगग्राभ्यांपवित्राभ्यांप्रागुत्पूयतेपवित्रेआद्भिःप्रोक्ष्याग्नौप्रहरेत् ॥ तूष्णींस्कंदायस्वाहेतिमंत्रेणोतिकोवेत् ॥ अथाग्नेःपश्चात्परिस्तरणाद्बहिरात्मनोग्रतोभूमिंप्रोक्ष्यतत्रबर्हिःसन्नहनींरज्जुमुदगग्रांप्रसार्यतस्यांबर्हिःप्रागग्रमुदगपवर्गमविरलमास्तीर्यतस्मिन्नाज्यपात्रंनिधायस्रुवादिसंमार्जयेत् ॥ तद्यथा ॥

दक्षिणेनहस्तेनस्रुक्स्रुवौगृहीत्वासव्येनकांश्चिद्दर्भानादायसहैवाग्नौप्रताप्यस्रुचंनिधायस्रुवंवामहस्तेगृहीत्वा
दक्षिणेनहस्तेनस्रुवस्यबिलंदर्भाग्रैः प्रागादिप्रागपवर्गंत्रिः सम्मृज्याधस्ताद्दर्भाग्रेणैवाभ्यात्मंबिलपृष्ठंत्रिः सम्मृ
ज्यततोदर्भाणांमूलैर्दंडस्याधस्ताद्बिलपृष्ठादारभ्ययावदुपरिष्टाद्बिलंतावत्त्रिः सम्मृज्याद्भिः प्रोक्ष्यस्रुवंनिष्टप्या
ज्यस्थाल्याउत्तरतः स्रुगस्पृष्टंनिधायोदकंस्पृष्ट्वातैरेवदर्भैर्जुहूंचैवमेवसंमृज्यस्रुवादुत्तरतोनिधायदर्भानद्भिः
क्षालयित्वाग्नावनुप्रहरेत् ॥ ततः सुशृतंचरुंस्रुवगृहीतेनाज्येनाभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्येननीत्वाज्याद्द
क्षिणतोबर्हिषिसांतरमासाद्यपुनरप्यभिघार्यहविःपृथक्करणायपात्रांतरंचर्वाज्ययोर्मध्येनिधायैकादशांगुलिमि
तेदेशेगंधाक्षतपुष्पैरग्निंसमंत्रमर्चयेत् ॥ तत्रमंत्रौ ॥ विश्वानिनइत्यनयोर्वसुश्रुतोग्निस्त्रिष्टुप् ॥ अग्न्यर्चनेवि
नियोगः ॥ ॐविश्वानिनोदुर्गहाजातवेदः ॥ सिंधुंननावादुरितातिपर्षि ॥ अग्नेअत्रिवन्नमसागृणानः ॥
अस्माकंबोध्यविताततूनां ॥ यस्त्वाहृदाकीरिणामन्यमानः॥अमर्त्यंमर्त्योजोहवीमि ॥जातवेदोयशोअस्मासु
धेहि ॥ प्रजाभिरग्नेअमृतत्वमश्यां ॥ ततःकृतप्रणतिमुद्रोऽग्निंप्रार्थयेत् ॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्ने
कृणवस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥ ततआत्मानंचालंकृत्यहस्तंप्रक्षा
ल्यइध्मबंधनरज्जुमिध्मस्थानेनिधायपाणिनेध्ममादायमूलमध्याग्रेषु स्रुवेणात्रिरभिघार्यमूलमध्ययोर्मध्यभागे
गृहीत्वा ॥ अयंतेवामदेवोजातवेदाअग्निस्त्रिष्टुप्॥इध्महवनेवि० ॥ॐअयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्ध



स्वचेत्धवर्धय चास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहेतीध्ममग्नावाधायजातवेदसेग्नयइदंनम
मेतित्यजेत्॥ततः स्रुवेणाज्यमादायाग्नेरायतनस्यवायव्यकोणमारभ्याग्नेयकोणपर्यंतंप्रजापतयइतिमनसास्म
रन्स्वाहेत्युच्चार्यनैरंतर्येणाज्यधारामग्नाविध्मदारूपरिहुत्वापुनराज्यमादायाग्नेरायतनस्यनैर्ऋत्यकोणतःईशा
नीपर्यंतंतथैवहुत्वात्यक्त्वाचस्रुवेणाज्यमादायाग्नयेस्वाहेत्यग्नेरुत्तरपार्श्वेपूर्वभागेहुत्वापुनराज्यंसोमायस्वाहे
त्यग्निदक्षिणपार्श्वेतत्समप्रदेशेहुत्वापूर्वनिहितपात्रेचरुमुद्धृत्यपृथक्कृत्यइदमग्नयेइदमग्नीषोमाभ्यामितिचरु
भागद्वयमुत्तरसंस्थमभिमृश्यावदानधर्मेणजुहुयात् ॥एवंनाममंत्रकहोमेयथादैवतंविभक्तस्यचरोरभिमर्शः॥स
मंत्रकहोमेतुनाविभागोनाभिमर्शश्च॥अथावदानधर्मः॥स्रुवेणस्रुच्याज्यमुपस्तीर्यप्रथमप्रधानदेवताचरुभागम
ध्यादंगुष्ठपर्वमात्रंतिरश्चीनाभिरंगुष्ठमध्यमानामिकाभिरुदगग्राभिर्नखसंस्पर्शमकुर्वन्नवदायदर्व्यामोप्यतत
श्चरुपूर्वभागंप्रागग्राभिस्ताभिस्तथैवावदायदर्व्यामोप्यपात्रस्थंहविरभिघार्यदर्वीस्थमवत्तंचाभिघार्यविधूम
ज्वालाग्नौअग्नयेस्वाहेत्याज्यभागयोर्मध्यदेशेतत्प्रत्यग्देशेवाआच्छादयन्निवदर्व्यावामपार्श्वेनहुत्वाअग्न
यइदंनममेतित्यक्त्वापुनःपुर्ववदुत्तरहविर्भागादवदायअग्नीषोमाभ्यांस्वाहेतिपूर्वाहुतेः प्राग्भावेहुत्वाग्नीषोमा
भ्यामिदंनममेतित्यजेत् ॥ पंचावत्तीतुदर्व्यामुपस्तीर्यमध्यात्पूर्वार्धात्पश्चार्द्धाच्चत्रिर्हविषोवदायाभिघार्यजुहु
यात् ॥पंचावत्तिनस्तु॥जामदग्न्यावत्सविदावार्ष्टिषेणास्तथैवच॥भार्गवाश्च्यावनाऔर्वाः पंचावत्तिनईरिताः॥द
र्शेतु ॥ अग्नीषोमस्थानेइंद्राग्निभ्यांस्वाहाइंद्राग्निभ्यामिदंनममेतिविशेषः ॥ पुनर्दर्व्यामुपस्तीर्यप्रथमहवि

भागस्योत्तरार्धतःपूर्वावदानतोभूयोनूचीनाभिरेवांगुलीभिरवदायदर्व्यामोप्याद्विती यहविर्भागस्यतथैवावदा
य ॥ पंचावत्तीतुहविर्भागद्वयेपिउत्तरार्द्धात्पूर्वार्द्धाच्चद्विर्द्विरवदायपात्रस्थमनभिघार्यावत्तंतुद्विरभिघार्य ॥ य
दस्येतिहिरण्यगर्भोग्निःस्विष्टकृदातिधृतिः ॥ स्विष्टकृद्धोमेविनियोगः ॥ ॐयदस्यकर्मणोत्यरीरिचंयद्वान्यून
मिहाकरं ॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वंस्विष्टंसुहुतंकरोतुमे ॥ अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्रायश्चित्ताहु
तीनांकामानांसमर्धयित्रेसर्वान्नःकामान्समर्धयस्वाहेतिएकश्रुत्योच्चार्यअग्नावीशानदेशेजुहुयात् ॥ स्विष्टकृ
तेग्नयइदंनममेतित्यागः ॥ ततोग्नेरुत्तरतः स्थितामिध्मबंधनरज्जुंविस्रस्यरुद्रायस्वाहेतिहुत्वापःस्पृष्ट्वास्रुवे
णसप्तप्रायश्चित्ताज्याहुतीर्जुहुयात् ॥ तत्रमंत्राः ॥ अयाश्चेतिविमदोयाळग्निःपांक्तिः ॥ प्रायश्चित्ताज्यहोमे
विनियोगः ॥ ॐअयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्त्वमयाअसि ॥ अयासावयसाकृतोयासन्हव्यमूहिषे
यानोधेहिभेषजंस्वाहेत्येकश्रुत्याजुहुयात् ॥ अयसेग्नयइदंनमम ॥ १ ॥ अतोदेवामेधातिथिर्देवागायत्री॥
सर्वत्रप्राग्वत् ॥ ॐअतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याःसप्तधामभिःस्वाहा ॥ देवेभ्यइदं०
॥ २ ॥ इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री ॥ प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधे
पदं ॥ समूळ्हमस्यपांसुरेस्वाहा ॥ विष्णवइदं०॥३॥व्यस्तसमस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजप्र
जापतयोग्निर्वायुसूर्यप्रजापतयोगायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि ॥प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐभूः



स्वाहा ॥ अग्नयइदं०॥४॥ ॐभुवःस्वाहा ॥ वायवइदं०॥५॥ ॐस्वःस्वाहा ॥ सूर्यायेदं०॥६॥ ॐभूर्भुवःस्वः
स्वाहा ॥ प्रजापतयइदं० ॥ ७ ॥ ततोब्रह्माकर्तारंपरीत्याग्नेर्वायव्यदेशेतिष्ठन्नेताएवसप्ताज्याहुतीर्जुहुयात् ॥
त्यागंयजमानोत्रकुर्यात् ॥ततस्तत्रस्थोब्रह्मैवमंत्रविपर्यासादिनियतनिमित्तेसति अनाज्ञातमितिमंत्रद्वयस्यहिर
ण्यगर्भोग्निरनुष्टुप् ॥ ज्ञाताज्ञातदोषपरिहारार्थंप्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐअनाज्ञातंयदाज्ञातंयज्ञस्य
क्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा ॥यजमानः ॥अग्नयइदं० ॥ पुरुषसम्मितो
यज्ञोयज्ञःपुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा ॥ यजमानःअग्नयइदंनमम ॥ य
त्पाकत्रेत्यास्यत्रितोग्निस्त्रिष्टुप् ॥ ज्ञाताज्ञातदोषपरिहारार्थंप्रायश्चित्ताज्यहोमेविनियोगः ॥ॐयत्पाकत्रामनसा
दीनदक्षानयज्ञस्यमन्वतेमर्त्यासः ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाꣳऋतुशोयजातुस्वाहा ॥ अ
ग्नयइदंनमम॥यद्वोदेवाअभितपामरुतस्त्रिष्टुप्॥मंत्रतंत्रकर्मविपर्यासादिनिमित्तकप्रायश्चित्ताज्यहोमेविनियोगः
ॐयद्वोदेवाअतिपातयानिवाचाचप्रयुतीदेवहेळनं ॥ अरायोऽअस्मांऽअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्त
न्निधेतनस्वाहा मरुद्भ्यइदंनममःस्कन्नभिन्नाद्यनियतानिमित्तेसतिवक्ष्यमाणप्रकारेणतत्तत्प्रतिपदोक्तजपहोमा
न्कुर्याद्ब्रह्मा ॥ ब्रह्मणोभावेयजमानएवैतान्प्रायश्चित्तादीन्कृत्वाऽन्यस्मैवरंदद्यात् ॥ ततोयजमानः ॥ स
र्वकर्मप्रपूरणींभद्रद्रव्यदांपूर्णाहुतिंजुहुयात् ॥ तद्यथा ॥ स्रुवेणाज्यंगृहीत्वास्रुचंसमाबिलांपूरयित्वा ॥ त

स्यांस्रुवमूर्ध्वबिलंनिधायपुनरधोबिलंनिक्षिप्यस्रुवाग्रेकुसुमाक्षतान्निधायसव्यपाणिनास्रुक्स्रुवमूलेधृत्वादक्षि
णपाणिनास्रुक्स्रुवंशंखमुद्रयागृहीत्वातिष्ठन्त्समपादऋजुकायःस्रुवाग्रेन्यस्तदृष्टिः प्रसन्नात्मा ॥ ॥ समु
द्रादूर्मिरित्येकादशर्चस्यसूक्तस्यवामदेवआपस्त्रिष्टुप् ॥ अंत्याजगती ॥ पूर्णाहुतौविनि० ॥ ॐसमुद्रादूर्मि
र्मधुमांउदारदुपांशुनासमंमृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिव्हादेवानाममृतस्यनाभिः ॥ वयंनाम
प्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः॥उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत्॥ चत्वारिशृंगा
त्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश ॥ त्रिधाहितं
पणिभिर्गुह्यमानंगविदेवासोघृतमन्वविंदन् ॥ इंद्रएकंसूर्यएकंजजानवेनादेकंस्वधयानिष्टतक्षुः ॥ एताअर्ष
तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराअभिचाकशीमिहिरण्ययोवेतसोमध्यआसां ॥१॥ॐ
सम्यक्स्रवंतिसरितोनधेनाअंतर्हृदामनसापूयमानाः ॥ एतेअर्षंत्यूर्मयोघृतस्यमृगाइवक्षिपणोरीषमाणाः ॥
सिंधोरिवप्राध्वनेशूघनासोवातप्रमियःपतयंतियह्वाः ॥ घृतस्यधाराअरुषोनवाजीकाष्ठाभिंदन्नूर्मिभिःपि
न्वमानः ॥ अभिप्रवंतसमनेवयोषाःकल्याण्यः स्मयमानासोअग्निं ॥ घृतस्यधाराःसमिधोनसंतताजु

षाणोहर्यतिजातवेदाः ॥ कन्याइववहतुमेतवाउअंज्यंजानाअभिचाकशीमि ॥ यत्रसोमःसूयतेयत्रय
ज्ञोघृतस्यधाराअभितत्पवते ॥ अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञंनयत
देवतानोघृतस्यधारामधुमत्पवंते ॥ धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यंतरायुषि ॥ अपामनी
केसमिथेयआभृतस्तमश्यामममधुमंतंतऊर्मिस्वाहा ॥ इतिपठन्यवपरिमितांधारांसंततांस्रुगग्रेणसशेषं
हुत्वा ॥ अग्नयइदंनममेत्युद्दिश्यत्यक्त्का ॥ विज्योतिषेत्यस्यजानोवृषोग्निस्त्रिष्टुप् ॥ ॐ विज्योतिषाबृह
ताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा ॥ प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृंगेरक्षसेविनिक्षे ॥ अनेनच
तथैवावशिष्टंहुत्वाअग्नयइदंनममेतित्यक्त्का ॥ विश्वेभ्योदेवेभ्यः स्वाहेतिसंस्रावंहुत्वा ॥ विश्वेभ्योदेवेभ्य
इदं० ॥ ततस्तंडुलकणान्समिद्दर्भशकलान्यद्भिः प्रोक्ष्याग्नौप्रहरेत् ॥ पूर्णाहुत्याद्येतदंतंसमूलंप्रयोगपा
रिजातकारेणलिखितमपिइदानींशिष्टानकुर्वंति ॥ विवाहादिक्रियायांचशालायांवास्तुपूजने ॥ नित्यहोमेवृ
षोत्सर्गेपूर्णाहुतिंनकारयेत् ॥ अथावभृथस्नानीयपूर्णपात्रजलेनमार्जनंकुर्यात् ॥ तद्यथा ॥ पूर्वासादितंपूर्ण
पात्रमास्तीर्णेबर्हिषिदक्षिणपाणिनानिधाय ॥ तत्रगंगादिपुण्यनदीःस्मरन्दक्षिणपाणिनास्पृशन् ॥ पूर्णम
सिपूर्णमेभूयाः सुपूर्णमसिसुपूर्णमेभूयाःसदसिसन्मेभूयाः सर्वमसिसर्वमेभूयाःअक्षितिरसिमामेक्षेष्ठाइतिज
पित्वाकुशाग्रैः प्रागादिपंचदिक्षुजलंमंत्रैर्यथालिंगंसिंचेत् ॥ तेचमंत्राः ॥ प्राच्यांदिशिदेवाऋत्विजोमार्जयं

तांदक्षिणस्यांदिशिमासाःपितरोमार्जयंतांप्रतीच्यांदिशिग्रहाःपशवोमार्जयंतामुदीच्यांदिश्यापओषधयोवन
स्पतयोमार्जयंतामूर्ध्वायांदिशियज्ञःसंवत्सरः प्रजापतिर्मार्जयतामित्येकश्रुत्यापठन्प्रतिदिशंसिक्त्वाकुशाग्रैः
स्वशिरसिमार्जयेत् ॥ तत्रमंत्राः ॥ आपोअस्मानित्यस्यदेवश्रवाआपस्त्रिष्टुप् ॥ मार्जनेविनि० ॥ ॐआपो
अस्मान्मातरःशुंधयंतुघृतेननोघृतप्वःपुनंतु ॥ विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि ॥ इदमा
पःसिंधुद्विपआपोनुष्टुप् ॥ मार्जनेवि० ॥ इदमापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाहमभिदुद्रोहयद्वाशेप
उतानृतं ॥ सुमित्र्यानआपओषधयःसंतु ॥ दुर्मित्र्यास्तस्मैसंतु ॥ इत्येतैर्मंत्रांतेमार्जनंकृत्वायोस्मान्द्वेष्टियं
चवयंद्विष्मस्तंहन्मिइतिनिर्ऋतिदेशेकुशाग्रैरपःसिंचेत् ॥ ततोब्रह्मा ॥ यजमानवामपार्श्वेस्थितपत्न्यंजलौ
पूर्णपात्रस्थंजलं ॥ ॐ माहंप्रजांपरासिचंयानःसयावरीस्थनं ॥ समुद्रेवोनिनयानिस्वंपाथोअपीथेतिमंत्रमे
कश्रुत्यापत्न्यावाचयन्स्वयंवापठन्प्रत्यङ्मुखंनिषिच्यांजलिस्थजलैः पापापनोदार्थमात्मानंयजमानंपत्नीं
चप्रोक्षयेत् ॥ पत्नीतज्जलंबर्हिषिनिषिंचेत् ॥ अथवायजमानएवस्ववामपाणावुत्तानेबर्हिषिनिधाय ॥ तत्र
दक्षिणपाणिनापूर्णपात्रमादाय ॥ माहंप्रजामित्यनेनतज्जलंप्रत्यङ्मुखंनिषिच्य ॥ ताआपःसमुद्रंगच्छंती
तिध्यात्वापाणिस्थजलैरात्मानंपत्नींचप्रोक्षयेत् ॥ ततःकर्ताग्नेर्वायव्यास्थितःसंस्थाजपेनोपतिष्ठेत ॥ तद्यथा
अग्नेत्वंनइतिचतसृणांगौपायनालौपायनावाबंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चैकर्चाऋषयः ॥ अग्निर्देवता ॥

द्विपदाविराट्छंदः ॥ अग्न्युपस्थानेविनियोगः ॥ ॐ अग्नेत्वंनोअंतमउतत्राताशिवोभवावरूथ्यः ॥ वसु
रग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः ॥ सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् ॥ तंत्वाशोचि
ष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ॥ ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरि
क्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ स्वस्तिश्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं आयुष्यंतेजआरो
ग्यंदेहिमेहव्यवाहन ॥ देहिमेहव्यवाहनोन्नमः ॥ ततोब्रह्मापितत्रैवस्थित्वाएतैरेवोपतिष्ठेत् ॥ ततःकर्ताआ
चारात् ॥ मानस्तोकेतिकुत्सोरुद्रोजगती ॥ विभूतिग्रहणेविनियोगः॥ॐमानस्तोकेतनयेमानआयौमानोगो
षुमानोअश्वेषुरीरिषः॥वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदामित्वाहवामहे ॥ इतिस्रुवबिलपृष्ठेनविभूतिंगृ
हीत्वा ॥ ॐ त्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्यायुषमितिकंठे ॥ अगस्त्यस्यत्र्यायुषमिति
नाभौ ॥ यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे ॥ तन्मेअस्तुत्र्यायुषमितिवामस्कंधे ॥ सर्वमस्तुशतायुषमिति
शिरसिधारयेत् ॥ केचित्तूपस्थानात्पूर्वंविभूतिधारणमाहुरिति ॥ ततःकर्तापरिस्तरणानिविसृज्याग्निंपरिस
मुह्यपरिषिच्यपुष्पादिभिरलंकृत्यनैवेद्यंतांबूलंचनिवेद्यब्रह्मणेयथोक्तदक्षिणांदक्षिणाभावेहुतशेषंघृतादिसहिर
ण्यंदत्त्वाब्रह्मविदन्यस्मैब्राह्मणायदत्त्वापात्राणिप्रक्षाल्यपूर्वक्रमेणद्वंद्वशउत्सृज्ययस्यस्मत्येतिश्रीविष्णुंनत्वाच
म्यधृतपवित्रग्रंथिंविस्रस्यशुद्धदेशेक्षिपेत् ॥ दर्शेतुअग्नीषोमस्थानेइंद्राग्नीइतरत्सर्वंसमानंतच्चदर्शितमेवसद्य

स्कालायांपौर्णमास्याममावास्यायांचोभयत्रवायागादिनएवप्रातर्होमानंतरमन्वाधायेध्मबर्हिषसिन्नह्योष्टिप्रयो
गंकुर्यात् ॥ ॥ इतिस्थालीपाकप्रयोगःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



## ॥ १२५ ॥ ॥ अथ अर्क विवाह विधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथअर्कविवाहविधिप्रारंभः ॥ तृतीयामानुषीविवाहस्यनिषित्धत्वात्तस्मिन्कर्तव्येऽ
र्कविवाहविधिः ॥ तृतीयानिषेधमाह्ममात्स्येकश्यपः ॥ तृतीयांमानुषींनैवचतुर्थीयःससुद्वहेत् ॥ पुत्रपौत्रा
दिसंपन्नःकुटुंबीसाग्निकोज्वलः ॥ उद्वहेद्रतिसिध्यर्थंतृतीयांनकदाचन ॥ मोहादज्ञानतोवापियदिगच्छेत्तु
मानुषींम् ॥ नश्यत्येवनसंदेहोगर्गस्यवचनंयथा ॥ अन्यत्रापि ॥ तृतीयांयदिचोद्वाहेत्तर्हिसाविधवाभवेत् ॥
चतुर्थादिविवाहार्थंतृतीयेर्कंसमुद्वहेत् ॥ आदित्यदिवसेवापिहस्तर्क्षेवाशनैश्चरे ॥ शुभेदिनेवापूर्वाह्णेकुर्याद
र्कविवाहकं ॥ देशादिब्रह्मपुराणेदर्शितं ॥ ग्रामात्प्राच्यामुदीच्यांचसुपुष्पफलसंयुतं ॥ परीक्ष्ययत्नतोधस्ता
त्स्थंडिलादियथाविधि ॥ व्यासः ॥ स्नात्वालंकृतवासास्तुरक्तगंधादिभूषितं ॥ सपुष्पफलशाखैकमर्कगु
ल्मंसमाश्रयेत् ॥ सुलक्षणेनसंयुक्तमर्कंसंस्थाप्ययत्नतः ॥ अर्ककन्याप्रदानार्थंआचार्यंकल्पयेत्पुरा ॥ अ
र्कसंनिधिमागत्यतत्रस्वस्त्यादिवाचयेत् ॥ नांदीश्राद्धंहिरण्येनअष्टवर्गान्प्रपूजयेत् ॥ पूजयेन्मधुपर्केणवरं
विप्रस्यहस्ततः ॥ यज्ञोपवीतंवस्त्रंचहस्तकर्णादिभूषणं ॥ उष्णोषगंधमाल्यादिवरायास्मैप्रदापयेत् ॥ स्व



हम्न्वाहितेग्नावित्याद्याघारांतमुत्क्वात्रप्रधानं ॥ वृहस्पतिंअग्निंवायुंसूर्यं प्रजापतिंचाज्येनशेषेणस्विष्टकृतमित्या
द्याघारांतंकृत्वा ॥ संगोभिरितिमंत्रस्यांगिरावृहस्पतिस्त्रिष्टुप् ॥ अर्कविवाहप्रधानाज्यहोमेविनियोगः ॥ ॐ
संगोभिरांगिरसोनक्षमाणोभगइवेदर्यमणंनिनाय ॥ जनेमित्रोनदंपतीअनक्तिवृहस्पतेवाजयाशूंरिवाजौस्वा
हा ॥ वृहस्पतयइदंनमम ॥ ॐयस्मैत्वंकामकामायवयंसम्राड्यजामहे ॥ तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिब
स्वाहा ॥ अग्नयइदं॰ ॥ ॐभूःस्वाहा ॥ अग्नयइदं॰ ॥ ॐभुवः स्वाहा ॥ वायवइदं॰ ॥ ॐस्वःस्वाहा ॥ सूर्या
येदं॰ ॥ ॐभूर्भुवस्वःस्वाहा ॥ प्रजापतयइदं॰ ॥ इतिहुत्वास्विष्टकृदादिहोमशेषंसमापयेत् ॥ ततआचार्यंसं
पूज्यतस्मैगोयुग्मंदक्षिणांदत्वा ॥ ममप्रीतिकरायेयंइतिमंत्रेणपुनः त्रिःप्रदक्षिणीकृत्यप्रार्थयेत् ॥ मयाकृतमिदं
कर्मस्थावरेषुजरायुणा ॥ अर्कापत्यानिनोदेहितत्सर्वंक्षंतुमर्हसि ॥ ततोमहाशांतिंपठेयुः ॥ अस्मिन्कर्मणिद
शब्राह्मणाभोज्याः ॥ त्रयोवा ॥ यथाशक्तिभूयसींदक्षिणांदत्वा ॥ ततश्चतुर्थेदिनेसद्योवापुनरर्कंसंपूज्यार्कंवि
सर्जयेत् ॥ ॐअभ्यारमिदद्रयोनिषिक्तंपुष्करेमधु ॥ अवतस्यंविसर्जने ॥ ॐउत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥
उपप्रयंतुमरुतःसुदानवइंद्रप्राशूर्भवासचा ॥ यस्मस्मृत्येत्यादि ॥ इतिअर्कविवाहविधिः समाप्तः ॥ छ ॥

## ॥ १२६ ॥ ॥ अथ संकष्टनाशनस्तोत्र प्रारंभः

श्रीगणेशायनमः ॥ ॥ अथ संकष्टनाशनस्तोत्र प्रारंभः ॥ ॥ नारदउवाच ॥ ॥ प्रणम्यशिरसादेवं

गौरीपुत्रंविनायकम् ॥ भक्त्याव्यासंस्मरेन्नित्यमायुष्कामार्थसिद्धये ॥ १ ॥ प्रथमंवक्रतुंडंचएकदंतंद्विती यकम्॥तृतीयंकृष्णपिंगाक्षंगजवक्त्रंचतुर्थकम्॥ २ ॥ लंबोदरंपंचमंचषष्ठंविकटमेवच ॥ सप्तमंविघ्नराजं चधूम्रवर्णंतथाऽष्टमम् ॥ ३ ॥ नवमंभालचंद्रंचदशमंतुविनायकम् ॥ एकादशंगणपतिंद्वादशंतुगजानन म् ॥ ४ ॥ एतानिद्वादशनामानित्रिसंध्यंयःपठेन्नरः॥नचविघ्नभयंतस्यसर्वसिद्धिकरप्रभो ॥ ५ ॥ विद्यार्थी लभतेविद्यांधनार्थीलभतेधनम् ॥ पुत्रार्थीलभतेपुत्रान्मोक्षार्थीलभतेगतिम् ॥ ६ ॥ जपेद्गणपतिस्तोत्रंष ड्भिर्मासैःफलंलभेत् ॥ संवत्सरेणसिद्धिंचलभतेनात्रसंशयः ॥ ७ ॥ अष्टानांब्राह्मणानांचलिखित्वायः समर्पयेत् ॥ तस्यविद्याभवेत्सर्वागणेशस्यप्रसादतः ॥ ८ ॥ ॥ इति श्रीनारदपुराणे संकटनाशनस्तो त्रंसंपूर्णम् ॥ ॥ श्रीसंकष्टनाशनार्पणमस्तु ॥ ॥ श्रीगजाननप्रसन्नोऽस्तु ॥ ॥ शुभमस्तु ॥छ॥

॥ १२७ ॥ ॥ अथ नवग्रहस्तोत्र प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ नवग्रहस्तोत्र प्रारंभः ॥ व्यासउवाच ॥ जपाकुसुमसंकाशंकाश्यपेयंमहा द्युतिम् ॥ तमोरिंसर्वपापघ्नंप्रणतोऽस्मिदिवाकरम् ॥ १ ॥ दधिशंखतुषाराभंक्षीरार्णवसमुद्भवम् ॥ नमा मिशशिनंसोमंशंभोर्मुकुटभूषणम् ॥ २ ॥ धरणीगर्भसंभूतंविद्युत्कांतिसमप्रभम् ॥ कुमारंशक्तिहस्तंतंमं गलंप्रणमाम्यहम् ॥ ३ ॥ प्रियंगुकलिकाश्यामंरूपेणाप्रतिमंबुधम् ॥ सौम्यंसौम्यगुणोपेतंतंबुधंप्रणमा म्यहम् ॥ ४ ॥ देवानांचऋषीणांचगुरुंकांचनसन्निभम् ॥ बुद्धिभूतंत्रिलोकेशंतंनमामिबृहस्पतिम् ॥ ५ ॥

हिमकुंदमृणालाभंदैत्यानांपरमंगुरुम् ॥ सर्वशास्त्रप्रवक्तारंभार्गवंप्रणमाम्यहम् ॥ ६ ॥ नीलांजनसमाभा संरविपुत्रंयमाग्रजम् ॥ छायामार्तंडसंभूतंतंनमामिशनैश्वरम् ॥ ७ ॥ अर्धकायंमहावीर्यंचंद्रादित्यविमर्द नम् ॥ सिंहिकागर्भसंभूतंतंराहुंप्रणमाम्यहम् ॥ ८ ॥ पलाशपुष्पसंकाशंतारकाग्रहमस्तकम् ॥ रौद्रंरौद्रा त्मकंघोरंतंकेतुंप्रणमाम्यहम् ॥ ९ ॥ इतिव्यासमुखोद्गीतंयःपठेत्सुसमाहितः ॥ दिवावायदिवारात्रौविघ्न शांतिर्भविष्यति ॥ १० ॥ नरनारीनृपाणांचभवेद्दुःस्वप्ननाशनम् ॥ ऐश्वर्यमतुलंतेषामारोग्यंपुष्टिवर्धनम् ॥ ११ ॥ ग्रहनक्षत्रजाःपीडास्तस्कराग्निसमुद्भवाः ॥ ताःसर्वाःप्रशमंयांतिव्यासोब्रूतेनसंशयः ॥ १२ ॥ इतिश्रीव्यासविरचितंआदित्यादिनवग्रहस्तोत्रंसंपूर्णम् ॥ ॥ श्रीसूर्यादिनवग्रहार्पणमस्तु ॥ छ ॥

॥ १२८ ॥ ॥ अथ चर्पट पंजरिकास्तोत्र प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथ चर्पटपंजरिकास्तोत्र प्रारंभः ॥ दिनमपिरजनीसायंप्रातःशिशिरवसंतःपुन रायातः ॥ कालःक्रीडतिगच्छत्यायुस्तदपिनमुंचत्याशापाशः ॥ १ ॥ भजगोविंदंभजगोविंदंभजगोविंदं मूढमते ॥ प्राप्तेसन्निहितेमरणेनहिनहिरक्षतिडुकृञ्करणे ॥ ध्रुवपद ॥ ॥ अग्रेवह्निःपृष्ठेभानूरात्रौचुबुक समर्पितजानुः ॥ करतलभिक्षास्तरुतलवासस्तदपिनमुंचत्याशापाशः ॥ भजगो० ॥ २ ॥ [illegible] पा र्जनसक्तस्तावन्निजपरिवारोरक्तः ॥ पश्चाद्धावतिजर्जरदेहेवार्तांपृच्छतिकोपिनगेहे [illegible] ० ॥ ॥ ३ ॥ जटिलीमुंडीलुंचितकेशःकाषायांबरबहुकृतवेषः॥ पश्यन्नपिचनप [illegible] कृतवे

षः ॥ भजगोविंदंभज० ॥ ४ ॥ भगवद्गीताकिंचिदधीतागंगाजललवक[illegible] स्यमु
रारिसमर्चातस्ययमोऽपिकरोतिनचर्चा ॥ भजगोविंदंभज० ॥ ५ ॥ अंगंगलितप[illegible] नंजा
तंतुंडम् ॥ वृद्धोयातिगृहीत्वादंडंतदपिनमुंचत्याशापिंडम् ॥ भजगोविंदं० ॥ ६ ॥ बाल[illegible] ास
क्तस्तरुणस्तावत्तरुणीरक्तः ॥ वृद्धस्तावच्चिंतामग्नः परेब्रह्मणिकोऽपिनलग्नः ॥ भजगोविंदंभजगो० ॥ ७ ॥
पुनरपिजननंपुनरपिमरणंपुनरपिजननीजठरेशयनं ॥ इहसंसारेभवदुस्तारेकृपयाऽपारेपाहिमुरारे ॥ भज
गो० ॥ ८ ॥ पुनरपिरजनीपुनरपिदिवसःपुनरपिपक्षःपुनरपिमासः ॥ पुनरप्ययनंपुनरपिवर्षंतदपिनमुंच
त्याशामर्षम् ॥ भजगोविंदंभज० ॥ ९ ॥ वयसिगतेकःकामविकारःशुष्केनीरेकःकासारः ॥ नष्टेद्रव्येकः
परिवारोज्ञातेतत्त्वेकःसंसारः ॥ भजगोविंदंभज० ॥ १० ॥ नारीस्तनभरनाभिनिवेशंमिथ्यामायामोहावे
शम् ॥ एतन्मांसवसादिविकारंमनसिविचारयवारंवारम् ॥ भजगोविंदंभजगो० ॥ ११ ॥ कस्त्वंकोऽहं
कुतआयातःकामेजननीकोमेतातः ॥ इतिपरिभावयसर्वमसारंविश्वंत्यक्त्वास्वप्नविचारम् ॥ भजगोविं
दं० ॥ १२ ॥ गेयंगीतानामसहस्रंध्येयंश्रीपतिरूपमजस्रम् ॥ नेयंसज्जनसंगेनचित्तंदेयंदीनजनायचवि
त्तम् ॥ भजगोविंदंभज० ॥ १३ ॥ यावज्जीवोनिवसतिदेहेकुशलंतावत्पृच्छतिगेहे ॥ गतवतिवायौदेहा
पायेभार्याबिभ्यतितस्मिन्काये ॥ भजगोविंदंभज० ॥ १४ ॥ सुखतःक्रियतेराभोगःपश्चाद्धंतशरीरेरोगः ॥
यद्यपिलोकेमरणंशरणंतदपिनमुंचतिपापाचरणम् ॥ भजगोविंदंभज० ॥ १५ ॥ रथ्याचपटविरचितकं





| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
| ऽऽश्लेषा. | मार्जार | उंदरो. | राक्षस. | अंत्य. | शोक. | सर्प. | अ.मु. | मंदलो. | ति.दा. | चक्राका. | ५ |
| मघा. | उंदरो. | मार्जार | राक्ष. | अंत्य. | नाश. | पितर. | अ.मु. | म.लो. | उग्रक्रूर | माला. | ५ |
| पूर्वा. | उंदरो. | मार्जार | मनु. | मध्य. | मृत्युप्र | भग. | अ.मु. | सुलोच | उग्रक्रूर | शय्या. | २ |
| उत्तरा. | गाय. | व्याघ्र. | मनु. | आद्य. | विद्या. | अर्यमा | उर्ध्वमु. | अंधलो | ध्रुवस्थि | पर्यंका. | २ |
| हस्त. | भैंस. | अश्व. | देव. | आद्य. | लक्ष्मी. | रवि. | ति.मु. | मं.लो. | लघुक्षि. | हस्ता. | ५ |
| चित्रा. | व्याघ्र. | गाय. | राक्षस. | मध्य. | शुभ. | ब्रह्मा. | ति.मु. | म.लो. | मृ.मै. | मौक्तिक. | ३ |
| स्वाती. | भैंस. | अश्व. | देव. | अंत्य. | अशु. | वायु. | ति.मु. | सुलोच | चरच. | प्रवाल. | १ |
| विशाषा. | व्याघ्र. | गाय. | राक्षस. | अंत्य. | अशु. | इंद्र. | अ.मु. | अंधलो | मि.सा. | तोरणा. | ४ |
| ऽनुराधा. | हरिण. | श्वान. | देव. | मध्य. | सर्वसि. | मित्र. | ति.मु. | मं. लो. | मृदुमै. | वरूका. | ४ |
| ज्येष्ठा. | मृग. | श्वान. | राक्ष. | आद्य. | क्षय. | इंद्र. | ति.मु. | म. लो. | ति. दा. | कुंडला. | ३ |
| मूळ. | श्वान. | हिरण | राक्षस. | आद्य. | हानिभ | राक्षस. | अ.मु. | सुलोच | ति. दा. | वांद्राका. | ११ |
| पूर्वाषाढा. | वानर. | मींढा. | मनुष्य. | मध्य. | हानि. | उदक. | अ.मु. | अं.लो. | उग्रक्रूर | शय्या. | ४ |
| उत्तराषाढा | नकुल. | सर्प. | मनुष्य. | अंत्य | बुद्धिप्र. | विश्वेदे. | उ. मु. | मं.लो. | ध्रु. स्थि | हस्तिका. | ३ |
| ऽभिजित्. | नकुल. | सर्प. | मनु. | अंत्य. | बुद्धिप्र. | ब्रह्मा. | ० | म.लो. | लघुक्षि | त्रिकोण. | ३ |
| श्रवण. | कपि. | मींढा. | देव. | अंत्य. | शुभ. | विष्णु. | उ. मु. | सु. लो. | चरचल | व्यक्ता. | ३ |
| घनिष्ठा. | सिंह. | ग ज. | राक्ष. | मध्य. | सुख. | वसु. | उ. मु. | अं. लो. | चरचल | वामन. | ४ |
| शततारका | अश्व. | मेष. | राक्षस. | आद्य. | कल्या. | वरुण. | उ. मु. | मं. लो. | चरचल | मृदंगा. | १०० |
| पूर्वाभाद्रप. | सिंह. | गज. | मनुष्य. | आद्य. | मृत्यु. | अजैक | अ.मु. | म. लो. | उग्रक्रूर | वर्तुला. | २ |
| उत्तराभा. | पशू. | सिंह. | मनुष्य. | मध्य. | लक्ष्मी. | अहि. | उ. मु. | सु. लो. | ध्रुवस्थि | यमला. | २ |
| रेवती. | सिंह. | गज. | देव. | अंत्य. | काम | सूर्य. | ति.मु. | अं.लो. | मृ. मै. | पर्यंका. | ३२ |

विषयका जानना ऐसा प्रयोजनीय है, कि बिना इस
सन्मार्गावलंभियोंका कार्य चलना ही कठिन किन्तु
संभव प्रतीत होता है, परंतु मुहूर्त्त विषयका उत्तम ग्र
न होनेसे यह त्रुटि दूर नहीं हो सकती है-इस अभाव
दूर करनेको यह ग्रन्थ हमने भाषा टीका समेत ब
सुवाच्य अक्षरोंमें छपवाया है, इसमें मुहूर्त्त विषयकी क
ईबात नहीं छोड़ी गई है, इससे सबको इसकी एक ए
प्रति अवश्य अपने अपने पास रखना उचित है। विलाय
कपडेकी बंधी हुई जिल्दका मूल्य १॥) डा. म. ।-)

### ताजिकनीलकंठी भाषाटीकासहित.

४२ यह ग्रन्थ ताजक विषयमें सर्व मान्य और शिरोध
है—इसकी अधिक प्रशंसा करना इस लिये उचित न
समझा जाता है, कि छोटेसे छोटे और वड़ेसे बड़े विद्वा
इसको सबही जानते हैं.इस ग्रन्थकी भाषा टीका बिस्त
रसे रसाला टीकाके अनुसार तथा कोश उत्तम हिं
भाषा कराई गई है—मूल्य १॥). डा.म. ।-) रक्खा

### सुश्रुत संहिता मूल भाषा टीका शारीरकके चित्र और अंग्रेज़ी कोष सहित.

४४ यह ग्रन्थ सांगोपांग सम्पूर्ण छपा हुआ तया
हमारे यहां मिलता है, इसकी भाषा टीका बहुत सर
है जो अल्पज्ञ मनुष्यकी समझनेभी बिना प्रयास आसक्त
है, यह ग्रन्थ आयुर्वेदके सबसे प्राचीन ग्रन्थोंमेंसे
इसीका आशय लेलेकर अथवा ज्योंका त्यों प्रकरणोंक
लेकर बहुतसे नवीन वैद्योंने अपने २ नामसे अने
ग्रन्थ रच दिये हैं—इसके दुर्बोध स्थानोंपर जेज्झुट
उल्लन आदि अनेक टीकाकारोंकी सम्मतिभी दीग
है वैद्यकके इस अखिल भंडारमें चिकित्सा संबंध
कोईभी ऐसा विषय नहीं छोडा गया है जिससे दूस
ग्रन्थोंकी अवश्यकता हो यदि पांचसौ रुपयेकी कीमत

अयनांशाः २२ चरषंडाः ६०।४८।२० अक्षप्रभाः

| ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३<br>३० | ३<br>३८ | ३<br>४६ | ३<br>५४ | ४<br>३ | ४<br>११ | ४<br>१९ | ४<br>२८ | ४<br>३६ | ४<br>४४ | ४<br>५३ | ५<br>१ | ५<br>१० |
| ७<br>४० | ७<br>४९ | ७<br>५९ | ८<br>९ | ८<br>१९ | ८<br>२९ | ८<br>३९ | ८<br>४९ | ८<br>५९ | ९<br>९ | ९<br>१९ | ९<br>३० | ९<br>४० |
| १२<br>४२ | १२<br>५२ | १३<br>३ | १३<br>१४ | १३<br>२६ | १६<br>३७ | १३<br>४९ | १४<br>० | १४<br>१२ | १४<br>२३ | १४<br>३४ | १४<br>४६ | १४<br>५७ |
| १८<br>२३ | १८<br>३५ | १८<br>४६ | १८<br>५८ | १९<br>९ | १९<br>२१ | १९<br>३२ | १९<br>४४ | १९<br>५५ | २०<br>७ | २०<br>१८ | २०<br>३० | २:<br>४२ |
| २४<br>१० | २४<br>२२ | २४<br>३३ | २४<br>४४ | २४<br>५५ | २५<br>७ | २५<br>१८ | २५<br>२९ | २५<br>४० | २५<br>५२ | २६<br>३ | २६<br>१४ | २६<br>२५ |
| २९<br>[illegible] | ३०<br>० | ३०<br>११ | ३०<br>२२ | ३०<br>३३ | ३०<br>४५ | ३०<br>५७ | ३१<br>७ | ३१<br>१८ | ३१<br>३० | ३१<br>४१ | ३१<br>५२ | ३२<br>३ |
| [illegible]<br>२६ | ३५<br>३८ | ३५<br>४९ | ३६<br>१ | ३६<br>१२ | ३६<br>२४ | ३६<br>३५ | ३६<br>४७ | ३६<br>५८ | ३७<br>१० | ३७<br>२२ | ३७<br>३३ | ३७<br>४५ |
| [illegible]<br>१३ | ४१<br>२५ | ४१<br>३६ | ४१<br>४७ | ४१<br>५८ | ४२<br>१० | ४२<br>२२ | ४२<br>३३ | ४२<br>४५ | ४२<br>५६ | ४३<br>७ | ४३<br>१९ | ४३<br>३० |
| ४६<br>[illegible] | ४७<br>८ | ४७<br>१८ | ४७<br>२८ | ४७<br>३८ | ४७<br>४८ | ४७<br>५८ | ४८<br>८ | ४८<br>१८ | ४८<br>२८ | ४८<br>३८ | ४८<br>४९ | ४८<br>५९ |
| [illegible]<br>० | ५२<br>११ | ५२<br>१९ | ५२<br>२७ | ५२<br>३६ | ५२<br>४४ | ५२<br>५२ | ५३<br>१ | ५३<br>९ | ५३<br>१७ | ५३<br>२६ | ५३<br>३४ | ५३<br>४३ |
| [illegible]<br>१३ | ५६<br>२२ | ५६<br>२९ | ५६<br>३६ | ५६<br>४३ | ५६<br>५१ | ५६<br>५८ | ५७<br>५ | ५७<br>१२ | ५७<br>२० | ५७<br>२७ | ५७<br>३४ | ५७<br>४१ |
| [illegible]<br>[illegible] | ०<br>० | ०<br>७ | ०<br>१४ | ०<br>२१ | ०<br>२९ | ०<br>३६ | ०<br>४३ | ०<br>५० | ०<br>५८ | १<br>५ | १<br>१२ | १<br>१९ |

अन्य ग्रन्थ खरीद लो तौभी इसकी समता नहीं कर-सकते है क्यों कि यह तो स्वयं धन्वन्तरिजीके मुखका उपदेश है इस ग्रन्थकी केवल विषयानुक्रमाणिका ९० पृष्ठमें हैं, शारीरिक संबंधी चित्र ४० पृष्ठमे हैं इस तरह सम्पूर्ण ग्रन्थ १४८० पृष्ठमें समाप्त है, कागज पुष्ट अक्षर टा. मुम्बई विलायती कपड़ेकी सुनहरी अक्षरोंकी जिल्द मुल्य डाक व्यय सहित १०)है.

### तिब्बअकबर.

४५ यद्यपि बहुतसे छोटे २ यूनानी ग्रन्थ अबतक छप चुके हैं, परन्तु ऐसा बड़ा और प्रतिष्ठित ग्रन्थ अबतक नहीं छपा था इसके लिये बहुतसे सज्जन मनुष्योंकी इच्छा थी इसमें रोगोंके निदान अत्यन्त अनोखे ढंगपर विस्तार पूर्वक दियेगये हैं. और उसके पासही उस रोग-की चिकित्सा तथा अनेक प्रकारके छोटे २ चुटकलों से लेकर बड़े २ नुसखे दियेगये हैं. हमारे आयुर्वेदमें जैसे चरक सुश्रुत वाग्भटादि ग्रन्थ बहुमान्य और प्रतिष्ठित हैं उसी तरह यूनानीमें यह ग्रन्थभी उच्चश्रेणीमें विराजमान है, यह बात कितनीही वार देखी गई है कि जब आयुर्वेदीय वैद्य और बड़े २ डाक्टर किसी रोगमें आशाहीन होजाते हैं तब यूनानी हकीमोंके छोटे २ नुसखेतीरसे अधिक काम दे जाते हैं । भारतवर्षमें सहस्रों मनुष्योंकी प्रकृति ऐसी बदल गई है, कि यूनानी इलाजही उनकी प्रकृति के अनुकूल पड़ताहै। इन सब बातोंको विचारकर हमने सोचाकि हमारी हिन्दी भाषा ऐसे अनुपम ग्रन्थसे सुशोभित क्यों नहो इसीसे हमने इसका भाषामें अनुवाद कराके बहुत चिकनेबाढ़िया कागज़पर छापा है, आशा है कि सब हकीम वैद्य अमीर गरीब इसकी एक२ प्रति अवश्य मंगाकर हमको आश्रय देंगे—यह ग्रन्थ प्रायः १३०० पृष्ठमें समाप्त हुआं है. मूल्य ७) डा. म. ॥=) है.

सागर,
भक्ति
दिये है.
डोराके,
नद ऐसे
सकते.
ा, सुंदर
आ.
चरित्र
भाषांतर

य नैमि-
संग्रह
.२ आ.
ळसे लेके
को बांच-
ा.३ आ.
ा कालसे
ा.२आ.
ळे न.छ
आ.
आ.
संपूर्ण बि-
.म.।=)

और न-
ा.
ा १आ.
ा. १आ.
ा.

१५ लघुजातक सटीक संस्कृत टी. किंमत ४ आ. मा. २ आ.
१६ चिमत्कार चिंतामणी संस्कृत टी. किं. ३ आ. मा. १आ
१७ शीघ्रबोध भा० टी० किं. ५आ. मा. २ आ.
१८ भड्डली भाषामें किं. २ आ. मा. १ आ.
१९ बालबोध जोतिष किं. २ आ. मा. १ आ.
२० लघुपारा सरी भा० टी० किं. २ आ. मा. १ आ.
२१ रासिमाला जोतिष इस्में बारह रासियोंका फल भाषामें है. उत्तम टायप ग्लेज कागद किं२आ. मा. १आ.
२२ मासस्तबक १३ महीनेंकी कथा किं. ६ रु. मा. १रु. ४आ.
२३ अमृतसागर किं. २ रु. मा. ८ आ.
२४ योगचिंतामणीभा. टी. बडीग्ले. का. किं. १।। रु. मा. ८आ.
२५ औषधिकल्पलता किं. ८ आ. मा. २ आ.
२६ नाडीज्ञान प्रकास किं. २ आ. मा. ॥ आ.
२७ नैन सुख किं. २ आ. मा. १ आ.
२८ एकादशी—माहात्म भा. टी. किं. १रु. मा. ४ आ.
२९ गरुड पुराण भा. टी. किं. १ रु. मा. ४ आ.
३० पुरुषोत्तम महात्म्य भा. टी. किं. १ रु मा. ४ आ.
३१ गीता भा. टी. दो. सहित बडे अक्षरोंमें किं. १रु. मा. ४आ.
३२ गीता गु. ३२पे. भा. टी. दो. सहित किं. १२आ. मा. २आ
३३ गीता महात्मभा. टी. दो. स. १८ अ. किं. १ रु. मा. ४आ
३४ मनुस्मृती भा. टी. किं २ रु. मा. ६ आ.
३५ अष्टावक्रगीत्ताभा. टी. दो. सहितब. अक्षरकिं. १। रु. मा
३६ हटयो प्रदी. ब. सं. टी. औरभा. दोनों किं. २रु. मा. ६ आ
३७ दैवज्ञ विनोद भा. टी. किं रु. २ मा. ६ आ.
३८ प्रेमसागर गुटका ध्याय २ पैं चित्रसाहित ग्लेच कागदमें सोखीन ग्राहक महाशयोंके लिये खास सुफारिससे छापाग या इस हेतुसे कि बडेको रखनेमे श्रम होता है यह मुसाफर वगैरहमेंभी पासमें रख सक्ते है किं. १ रु. मा. ४आ.

**वैद्यविनोद मूल और भाषा टीका सहित.**

३९ "यथानाम तथा गुण"की बात इसही ग्रन्थमें पाई जाती

